अनेन नामषट्केन सर्वेन्द्रियाविषयः सर्वेन्द्रियरहितः परमात्मा नित्यः परिपूर्णः प्रत्यगात्मत्वेनानुसन्धेय इत्युक्तं भवति। अत्र भगवता **सूत्रकारेण** अदृश्यत्वादिगुणकत्वं प्रधानस्यैव संभवतीति पूर्वपक्षं प्रापय्य परमात्मन एवेति सिद्धान्तितम्। श्रुतिस्तु— **अदृश्यमग्राह्यं अगोत्रं अवर्णं अचक्षुःश्रोत्रं तदपाणिपाद**मिति—

**अकृतः**—नित्यः, अभयः, अमृतः अचलः, कूटस्थः, ध्रुवो, मोक्षरूपः। स नित्यप्राप्तोऽपि अज्ञानेनावृतस्सन्नाभिव्यज्यते, ज्ञानादज्ञाननिवृत्तौ स्वयमेवाविर्भवति, तस्मान्न कर्मणां मोक्षहेतुत्वम्, किन्तु संशयविपर्यासरहितनिष्प्रपञ्चब्रह्मात्मत्वसाक्षात्काररूपसम्यग्ज्ञानेनैवाविर्भावः। न च वाच्यं **'यस्यैते चत्वारिंशत् संस्काराः स ब्रह्मणस्सायुज्यं सालोक्यञ्च गच्छति' 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः'** इत्यादिवाक्यपर्यालोचनया कर्मणामपि मोक्षहेतुत्वं सम्भवतीति। मोक्षस्य कर्मसाध्यत्वे स्वर्गादिवदनित्यत्वापातात्। न विज्ञानसमुच्चितस्य। तस्य कार्यब्रह्मप्राप्तिसाधनत्वात्।

तदुक्तं **सूतसंहितायां**—

**तत्र सायुज्यरूपाया मुक्तेस्साक्षात्तु साधनम्।**
**सम्यग्ज्ञानं न कर्मोक्तं न तयोश्च समुच्चयः।** इति।

तत्रैवान्यत्राप्युक्तम्—

**आत्मनः परमा मुक्तिर्ज्ञानादेव न कर्मणा।**
**ज्ञानं वेदान्तवाक्यानाम्महातात्पर्यनिर्णयात्।**
**उत्पन्नायां मनोवृत्तौ महत्यामम्बुजेक्षण।**
**अभिव्यक्तं भवेदेतत् ब्रह्मैवात्मविचारतः।**
**अनेनैवात्मनोऽज्ञानमात्मन्येव विलीयते।**
**विलीने स्वात्मनोऽज्ञाने द्वैतं वस्तु विनश्यति।**
**द्वैतवस्तुविनाशे तु शोभनाशोभना मतिः।**

लीयते मतिनाशेन रागद्वेषौ विनश्यतः ।
धर्माधर्मक्षयाद्देहो ज्ञात्वा देवमिति श्रुतिः ।
घटज्ञानात् घटाज्ञानं यथा लोके विनश्यति ।
तथाऽऽत्मज्ञानमात्रेण नश्यत्यज्ञानमात्मनः ।
रज्ज्वज्ञानविनाशेन रज्जुसर्पो विनश्यति ।
तथात्माज्ञाननाशेन संसारश्च विनश्यति ।
तस्मादज्ञानमूलस्य संसारस्य क्षयो हरे ।
आत्मनस्तत्त्वविज्ञानात्तत्त्वं ब्रह्मैव केवलम् ।

अन्यत्रापि—

बहुधा श्रूयते मुक्तिर्वेदान्तेषु विचक्षण ।
एका सालोक्यरूपोक्ता द्वितीया कमलेक्षण ।
सामीप्यरूपा सारूप्या तृतीया पुरुषोत्तम ।
अन्या सायुज्यरूपोक्ता सुखदुःखविवर्जिता ।
षड्भावविक्रियाहीना शुभाशुभविवर्जिता ।
सर्वद्वन्द्वविनिर्मुक्ता सत्यविज्ञानरूपिणी ।
केवलं ब्रह्मरूपोक्ता सर्वदा सुखलक्षणा ।
न हेया नाप्युपादेया सर्वसंबन्धवर्जिता ।
न दृष्टा न श्रुता विष्णो न चास्वाद्या न तर्किता ।
सर्वावरणनिर्मुक्ता न विज्ञेया निराश्रया ।
वाच्यवाचकनिर्मुक्ता लक्ष्यलक्षणवर्जिता ।
सर्वेषां प्राणिनां साक्षादात्मभूता स्वयंप्रभा ।
प्रतिबन्धविनिर्मुक्ता सर्वदा परमार्थतः ।
अविचारदशायान्तु प्रतिबद्धा स्वमायया ।

एषैव परमा मुक्तिः प्रोक्ता वेदान्तवेदिभिः ।
अन्याश्च मुक्तयस्सर्वा अपराः परिकीर्तिताः ।
जन्मनाशाभिभूताश्च तारतम्येन संस्थिताः ।
स्पर्धयोपहता नित्यं परतन्त्राश्च सर्वदा ।
सुखोत्तरा अपि श्रेष्ठा दुःखमिश्राश्च सर्वदा ।
एताश्च मुक्तयोऽन्येषां केषांचिदधिकारिणाम् । इति ।

अन्यत्रापि—

ज्ञानमेव महाविष्णो मोक्षसाधनमुच्यते ।
ज्ञानं वेदशिरोद्भूतमिति मे निश्चिता मतिः ।
अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम् ।
जायते तच्च विज्ञानं प्रसादादेव मे हरे । इति च ।

अत्र मुक्तिः पंचविधा—सामीप्य, सालोक्य, सारूप्य, सगुणसायुज्य, निर्गुणसायुज्य-भेदेन। अत्र केषांचिदूर्ध्वरेतःस्वाश्रमेषु यथोक्तधर्मानुष्ठानवतां सूर्योपलक्षितेन अर्चिरादिमार्गेण ब्रह्मलोकं गत्वा ब्रह्मसमीपेऽवस्थानं सामीप्यरूपा मुक्तिः। तथा च श्रुतिः---

तपःश्रद्धे येह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः ।
सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतस्स पुरुषो ह्यव्ययात्मा ॥ इति ।

केषांचित् प्रतिमादिषु विष्ण्वादिदेवतानामिव नामादिप्रतीकेषु देवतोपासकानां सालोक्य-रूपा मुक्तिः। अन्तरेणैव प्रतीकं स्वात्मनः पृथक्त्वेन विविधैश्वर्यविशेषविशिष्टतया देवतोपास-कानां केषांचित् सार्ष्टिता समानर्धिता सारूप्यम् । सगुणदेवतारूपमहंग्रहेणोपासीनानामुपास्य-देवतातादात्म्यं सायुज्यम् । अत्र सालोक्यसारूप्यसगुणसायुज्यरूपासु तिसृषु मुक्तिषु **'एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोति'** इति तैत्तिरीयश्रुतिः। यां तु ज्ञानफलभूता नित्यनिरतिशयानन्दाभिव्यक्तिलक्षणा सा निर्गुणसायुज्यरूपा पंचमी मुक्तिः तत्रापि **'य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽदित्यस्य सायुज्यं गच्छत्यथ**

यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं गच्छत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्मात् ब्रह्मणो महिमानमाप्नोती'ति तैत्तरीयके केवलकर्मिणां चन्द्रलोकप्राप्तिरुक्ता। 'य एवं विद्वानि'ति विद्वच्छब्दाभिहितप्रतीकाद्दयुपासनात्रयवतो' देवानामेव महिमान'मिति सालोक्यसारूप्यसायुज्यलक्षणास्तिस्रो मुक्तय उक्ताः। 'ब्राह्मणो विद्वानि'ति ब्रह्मनिष्ठस्तत्वज्ञानवानुच्यते। एतौ कर्मोपासनाप्राप्यत्वेनोक्तौ सूर्याचन्द्रमसोर्महिमानावेतादृशौ वै खलु सातिशयत्वानित्यत्वादिदोषोपेतत्वात् 'द्वितीयाद्वै भयं भवति' 'स एको मानुष आनन्दः' 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' 'प्लवा ह्येते अदृढा यज्ञरूपाः' 'अतोऽन्यदार्तम्' 'वाचारम्भणं विकारो नामधेयम्' 'ते तं भुक्त्वा स्वर्गलोकं विशालम्' 'कामात्मानः स्वर्गपराः' 'क्षरन्ति स्वर्गे सर्वा वैदिक्यो जुहोतियजतिक्रियाः' 'आब्रह्मभवनाल्लोकात् पुनरावर्तते जनः' 'यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोपि यच्चिन्तने विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः' 'यावद्विकारं तु विभागो लोकवत्' इति श्रुतिन्यायप्रसिद्धौ महिमानौ बुध्वा ब्राह्मणो विद्वान् प्रकृतिप्राकृतमलैरनास्कन्दितं परं ब्रह्म आत्मतया तद्भावं गतो ब्राह्मणः अभिजयति अभितः पराकरोति। यद्वा-एतौ महिमानौ सूर्याचन्द्रमसोर्ज्ञानानन्दैश्वर्याद्याविर्भावलक्षणौ विद्वान् ब्राह्मणोऽभिजयति आत्मत्वेन प्राप्नोति स्वात्मनो ज्ञानानन्दादिलेशत्वात् तयोरानन्दादिमहिम्नोः, स्वात्मन्येव पश्यति। 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः। 'सोऽश्नुते सर्वान् कामान् सह' 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' 'वामनीः' 'यद्यद्विभूतिमत् सत्वं श्रीमदूर्जितमेव वा। तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्' "यावानर्थ उदपाने सर्वतःसंप्लुतोदके। तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः।" इति श्रुतिस्मृतिभ्यः। तस्मात् ब्रह्मणो महिमानमाप्नोति" येन सम्यग्ज्ञानेनावच्छेदकविश्वादिसर्वोपाधीन् आत्ममात्रतया प्रविलाप्य तदुपहितज्ञानानन्दादीन् स्वात्ममात्रतया पश्यति विद्वान् तस्मात् ब्रह्मात्मैकत्व ज्ञानात् ब्रह्मणो निरस्तसमस्तोपप्लवानन्तसत्यपरमानन्दबोधैकतानस्य परमात्मनः स्वरूपभूतं महिमानं महत्त्वं अपास्तसमस्तातिशयपरमानन्दैकतानलक्षणं स्वात्मत्वेनाप्नोति।

एकत्वज्ञानेन व्यवधायकाविद्यानिवृत्तिरेव आप्नोतीत्युपचर्यते । **'ब्रह्मैव सन् ब्रह्माप्येती'** त्यादिश्रुतिभ्यः। प्रकृतश्रुतिस्तु—**नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्** इति॥

**अमूर्तः**—सर्वमूर्तिविवर्जितः । **दिव्यो ह्यमूर्तः** इति श्रुतिः ॥

**अप्राणः**—अविद्यमानः क्रियाशक्तिभेदवान् चलनात्मको वायुर्यस्मिन्नसावप्राणः ।

**अमनाः**— ज्ञानशक्तिभेदवत् सङ्कल्पाद्यात्मकं मनोऽविद्यमानं यस्मिन् सोयमनाः । **अप्राणोह्यमनाः** इति प्राणादिवायुभेदाः कर्मेन्द्रियाणि तद्विषयाश्च तथा बुद्धिमनसी बुद्धीन्द्रियाणि तद्विषयाश्च प्रतिषिद्धा वेदितव्याः। अत्र बाह्येन्द्रियाणामुपादानं विना मनस उपादानं श्रुत्यां मनसः प्राधान्यात्; तन्निरोधे कृते सर्वदुःखविनिर्मुक्ततया आत्मस्वरूपाभिव्यक्तिर्भवतीति । तदुक्तं **श्रीमत्पतञ्जलिना**—

**योगश्चित्तवृत्तिनिरोधः, तदा द्रष्टुः स्वरूपेऽवस्थानमिति** ।

उक्तञ्च **वासिष्ठे**—

**संकल्पसंक्षयवशाद्गलिते तु चित्ते संसारमोहमिहिका गलिता भवन्ति ।**

**स्वच्छं विभाति शरदीव खमागतायां चिन्मात्रमेकमजमाद्यमनन्तमन्तः** इति ।

**अप्राणो ह्यमनाश्शुभ्रः** इति श्रुतिः ।

**अक्षरात् परतः परः**—

**अक्षरात्** नामरूपबीजोपाधिलक्षितस्वरूपात् सर्वकार्यकरणबीजत्वेन उपलक्ष्यमाणत्वात् परं तत्त्वमुपाधिलक्षणमव्याकृताख्यमक्षरं सर्वविकारेभ्यः; तस्मात् अक्षरात् परः निरुपाधिकः पुरुष इत्यर्थः। **'दिव्यो ह्यमूर्त'** इत्यस्मिन् मन्त्रे शारीरप्रधानाभ्यां भिन्नः परमेश्वर एव प्रतिपादित इति भगवता बादरायणेन **विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ** इति सूत्रे प्रतिपादितम् । अत्रेयं श्रुतिः—

**अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात् परतः परः** इति ।

**अर्चिमत्**—दीप्तिमत् तद्दीप्त्या ह्यादित्यादिर्दीप्यते इति ।

**अणुभ्योऽणु**—सूक्ष्मात् सूक्ष्मतरम् ।

**यदर्चिमद्यदणुभ्योऽणुचेति** श्रुतिः ।

**अनश्नन्**—भोजनमकुर्वन्, भोक्तृभोज्ययोः प्रेरयितृत्वात् स्वयं नाश्नाति, किन्तु साक्षित्वेन पश्यतीत्यर्थः। **अनश्नन्नन्यो अभिचाकशीतीति** श्रुतिः ।

**अचिन्त्यरूपम्**—न चिन्तयितुं शक्यते अस्य रूपमिति अचिन्त्यरूपं, सर्वप्रत्ययाविषयस्वभावमिति यावत् । ननु आत्मा चेतनरूपः सर्वगतः सर्वप्रपञ्चविलक्षणोऽस्तीत्येवं चिन्तयितुं शक्यत्वात् कथमचिन्त्यरूपत्वमात्मन इति चेन्न, आत्मनश्चेतनत्वं नाम चेत्यप्रकाशकत्वं, तच्च चेत्यं विनाऽनुपपन्नं आत्मव्यतिरेकेण परमार्थतश्चेत्यस्यासंभवात्, अतः आत्मनश्चेतनत्वं न संभवति। तथा सर्वगतत्वमपि न सम्भवति, गमनक्रियाया अभावात् । एवं प्रपञ्चविलक्षणत्वमपि न संभवति स्वव्यतिरिक्तप्रपञ्चस्याभावात्, इत्थं अस्तित्वमपि न सम्भवति, आश्रयाभावात् । तस्मादुपपन्नमचिन्त्यरूपत्वमात्मनः । नन्वेवं चेत् वरघाताय कन्याविवाहन्यायवत् आत्मनोऽचिन्त्यस्वरूपत्वप्रदर्शनेन शून्यत्वमेवोपपादितमिति चेत्—मैवम्—अस्याः शङ्कायाः प्रश्नोत्तराभ्यां वासिष्ठरामायणे परिहृतत्वात् । तथा हि—कर्कटिप्रश्नः—

**एकस्यानेकसंख्यस्य कस्याणोरम्बुधेरिव ।**
**अन्तर्ब्रह्माण्डलक्षाणि लीयन्ते बुद्बुदा इव ।**
**किमाकाशमनाकाशं न किंचित् किंचिदेव किम् ।**
**गच्छन्न गच्छति च कः कस्तिष्ठन्नैव तिष्ठति ।**
**कश्चेतनोऽपि पाषाणः कश्च व्योमनि चित्रकृत् ।**
**अणौ जगन्ति तिष्ठन्ति कस्मिन् बीज इव द्रुमः ।**
**कस्मान्न किंचिच्च पृथक् भ्रम्यादीव महाम्भसः ।**

इति श्लोकचतुष्टयेन दश प्रश्नाः कृताः । तत्रोत्तरं श्लोकषट्केन मन्त्रिणा दत्तम् ।

एकस्यानेकसंख्यस्येति प्रश्नस्य श्लोकद्वयेनोत्तरम्—

**अनाख्यत्वादगम्यत्वान्मनःषष्ठेन्द्रियस्थितेः ।**
**चिन्मात्रमेवमात्माणुराकाशादपि सूक्ष्मतः ।**
**चिदणोः परमस्यान्तः कोटिब्रह्माण्डबुद्बुदाः ।**
**संभूयस्थितिमभ्येत्य लीयन्ते शक्तिपर्ययात्** । इति ।

अत्र अनाख्यत्वादित्यनेन अभिवदनव्यवहारस्य न विषय इत्युक्तम् । अगम्यत्वात् मनष्षष्ठेन्द्रियस्थितेः इत्यनेन अभिज्ञाव्यवहारस्याप्यविषय इत्युक्तम् । एवं चिन्मात्ररूप आत्मा अणुः, यतः आकाशादपि सूक्ष्मः, एवम्भूतचिद्रूपाणोः अन्तः कोटिब्रह्माण्डबुद्बुदाः अनुग्राहकचिच्छक्त्या संभूय संगम्य स्थितिमभ्येत्य शक्तिपर्ययात् शक्तिक्षयात् हेतोः लीयन्ते । अनेन अणौ जगन्ति तिष्ठन्ति कस्मिन्नित्यष्टमप्रश्नस्यापि उत्तरं दत्तमिति वेदितव्यम् ।

किमाकाशमनाकाशमिति द्वितीयप्रश्नस्य अर्धश्लोकेन उत्तरम् । **आकाशं बाह्यशून्यत्वात् अनाकाशश्च चित्त्वतः** इति । आकाशं—बाह्यवस्तुशून्यत्वात् ब्रह्मैवाकाशशब्दवाच्यम् । चिद्रूपत्वाज्जडाकाशविलक्षणञ्च ।

न किंचित् किंचिदेव किमिति द्वितीयप्रश्नस्यार्धश्लोकेनोत्तरम्—**न किंचिद्यदनिर्देश्यं वस्तुसत्तेति किंचन** इति । यत् यस्मात् अनिर्देश्यं इदन्तया निर्देष्टुं न शक्यते तस्मात् न किंचित् । वस्तुसत्तेति सर्ववस्तुसत्तारूपत्वात् किंचनापि भवति ।

कश्चेतनोऽपि पाषाण इति षष्ठप्रश्नस्य अर्धश्लोकेन उत्तरम्—**चेतनोऽसौ प्रकाशत्वाद्वेद्याभावाच्छिलोपमः** इति । प्रकाशरूपत्वात् चेतनः स्वव्यतिरिक्तवेद्यस्याभावात् शिलोपमः ।

कश्च व्योमनि चित्रकृदिति सप्तमप्रश्नस्यापि उत्तरमर्धश्लोकेन—**आत्मनि व्योमनि स्वच्छे जगदुन्मेषचित्रकृत्** इति । चिदाकाशरूपे स्वात्मनि जगदुन्मेषचित्रं करोतीत्यर्थः ।

कस्मात्किंचिन्न पृथक् भ्रम्यादीव महाम्भस इति नवमप्रश्नस्यार्धश्लोकेन उत्तरम्—

**तत्तन्मात्रमिदं विश्वमिति न स्यात्ततः पृथक्** इति। ब्रह्मणस्स्फुरणमेवेति विश्वं ततः पृथक् न भवतीत्यर्थः।

द्वैतमप्यपृथक् कस्मादिति दशमप्रश्नस्योत्तरमर्धश्लोकेन—**जगद्भेदोऽपि तद्भासमिति भेदोऽपि तन्मयः** इति। जगद्भेदोऽपि तस्य तद्रूपस्यात्मनः स्फुरणमेवेति तन्मय एव।

गच्छन्नगच्छति च क इति चतुर्थप्रश्नस्यार्धश्लोकेनोत्तरम्—**सर्वगस्सर्वसंबन्धात् निष्क्रियत्वान्नगच्छति** इति। सर्वगस्सर्वानुप्रविष्टस्सर्वसंबद्धः सर्वाकारश्चायमात्मा, गमेः प्राप्त्यर्थत्वात्, निष्क्रियत्वात् न गच्छति च।

कस्तिष्ठन्नैव तिष्ठतीति पंचमप्रश्नस्योत्तरं श्लोकार्धेन—**नास्त्यसावाश्रयाभावात् सद्रूपत्वादथास्ति च** इति। आश्रयस्य स्वव्यतिरिक्तस्याभावात् न काप्यसौ तिष्ठति, सर्वत्र परिपूर्णत्वेन सत्त्वात् तिष्ठति च।

तस्मात् नात्मनश्शून्यत्वशङ्कोपपत्तिः। नाप्यचिन्त्यरूपत्वानुपपत्तिः।

श्रुतिस्तु—**बृहच्च तद्दिव्यमचिन्त्यरूपम्** इति।

अथ **माण्डूक्योपनिषदि**---

**अन्तर्यामी**—अन्तः प्रविश्य सर्वेषां भूतानां यमयिता।

**ईश्वरगीतायां** चतुर्थाध्याये सनकादीन् प्रति शिववचनं—

**नाहं तपोभिर्विविधैर्न दानेन न चेज्यया।**
**शक्यो हि पुरुषैर्ज्ञातुमृते शक्तिमनुत्तमाम्।**
**अहं हि सर्वभूतानां अन्तस्तिष्ठामि सर्वगः।**
**मां सर्वसाक्षिणं लोके न जानन्ति मुनीश्वराः।**
**यस्यान्तरा सर्वमिदं यो हि सर्वान्तरः परः।**
**सोऽहं धाता विधाता च कालोऽग्निर्विश्वतोमुखः।** इति।

**ईशानसंहितायां** ब्रह्मा महेश्वरं प्रति—

**प्रेरकः सर्वभूतानामन्तर्यामी हृदि स्थितः।**
**त्वन्मायापहृतप्रज्ञो न जाने त्वां महेश्वर॥** इति

काशीखण्डे त्रयोविंशाध्याये शिवं प्रक्रम्य—

सर्वेषां शासकश्चासौ तस्य शास्ता न चापरः ।
स्वयं सृजति भूतानि स्वयं पाति तथात्ति च ।
सर्वज्ञ एकस्संप्रोक्तः स्वेच्छाधीनविचेष्टितः ।
तस्य प्रवर्तकः कोपि न हि नैव निवर्तकः इति ।

आदित्यपुराणे सप्तमाध्याये ब्रह्मा—

अन्तर्यामी स विश्वेशस्सर्वेषामेव देहिनाम् ।
भोक्ता हि सर्वयज्ञानां शङ्करः परमार्थतः । इति ।

ब्रह्माण्डपुराणे त्र्यशीतितमाध्याये नृसिंहं प्रति वीरभद्रः—

मयि त्वयि ब्रह्मणि च स्थितः सर्वत्र शङ्करः ।
न त्वं स्रष्टा न संहर्ता न स्वतन्त्रोऽसि कुत्रचित् ।
कुलालचक्रवच्छक्त्या प्रेरितोऽसि पिनाकिना ।
मन्त्रात्मा स पुमान् शम्भुः जपतां फलदश्च सः ।
सर्वात्मा सर्वकर्ता च प्रवर्तकनिवर्तकः ।
स्थिरधर्मा क्षयद्वीरो रुद्रो विश्वाधिकः प्रभुः ।
शास्ताऽशेषस्य जगतः न त्वं नैव चतुर्मुखः । इति

श्रीसुरेश्वरवार्तिके—

सदेवेत्यादिभिर्वाक्यैः कारणं ब्रह्म गीयते ।
सर्वज्ञः सर्वशक्तिश्च सर्वात्मा सर्वगो ध्रुवः
जगज्जनिस्थितिध्वंसहेतुरेष स ईश्वरः ।

**यः पृथ्व्याममृतस्सोसावन्तर्यामी जगद्गुरुः ।**
**हरिर्ब्रह्मापिनाकीति बहुधैकोऽपि गीयते ।** इति ।

**एषोऽन्तर्याम्येषयोनिरिति** श्रुतिः ।

**बृहदारण्यकेऽपि यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः** इत्याद्यधिदैवतादिसर्वयमयिता कश्चन श्रूयते । स किमधिदैवताद्यभिमानी देवतात्मा वा उत प्राप्ताणिमाद्यैश्वर्यः कश्चित् योगी वा अथवा प्रधानं अहोस्वित् परमात्मा अथवा शारीरः इति विचार्य भगवद्भिस्सूत्रकारैः **अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादि**त्यधिकरणे परमात्मव्यतिरिक्तानामन्तर्यामित्वासंभवात् परमेश्वर एव अन्तर्यामीति सिद्धान्तितम् ।

**अदृश्यम्**—प्रत्यक्षादिप्रमाणैरनवलोक्यम् ।

**अव्यवहार्यम्**—वचनादिव्यवहारगन्धरहितम् ।

**अलक्षणम्**—अलिंगं अननुमेयमित्यर्थः ।

**अचिन्त्यम्**—अन्तःकरणवृत्त्यविषयभूतम् ।

**अव्यपदेश्यम्**—विशेषशब्दैर्व्यपदेशायोग्यम् ।

**अद्वैतम्**—भेदविकल्परहितम् ।

अनेन नामषट्केन सर्वव्यवहारातीतः सच्चिदानन्दरूपः एकः अद्वयः प्रत्यगात्मा बोधितः । एवं प्रत्यगात्मनि यदा प्रतिबुद्धः तदा संसारविनिर्मुक्तो भवति । तदुक्तम्—

**अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।**
**अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥** इति ।

**अस्यार्थः**—योऽयं संसारी जीवः स उभयलक्षणेन तत्त्वाप्रतिबोधरूपेण बीजात्मना अन्यथाग्रहणलक्षणेन चानादिकालप्रवृत्तेन मायालक्षणेन स्वापेन ममायं पिता पुत्रोऽयं इमानि

गृहक्षेत्रादीनि अहमेषां स्वामी सुखी दुःखी क्षुधितोऽहं वर्धितश्चाहमनेनेत्येवंप्रकारान् स्वप्नान् स्थानद्वये पश्यन् सुप्तः यदा वेदान्तार्थतत्त्वाभिज्ञेन परमकारुणिकेन गुरुणा नासि त्वं संसारी किन्तु तत्त्वमसीति प्रतिबोध्यमानो भवति तदा एवं बुध्यते; कथम्, जन्मादिभावविकाररहितम् निवृत्ताज्ञानतत्कार्यं तुरीयमद्वैतमात्मानं बुध्यत इति। ननु प्रपञ्चनिवृत्त्या चेदद्वैतं प्रतिबुध्यते अनिवृत्ते प्रपञ्चे कथमद्वैतमिति चेत्—उच्यते—सत्यमेवं स्यात् यदि प्रपंचः स्यात्, नत्वस्ति रज्वां सर्प इव कल्पितत्वात्, न हि रज्वां कल्पितस्सर्पो विद्यमानः सन् विवेकतो निवृत्तः। न च माया मायाविना कल्पिता विद्यमाना सती पुनर्निवृत्ता। तदुक्तम्—

**प्रपंचो यदि विद्येत निवर्तेत न संशयः।**
**मायामात्रमिदं द्वैतं अद्वैतं परमार्थतः।** इति।

उक्तञ्च **श्रीविष्णुपुराणे—**

**तस्मान्न विज्ञानमृतेऽस्ति किंचित् क्वचित् कदाचिद्द्विज वस्तुजातम्।**
**ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्।**
**एकस्सदेकः परमः परेशः स वासुदेवो न तदन्यदस्ति।**
**एकस्समस्तं यदिहास्ति किंचित् तदच्युतो नास्ति परं ततोऽन्यत्।**
**सोऽहं स च त्वं स च सर्वमेतत् आत्मस्वरूपं त्यज भेदमोहम्।** इति।

श्रुतिस्तु — **अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतम्** इति।

<u>अमात्रः</u>—मात्रा अकारोकारमकाररूपास्समष्टिव्यष्ट्यात्मकविश्वतैजसप्राज्ञविराड्हिरण्यगर्भेश्वरात्मकाः यत्र तुरीये न सन्ति सोऽमात्रः। अपरिच्छिन्नस्सर्वव्यवहारातीत आत्मेत्यर्थः।

तदुक्तम्—**अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमश्शिवः** इति।
**अमात्रश्चतुर्थोऽव्यवहार्यः** इति श्रुतिः।

तैत्तरीयके—

<u>असत्</u>—व्याकृतनामरूपविशेषविपरीतमव्याकृतं ब्रह्मोच्यते, न पुनरत्यन्तमेवासत्, नह्यसतस्सज्जन्मास्ति, **तदात्मानं स्वयमकुरुते**ति वाक्यशेषविरोधाच्च, तस्मात् असच्छब्देन अनभिव्यक्तनामरूपात्मकं ब्रह्मैवोच्यते। तदुक्तं **सूत्रकारैः---असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्** इति। श्रुतिस्तु—**असद्वा इदमग्र आसीत् ततो वै सदजायत तदात्मानं स्वयमकुरुत** इति।

<u>अनात्म्यम्</u>—अशरीरं।

<u>अनिरुक्तम्</u>---अविशेषम्। विशेषश्च विकारः अन्तःकरणादिः तद्रहितम्।

<u>अनिलयनम्</u>---निलीयतेऽस्मिन्निति निलयनम्माया तद्रहितम्। अनेन शरीरत्रयविलक्षणमात्मानं ब्रह्म बुध्वा ब्राह्मणो निर्भयो भवेदिति उक्तं भवति। श्रुतिस्तु—**अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति** इति।

<u>अद्भुतम्</u>—आश्चर्यकरम्, सकलप्रपञ्चविलक्षणं परमानन्दरूपं ब्रह्मेत्यर्थः। **सद्सस्पतिमद्भुत**मिति श्रुतिः।

<u>अक्रतुः</u>—विविधभोगसंकल्परहित इत्यर्थः। परमानन्दस्वरूपत्वात्। तथा च मुमुक्षुरपि बन्धरूपं भोगसंकल्पं त्यक्त्वा परमानन्दरूपं परमात्मानमात्मत्वेन ज्ञात्वा विमुक्तो भवतीति। तथाचोक्तं **वासिष्ठे**---

**बहुनात्र किमुक्तेन संक्षेपादिदमुच्यते।**
**संकल्पनं परो बन्धस्तदभावो विमुक्तता।** इति।

श्रुतिस्तु—**तमक्रतुः पश्यति वीतशोकः** इति।

<u>अमृतस्य</u> **नाभिः**---अमृतत्वस्य मोक्षस्य नाभिः कारणम्। **जिह्वा देवानाममृतस्य नाभिरि**ति श्रुतिः।

**अच्युतः ।** च्युतिरहितः । षड्भावविकाररहित इत्यर्थः । **महाभारते द्रोणपर्वणि** शताधिकाष्टाशीतितमाध्याये अश्वत्थामानं प्रति व्यासवचनम्—

योऽसौ नारायणो नाम पूर्वेषामपि पूर्वजः ।
आदिदेवो जगन्नाथो लोककर्ता स्वयं प्रभुः ।
आद्यस्सर्वस्य लोकस्य अनादिनिधनोऽच्युतः ।
व्याकुर्वते यस्य तत्त्वं श्रुतयो मुनयश्च ह ।
अतोऽजय्यः स्सर्वभूतैर्मनसापि जगत्पतिः ॥ इति ।

**कूर्मपुराणे** षड्विंशाध्याये—

अपश्यंश्च महात्मानं कैलासगिरिवासिनः ।
पूजयांचक्रिरे कृष्णं देवदेवेशमच्युतम् ।
चतुर्भुजमुदाराङ्गं कालमेघसमप्रभम् ।
किरीटिनं गदापाणिं श्रीवत्साङ्कितवक्षसम् ।
दीर्घबाहुं विशालाक्षं पीतवाससमच्युतम् ।
दधानमुरसा मालां वैजयन्तीमनुत्तमाम् ।
भ्राजमानं श्रिया देव्या युवानमतिकोमलम् ।
पद्माङ्घ्रिं पद्मनयनं सुस्मितं सुभगाकृतिम् । इति ।

श्रीविष्णुपुराणे—

अनादिमध्यान्तमजमवृद्धिक्षयमच्युतम् ।
प्रणतोऽस्म्यन्तरात्मानं सर्वकारणकारणम् । इति ।
यस्मिन् न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
विघ्नो यत्र निवेशितात्ममनसो ब्रह्मादिलोकोऽल्पकः ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययः
किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते । इति च ।

**शाश्वतं शिवमच्युतं** इति श्रुतिः ।

**अंबिकापतिः**—अम्बिका संविद्रूपा पराशक्तिः, तस्याः पतिः तदभिन्नः परशिवः । ननु शक्तेर्जडरूपत्वात् कथं संविद्रूपत्वमिति चेत्—उच्यते—द्विविधा हि शक्तिः । चिच्छक्तिर्जडशक्तिश्चेति । तत्र चिच्छक्तिः परशिवादभिन्नैव । तयोः भेदस्तु भ्रान्तः । यथा जीवपरयोः । जडशक्तिस्तु माया स्वाश्रयव्यामोहकारिणी । सा च चिद्रूपे परमात्मनि स्वरूपेणाध्यस्ता सत्वासत्वाभ्यामनिर्वचनीया सम्यग्ज्ञानेन निवर्त्या च । तथाहि— नियतकालपरिपाकानां हि प्राणिकर्मणां मध्ये परिपक्वानामुपभोगेन प्रक्षयात् इतरेषाञ्चापरिपाकात् भोगाभावेन तदर्थायाः सृष्टेरनुपयोगात् प्राकृत प्रलये ग्रस्तव्यस्तसमस्तप्रपञ्चा माया स्वप्रतिष्ठे निष्कले परशिवे विना यावदवशिष्टकर्मपरिपाकं वर्तते ।

उक्तं हि—

**प्रलये प्राकृते तस्यां चराचरमिदं जगत्** । इति ।
**तथा जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।**
**तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते ।**
**वायुः प्रलीयते व्योम्नि तदव्यक्ते प्रलीयते ।**
**अव्यक्तं पुरुषे ब्रह्मन् निष्कले संप्रलीयते** । इति ।

अव्यक्तं माया, तस्याश्च सम्यक् प्रलयो नाम मुक्ताविव नात्यन्तिको विनाशः, किन्तु सुषुप्तौ सतीनां मायागोचरवृत्तीनामप्यभावात् स्वप्रतिष्ठपरमात्मप्रकाशस्यात्यन्तनिर्विकल्पकतया तद्बलात् भासमानाया अपि अत्यन्ताप्रतिभानप्रायत्वम्; नपुनरनवभानमेव, प्रतिभामात्रशरीरस्य हि मिथ्यावस्तुनः अनवभाने सति अभाव एव स्यादिति । न चाभावएवास्तु ; उत्तरसर्गाभावप्रसङ्गादिति । अवशिष्टैः प्राणिकर्मभिश्च तस्यां मायायां विलीयैव क्रमेण प्राप्तपरिपाकैः स्वफलप्रदानाय परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जन्यते । सैषा मायावस्था ईक्षति-काम्यति-तप आदिशब्दैरभिधीयते । **तदैक्षत बहुस्यां प्रजायेयेति** **छान्दोग्ये** । **तदैक्षतलोकान्नुसृजा इत्यैतरेयके** । **सोऽकामयत बहुस्यांप्रजायेयेति** **तैत्तरीयके** । **तपसाचीयतेब्रह्मेति** **मुण्डके** । परमेश्वरोपि तत्संबन्धवशात् किंचित् स्वप्रतिष्ठतां अविज्ञाय जगत्सृष्ट्युन्मुखो भवति । नन्वसंङ्गोदासीनस्य परानन्दरूपस्याविक्रियस्य मायावष्टम्भेन कुतो जगत्सृष्ट्यादिहेतुत्वम् ? प्राणिकर्मपरि-

पाकवशादिति चेत्, परशिवस्य कर्मपारवश्यदोषप्रसंगात्—नैष दोषः—प्राणिकर्मणामपि परमेश्वर-संकल्पहेतुकत्वात् जगत्सृष्ट्यादिक्रियायां प्रवृत्तस्य परमेश्वरस्य न स्वातन्त्र्यभंगः। तथा च शिव-शक्त्युभयसाधारणं चिन्मात्रमाश्रिता सा माया पुनर्द्विधा भवति, शक्यप्रतियोग्यधीननिरूपण विषयत्वाकारेण, तदनधीननिरूपणविषयत्वाकारेण च। एवं उपाधिद्वैविध्यात् उपधेयं चिन्मात्र-मपि द्वेधा भिद्यते। तत्र शक्यप्रतियोग्यधीननिरूपणा या माया सा शक्तिः। सलिलपवनादि संयोगवशात् उच्छूनावस्थस्य बीजस्य यथाङ्कुरावस्था तथैव प्राणिकर्मपरिपाकवशात् उपचितरूपा-या मायाया जगत्कार्यहेतुभूताङ्कुरावस्था सेत्यर्थः। शक्यप्रतियोग्यनधीननिरूपणो यो मायाया आकारः तदुपहितं चैतन्यं शिवः। जगदङ्कुररूपिण्या शक्त्या यदवच्छिन्नं सा संविद्रूपिणी पराशक्तिरुच्यते। अतश्च उपाधिपरिच्छेदादेव एकस्यैव चिन्मात्रस्य शिवशक्त्यात्मना विभागः। परमार्थतस्तु चिन्मात्ररूपतया एकत्वमेव।

तदुक्तमागमिकैः—**चिदचिदनुग्रहहेतोरस्य सिसृक्षोर्य आद्य उन्मेषः। तच्छक्ति-तत्वमभिहितमविभागापन्नमस्यैव।** इति।

तथा—**शक्तो यथा स शंभुर्भुक्तौ मुक्तौ च पशुगणस्य। तामेकां चिद्रूपामाद्यां सर्वात्मनाऽस्मि नतः।**

उक्तं च **सूतसंहितायां**—

**चिन्मात्राश्रयमायायाः शक्त्याकारे द्विजोत्तमाः।**
**अनुप्रविष्टा या संविन्निर्विकल्पा स्वयंप्रभा।**
**सदाकारा परानन्दा संसारच्छेदकारिणी।**
**सा शिवा परमा देवी शिवाभिन्ना शिवङ्करी।**
**न शिवेन विना शक्तिर्न शक्तिरहितः शिवः।**
**उमाशंकरयोरैक्यं यः पश्यति स पश्यति।**

उक्तं **चागमे**—

**पावकस्योष्णतेवेयमुष्णांशोरिव दीधितिः।**
**चन्द्रस्य चन्द्रिकेवेयं शिवस्य सहजा ध्रुवा।** इति।

उक्तं च वायव्यसंहितायामुपरिभागे श्रीकृष्णं प्रत्युपमन्युना—

शक्तिस्साक्षान्महादेवी महादेवस्स शक्तिमान् ।
तयोर्विभूतिलेशो वै सर्वमेतच्चराचरम् ।
वस्तु किंचिदचिद्रूपं किंचिद्वस्तु चिदात्मकम् ।
द्वयं शुद्धमशुद्धं च परं चापरमेव च ।
यत्संसरति चिच्चक्रमचिच्चक्रसमन्वितम् ।
तदेवाशुद्धमपरमितरत्तु परं शुभम् ।
अपरं च परं चैव द्वयञ्चिदचिदात्मकम् ।
स्वं शिवस्य शिवायाश्च स्वाम्यं चैतत् स्वभावतः ।
शिवयोर्वै वशे विश्वं न विश्वस्य वशे शिवौ ॥
ईशितव्यमिदं तस्मात् विश्वं विश्वेश्वरौ शिवौ ।
यथा शिवस्तथा देवी यथा देवी तथा शिवः ।
नानयोरन्तरं विद्याच्चन्द्रचन्द्रिकयोरिव ।
चन्द्रो न खलु भात्येष यथा चन्द्रिकया विना ।
न भाति विद्यमानोपि तथा शक्त्या विना शिवः ।
प्रभयाऽपि विना यद्वद्भानुरेव न विद्यते ।
प्रभा च भानुना तेन सुतरां नैव विद्यते ।
एवं परस्परापेक्षा शक्तिशक्तिमतोः स्थितिः ।
न शिवेन विना शक्तिर्न शक्त्या च विना शिवः ।
शक्तो यथा शिवो नित्यं भुक्तौ मुक्तौ च देहिनाम् ।
आद्या सैका पराशक्तिः चिन्मयी शिवसंश्रया ।

यामाहुरखिलेशस्य तैस्तैरनुगुणैर्गुणैः ।
समानधर्मिणी चैव शिवस्य परमात्मनः ।
सैवैकापि च चिद्रूपा शक्तिः प्रसवधर्मिणी ।
विभज्य बहुधा विश्वं विद्धाति शिवेच्छया ।
सा मूलप्रकृतिर्माया त्रिगुणा च त्रिधा भवेत् ।
शिवाद्यवनिपर्यन्तं यया ततमिदं जगत् । इति ।

तस्मिन्नेवाध्याये—

यथा न जायते पुत्रः पितरं मातरं विना ।
तथा भवं भवानीं च विना नैतच्चराचरम् ।
स्त्रीपुंसप्रभवं विश्वं स्त्रीपुंसात्मकमेव च ।
स्त्रीपुंसयोर्विभूतिश्च स्त्रीपुंसाभ्यामधिष्ठितम् ।
परमात्मा शिवः प्रोक्तः शिवा च परिकीर्तिता ।
शिवस्सदाशिवः प्रोक्तश्शिवा सा च मनोन्मनी ।
शिवो महेश्वरो ज्ञेयः शिवा मायेति कथ्यते ।
पुरुषः परमेशानः प्रकृतिः परमेश्वरी ।
रुद्रो महेश्वरः साक्षात् रुद्राणी रुद्रवल्लभा ।
विष्णुर्विश्वेश्वरो देवो लक्ष्मी विश्वेश्वरप्रिया ।
ब्रह्मा ब्रह्मशिरोहर्ता ब्रह्माणी ब्रह्मरूपिणी ।
भास्करो भगवान् शंभुः प्रभा भगवती शिवा ।
महेन्द्रो मन्मथारातिश्शची शैलेन्द्रकन्यका ।
जातवेदा महादेवः स्वाहा सर्वार्थदायिनी ।
यमः त्र्यम्बको देवः तत्प्रिया गिरिकन्यका ।

निरृतिर्भगवानीशो नैरृतिर्नगनन्दिनी ।
वरुणो भगवान् रुद्रो गौरी गिरिवरात्मजा ।
बालेन्दुशेखरो वायुश्शिवा शिवमनोरमा ।
यक्षो दक्षशिरोहर्ता बुद्धिर्हिमगिरीन्द्रजा ।
चन्द्रार्धशेखरश्चन्द्रो रोहिणी रुद्रवल्लभा ।
ईशानः परमेशानस्तद्भार्या परमेश्वरी ।
अनन्तवलयोऽनन्तो ह्यनन्ताऽनन्तवल्लभा ।
कालाग्निरुद्रः कालारिः काली कालान्तकप्रिया ।
पुरुषाख्यो मनुः शम्भुः शतरूपा शिवप्रिया ।
दक्षः साक्षात् महादेवः प्रसूतिः परमेश्वरी ।
रुचिर्भवो भवानी च बुधैराकूतिरुच्यते ।
भृगुर्भगाक्षहा देवः ख्यातिस्त्रिणयनप्रिया ।
मरीचिर्भगवान् रुद्रः संभूतिर्वल्लभा विभोः ।
गंगाधरोऽङ्गिरा ज्ञेयः स्मृतिः साक्षात् उमाऽद्रिजा ।
पुलहश्शशभृन्मौनी ... कान्ता पिनाकिनः ।
पुलस्त्यःत्रिपुरध्वंसी तत्प्रिया तु शिवप्रिया ।
क्रतुर्दक्षक्रतुध्वंसी सन्नतिर्दयिता विभोः ।
त्रिणेत्रोऽत्रिरुमा साक्षादनसूया स्मृता बुधैः ।
काश्यपः कालहा देवो लोकमाता महेश्वरी ।
वसिष्ठो मन्मथारातिर्देवी साक्षादरुन्धती ।
शंकरः पुरुषाः सर्वे स्त्रियस्सर्वा महेश्वरी ।
सर्वे स्त्रीपुरुषास्तस्मात् तयोरेव विभूतयः ।
विषयी भगवानीशो विषयः परमेश्वरी ।

श्राव्यं सर्वमुमारूपं श्रोता शूलवरायुधः ।
स्प्रष्टव्यं वस्तुजातन्तु सर्वं शंकरवल्लभा ।
स्प्रष्टा स एव विश्वात्मा बालचन्द्रावतंसकः ।
द्रष्टव्यवस्तुरूपं तु बिभर्ति भववल्लभा ।
द्रष्टा विश्वेश्वरो देवश्शशिखण्डशिखामणिः ।
रसजालं महादेवी देवो रसयिता शिवः ।
प्रियजातं च गिरिजा श्रोता चैव गराशनः ।
मन्तव्यवस्तुतां धत्ते महादेवी महेश्वरी ।
मन्ता स एव विश्वात्मा महादेवो महेश्वरः ।
बोध्यवस्तुस्वरूपं तु बिभर्त्ति शिववल्लभा ।
देवस्स एव भगवान् भोक्ता मुग्धेन्दुशेखरः ।
प्राणः पिनाकी सर्वेषां प्राणिनां भगवान् प्रभुः ।
प्राणस्थितिस्तु सर्वेषां अम्बिका चाम्बुरूपिणी ।
बिभर्त्ति क्षेत्रतां देवी त्रिपुरान्तकवल्लभा ।
क्षेत्रज्ञत्वं तथा धत्ते भगवानन्तकान्तकः ।
अहश्शूलायुधो देवश्शूलपाणिप्रिया निशा ।
आकाशश्शङ्करो देवः पृथिवी शङ्करप्रिया ।
समुद्रो भगवानीशो वेला शैलेन्द्रकन्यका ।
वृक्षो वृषध्वजो देवो लता विश्वेश्वरप्रिया ।
पुल्लिङ्गमखिलं धत्ते भगवान् पुरशासनः ।
स्त्रीलिङ्गमखिलं धत्ते देवी देवमनोरमा ।
शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा ।
अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः ।
यस्य यस्य पदार्थस्य या या शक्तिरुदाहृता ।

सा सा सर्वेश्वरी देवी स स शर्वो महेश्वरः ।
यत् परं यत् पवित्रं च यत् पुण्यं यच्च मङ्गलम् ।
तत्तदाहुर्महाबाहो तयोस्तेजोविजृम्भितम् ।
यथा दीपस्य दीप्तस्य शिखा दीपयते गृहम् ।
तथा तेजस्तयोरेतत् व्याप्त्या दीपयते जगत् ।
तृणादिशिवमूर्त्यन्तं विश्वस्यातिशयक्रमः ।
सन्निकर्षक्रमवशात्तयोरिति परा श्रुतिः ।
सर्वाकारात्मकावेतौ सर्वश्रेयोविधायिनौ ।
पूजनीयौ नमस्कार्यौ चिन्तनीयौ च सर्वदा ।
यथाप्रश्नमिदं कृष्ण याथार्थ्यं परमेशयोः ।
कथितं हि मया तेऽद्य न तु यावदियत्तया ।
तत् कथं शक्यते वक्तुं याथार्थ्यं परमेशयोः ।
महतामपि सर्वेषां मनसोऽपि बहिर्गतम् ।
अन्तर्गतमनन्यानामीश्वरार्पितचेतसाम् ।
अन्येषां बुद्ध्यनारूढमारूढं च यथैव तत् ।
येयमुक्ता विभूतिर्वै प्रकृती सा परा स्मृता ।
अप्राकृतीं परामन्यां गुह्यं गुह्यविदो विदुः ।
यतो वाचो निवर्तन्ते मनसा चेन्द्रियैः सह ।
अप्राकृतिः परा सैषा विभूतिः परमेश्वरी ।
सैवेह परमं धाम सैवेह परमा गतिः ।
सैवेह परमा काष्ठा विभूतिः परमेष्ठिनः ।
तां प्राप्तुं प्रयतन्तेऽद्य जितश्वासा जितेन्द्रियाः ।
गर्भकारागृहद्वारं निच्छिद्रं घटितं यया ।
संसाराशीविषालीढमृतसंजीवनौषधम् ।

विभूतिं शिवयोर्विद्वान् न बिभेति कुतश्चन।
यः परामपराञ्चैव विभूतिं वेत्ति तत्वतः।
सोऽपरां भूतिमुल्लङ्घ्य परां भूतिं समश्नुते। इति।

अथवा अम्बिकाशब्देन ब्रह्माकारमनोवृत्त्यवच्छिन्ना सर्वप्राणिनां सुखकारिणी संसारनिवर्तिका संविदुच्यते। तदुक्तं **सूतसंहितायाम्**—

विद्यारूपामुमां देवीं महाकारुणिकोत्तमाम्। इति
सदाकारा परानन्दा संसारच्छेदकारिणी॥ इति च।

तस्याः पतिः प्रदाता परशिवः। ब्रह्मविद्यायाः परमेश्वरप्रसादाधीनत्वात्।

ननु ब्रह्मविद्यायाः पराशक्तिप्रसादलभ्यत्वमवगम्यते **सूतसंहितायाम्**—

ईदृशी परमा विद्या शांकरी भवनाशिनी।
प्रसादादेव जन्तूनां शक्तेरेव हि जायते। इति।

किंच—

पार्वती परमा देवी ब्रह्मविद्याप्रदायिनी।
विशेषेणैव जन्तूनां नात्र सन्देहकारणम्। इति।
पुंसस्सांख्याभिधं ज्ञानं पार्वत्यास्तु प्रसादतः इति च॥

सम्यक् ख्यायते अनयेति साक्षात्कारज्ञानजननी बुद्धिः संख्या तज्जन्यं सांख्यं तथाविधं ज्ञानं पार्वत्याः प्रसादात् लभ्यत इति चेत्—

सत्यम्—शक्तिशक्तिमतोरभेदस्योक्तत्वात्।

किं च—

सांख्यस्योत्पत्तिवेलायां मोचकस्य शिवस्य तु।
प्रसादो जायते तेन संसारस्य विमर्दनम्।
संसारमोचकस्साक्षाच्छिव एव न चापरः। इति।

तथाच अखण्डब्रह्मसाक्षात्कारस्य अम्बिकाप्रसादलभ्यत्वेऽपि तदप्रतिबन्धः परमेश्वर-प्रसादलभ्य एवेति न विरोधः ।

तथा **शिवमाहात्म्यखण्डे**—

**प्रसादादेव रुद्रस्य श्रुत्युत्पन्नात्मविद्यया ।**
**बहूनां जन्मनामन्ते जानन्त्येव शिवं बुधाः ।** इति ।

**मुक्तिखण्डे**ऽपि—

**ब्रह्माद्याः स्थावरान्ताश्च पशवः परिकीर्तिताः ।**
**तेषां पतिरहं देवि स्मृतः पशुपतिर्बुधैः ।**
**मायापाशेन बध्नामि पशूनेतान् सरस्वति ।**
**तेषां पशूनां सर्वेषां मोचकोऽहं सुलोचने ।**
**मामेव मोचकं प्राह श्रुतिः साध्वी सनातनी ।** इति ।

**श्रुतिश्च**—

**अशुभक्षयकर्तारं भुक्तिमुक्तिप्रदायिनम् ।**
**यदि योन्याः प्रमुञ्चामि तं प्रपद्ये महेश्वरम् ॥** इति ।

तथा **यज्ञवैभवखण्डे**ऽपि—

**शिवप्रसादेन विना न भुक्तयः शिवप्रसादेन विना न मुक्तयः ।**
**शिवप्रसादेन विना न देवता शिवप्रसादेन हि सर्वमास्तिकाः ।**
**शिवप्रसादेन समो न विद्यते शिवप्रसादादधिको न विद्यते ।**
**शिवप्रसादेन शिवस्य सन्निधिः शिवप्रसादेन विशुद्धताऽऽत्मनः ।**

शिवप्रसादेन युतस्य वैदिकं न विद्यते कर्म जनस्य सुव्रताः ।
शिवप्रसादेन युतस्य तान्त्रिकं न विद्यते कर्म तथैव किंचन ।
शिवप्रसादेन युतस्य सुव्रता न जन्मनाशौ भवतस्सदैव तु ।
शिवप्रसादेन युतः स्वयं शिवः शिवप्रसादस्तु शिवप्रसादतः । इति ।

**पराशरोपपुराणे**ऽपि—

ज्ञाननिष्ठो भवेद्विप्रो महादेवप्रसादतः ।
प्रसादेन हि रुद्रस्य ब्रह्मविद्ब्राह्मणो भवेत् । इति च ।

अथवा अम्बिकाशब्देन भक्तानुग्रहार्थं स्वीकृतलीलाविग्रहा परमकारुणिका लोकोत्तरसौन्दर्यशालिनी परमशिवाविनाभूता गौरी देवी प्रतिपाद्यते। तदुक्तं श्रुत्या **सह स्वस्राऽम्बिकयेति** ।

तथा चोक्तं **सूतसंहितायाम्**—

सा शिवा करुणामूर्तिर्जगन्माता त्रयीमयी ।
शिवाभिन्ना परानन्दा शङ्करस्यापि शङ्करी ।
स्वेच्छया हिमवत्पुत्री स्वभक्तजनवत्सला । इति ।

तस्याः पतिः प्रियः परमेश्वरः । स एव सर्वैर्मुमुक्षुभिः हृदयादिस्थानेषु अम्बिकया सह अहंग्रहादिरूपेण ध्यातव्यः नमस्कार्यश्च । तदुक्त**माचार्यैः**—

भवान्यै भवायापि मात्रे च पित्रे मृडान्यै मृडायाप्यघघ्न्यै जनित्रे ।
शिवाङ्ग्यै शिवाङ्गाय कुर्मश्शिवायै शिवायाम्बिकायै नमस्त्र्यम्बकाय । इति ।

**सूतसंहितायामपि**---

ऐशमाद्यन्तनिर्मुक्तमतिशोभनमादरात् ।
नमामि विग्रहं साम्बं संसारामयभेषजम् । इति ।

एवन्निशम्य पुरुषोत्तम आदिभूतमम्बासहायममलेन्द्रकलावतंसम् ।
सर्वामरैरखिलयोगिभिरर्चनीयं संसारमोचक इति प्रतिपद्य भक्त्या ।
नत्वा परापरविभागविहीनबोधसत्यामृताद्वयशिवाभिधसर्वनाथम् ।
श्रुत्वा गिरा परवशोऽभवदम्बुजाक्षः शिष्टादृतं शिवकरं शिवमादरेण । इति च ।
आकर्णकृष्टे धनुषि ज्वलन्तीम् दैवीमिषुं भास्वति सन्दधानम् ।
ध्यायेन्महेशम्महनीयवेषं देव्या युतं योधतनुं युवानम् ।
ध्यायेद्देवं सुस्मितं स्यन्दनस्थं देव्या सार्धं तेजसा दीप्यमानम् ।
इष्विष्वासालंकृताभ्यां कराभ्यां शूराकारं स्तूयमानं सुरौघैः ।

स्मेराननं चन्द्रकलावतंसं गङ्गाधरं शैलसुतासहायम् ।
त्रिलोचनं भस्मभुजङ्गभूषं ध्यायेत् पशूनां पतिमीशितारम् ।

शरच्चन्द्रप्रकाशेन वपुषा शीतलद्युतिं ।
ध्यायेत् सिंहासनासीनं उमया सहितं शिवम् ।

प्रणमदमरलोकमौलिमालाकुसुमरजोऽरुणपादपद्मयुग्मम् ।
अनवरतमनुस्मरेत् भवान्या सह जगतां पितरं पिनाकपाणिम् ।

मुक्तालंकृतसर्वाङ्गमिन्दुगङ्गाधरं हरम् ।
ध्यायेत् कल्पतरोर्मूले सुखासीनं सहोमया ।

इत्यभियुक्तैः प्रदर्शितम् ।

पराशरोपपुराणेऽपि—

सर्वपापविशुद्ध्यर्थं ध्यायेद्देवं त्रियम्बकम् ।
साम्बं चन्द्रकलाचूडं नीलग्रीवं शुचिस्मितम् ।

वरदाभयहस्तं च लसत्केयूरमण्डितम् ।
सर्वालङ्कारसंयुक्तं शुद्धस्फटिकसन्निभम् ।
अर्धयाममुहूर्तं वा हृदयाम्बुजमध्यमे ।
अयत्नेनैव पापेभ्यो मोक्षमिच्छति चेत् पुमान् ।
शिवमेव सदा ध्यायेत् साम्बं चन्द्रार्धशेखरम् । इति ।
तस्यासाधारणा मूर्त्तिः साम्बा चन्द्रार्धशेखरा ।
नीलग्रीवा विरूपाक्षा ध्येया ब्रह्मादिभिः परा । इति च ।

वासिष्ठलैङ्गेऽपीश्वरवचनम्—

शिव एव परं तत्त्वं यस्मान्नास्त्यधिकम्मुने ।
तल्लक्षणं महाप्राज्ञ श्रुतिषु श्रूयते सदा ।
सत्यज्ञानं सदानन्दं जगत्सर्गादिकारणम् ।
मूर्तिस्तस्य मुनिश्रेष्ठ शिरसि श्रूयते श्रुतेः ।
उमया सहिता नित्या नीलग्रीवा त्रिलोचना ।
स्वात्मतत्त्वसुखस्फूर्त्तिमुदिता ताण्डवप्रिया ।
ब्रह्मविष्णुमहेशानैरुपास्या गुणमूर्तिभिः ।
भोगमोक्षप्रदा पुण्या पुंसां वेदविदां वर ।
सैव मे परमामूर्तिरुपास्या सर्वदा तव । इति ।

वसिष्ठमुनिं प्रति सूतसंहितायामपि—

आकाशे निर्मलं मुक्तं भासमानं सुशीतलम् ।
सोममण्डलमापूर्णमचलं दृष्टिगोचरम् ।
ध्यात्वा मध्ये महादेवं परमानन्दविग्रहम् ।

उमार्धदेहं वरदं उत्पत्तिस्थितिवर्जितम् ।
शुद्धस्फटिकसंकाशं चन्द्ररेखावतंसकम् ।
त्रिलोचनं चतुर्बाहुं नीलग्रीवं परात्परम् ।
ध्यायेन्नित्यं सदा सोऽहमिति ब्रह्मविदां वर ।
अथवाऽऽकाशमध्यस्थे भ्राजमाने सुशोभने ।
आदित्यमण्डले पूर्णे लक्षयोजनविस्तृते ।
सर्वलोकविधातारमीश्वरं हेमरूपिणम् ।
हिरण्यश्मश्रुकेशञ्च हिरण्मयनखं तथा ।
कप्यास्यासनवद्वक्त्रं नीलग्रीवं विलोहितम् ।
आगोपालप्रसिद्धं तमम्बिकार्धशरीरिणम् ।
सोहऽमित्यनिशं ध्यायेत् सन्ध्याकालेषु वा नरः ।
अथवा वैदिके शुद्धेऽप्यग्निहोत्रादिमध्यमे ।
आत्मानं जगदाधारं आनन्दानुभवं सदा ।
गङ्गाधरं विरूपाक्षं विश्वरूपं वृषध्वजम् ।
चतुर्भुजं समासीनं चन्द्रमौलिं कपर्दिनम् ।
रुद्राक्षमालाभरणमुमायाः पतिमीश्वरम् ।
गोक्षीरधवलाकारं गुह्यात् गुह्यतरं सदा ।
अत्यद्भुतमनिर्द्वन्द्वमहंबुद्ध्या विचिन्तयेत् ।
अथवाऽहं हरिः साक्षात् सर्वज्ञः पुरुषोत्तमः ।
सहस्रशीर्षा पुरुषस्सहस्राक्षः सहस्रपात् ।
विश्वो नारायणो देवः अक्षरः परमः प्रभुः ।
इति ध्यात्वा पुनस्तस्य हृदयाम्भोजमध्यमे ।
प्राणायामैर्विकसिते पारमेश्वरमन्दिरे ।

अष्टैश्वर्यदलोपेते विद्याकेसरसंयुते ।
ज्ञाननाले महत्कन्दे प्रणवेन प्रबोधिते ।
विश्वार्चिषं महावह्निं ज्वलन्तं सर्वतोमुखम् ।
वैश्वानरं जगद्योनिं शिखातन्विनमीश्वरम् ।
तापयन्तं स्वकं देहमापादतलमस्तकम् ।
निवातदीपवत्तस्मिन् दीपितं हव्यवाहनम् ।
नीलतोयदमध्यस्थं विद्युल्लेखेवभास्वरम् ।
नीवारशूकवद्रूपं पीताभासं विचिन्तयेत् ।
तस्य वह्नेश्शिखायान्तु मध्ये परमकारणम् ।
परमात्मानमानन्दं परमाकाशमीश्वरम् ।
ऋतं सत्यं परं ब्रह्म साम्बं संसारभेषजम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं महेश्वरम् ।
नीलग्रीवं स्वमात्मानं पश्यन्तं पापनाशनम् ।
ब्रह्मविष्णुमहेशानैर्ध्येयं ध्येयविवर्जितम् ।
सोहमित्यादरेणैव ध्यायेद्योगीश्वरेश्वरम् ।
अयं मुक्तेर्महामार्ग आगमान्तैकसंस्थितः ।
अथवाऽहं मुनिश्रेष्ठ ब्रह्मा लोकपितामहः ।
इति स्मृत्वा स्वहृन्मध्ये शिवं परमकारणम् ।
साक्षात् श्रुत्यन्तसंवेद्यं साम्बं संसारभेषजम् ।
अहंबुद्ध्या विमुक्त्यर्थं ध्यायेदीशानमव्ययम् । इति ।

शिवगीतायां चतुर्थाध्याये—

उन्मीलिताक्षो रामस्तु यावत् व्योम प्रपश्यति ।
तावद्ददर्श वृषभं सर्वालङ्कारसंयुतम् ।

पीयूषमथनोद्भूतनवनीतस्य पिण्डवत् ।
प्रोतस्वर्णम्मरकतच्छायाश्रृङ्गद्वयान्वितम् ।
नीलवृत्तेक्षणं ह्रस्वकण्ठकम्बलभूषितम् ।
रत्नपल्याणसंयुक्तं निबद्धं श्वेतचामरैः ।
घण्टिकाघर्घरीशब्दैः पूरयन्तं दिशो दश ।
तत्रासीनं महादेवं शुद्धस्फटिकविग्रहम् ।
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
व्याघ्रचर्माम्बरधरं नागयज्ञोपवीतिनम् ।
सर्वालङ्कारसंयुक्तं विद्युत्पिङ्गजटाधरम् ।
नीलकण्ठं व्याघ्रचर्मोत्तरीयं चन्द्रशेखरम् ।
नानाविधायुधोद्भासिदशबाहुं त्रिलोचनम् ।
युवानं पुरुषं श्रेष्ठं सच्चिदानन्दविग्रहम् ।
तत्रैव च सुखासीनां पूर्णचन्द्रनिभाननाम् ।
नीलेन्दीवरदामाभामुद्यन्मरकतप्रभाम् ।
मुक्ताभरणसंयुक्ताम् रात्रिं तारान्वितामिव ।
विन्ध्यक्षितिधरोत्तुङ्गकुचभारभरालसाम् ।
सदसत्संशयाविष्टमध्यदेशां तलोदरीम् ।
दिव्याभरणसंयुक्तां दिव्यगन्धानुलेपनाम् ।
दिव्यमालाम्बरधरां नीलेन्दीवरलोचनाम् ।
अलकोद्भासिवदनां ताम्बूलग्रासशोभिताम् ।
शिवालिङ्गनसंजातपुलकोद्भासिविग्रहाम् ।
सच्चिदानन्दरूपाढ्यां जगन्मातरमम्बिकाम् ।
सौन्दर्यसारसन्दोहां ददर्श रघुनन्दनः ।

प्रकृत श्रुतिस्तु—**नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः** इति ।

**अग्निरसि**—तेजोहेतुः त्वमग्नेरसि । त्वदीयेन तेजसा अग्निस्तेजस्वीत्यर्थः । तदुक्तं **गीतायाम्**—

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ।**

श्रुतिस्तु—**तेजोदास्त्वमस्यग्निरसि** ।

अथ **छान्दोग्ये तृतीये**—

**अप्रवर्ति**—न कुतश्चित् क्वचित् प्रवर्तितुं शीलमस्येति अप्रवर्ति । अनुच्छित्तिधर्मकम् । यथा अन्यानि भूतानि परिच्छिन्नानि उच्छित्तिधर्मकाणि न तथा हार्दं ब्रह्मेत्यर्थः । **तदेतत् पूर्णमप्रवर्तीति** श्रुतिः ।

**अवाकी**—उच्यते अनयेति वाक् वागेव वाकः ; स यस्य विद्यते स वाकी । न वाकी अवाकी । वाक्प्रतिषेधश्चात्रोपलक्षणार्थः । सर्वेन्द्रियरहितः इत्यर्थः ।

**अनादरः**— असम्भ्रमः ; अप्राप्तौ हि संभ्रमःस्यात् अनवाप्तकामस्य, नत्वाप्तकामत्वात् नित्यतृप्तस्य ईश्वरस्य संभ्रमोऽस्ति क्वचिदपीत्यर्थः ।

**अवाक्यनादर एष म आत्मेति** श्रुतिः ।

**अन्तरिक्षाज्ज्यायान्**—

अन्तरिक्षादपि व्यापकः । **ज्यायान् पृथिव्या ज्यायानन्तरिक्षा**दिति श्रुतिः ।

**पञ्चमे प्रपाठके**—

**अभिविमानः**—प्रत्यगात्मतया सर्वैः प्राणिभिरभिविमीयते अहमिति ज्ञायत इत्यभिविमानः । अभिगतो वा अयं सर्वप्रत्यगात्मत्वात् विमानश्च मानवियोगादित्यभिविमानः । अभिविमिमीते वा सर्वं जगत् कारणत्वादित्यभिविमानः । **यस्त्वेतमेवं प्रादेशमात्रमभिविमान**मिति श्रुतिः ॥

**षष्ठप्रपाठके—**

**अद्वितीयम्**—नास्य द्वितीयं वस्त्वन्तरं विद्यत इत्यद्वितीयम्, अनेन मृद्व्यतिरेकेण मृदो यथा अन्यत् घटाद्याकारेण परिणामयितृ कुलालादि निमित्तकारणं दृष्टं तथा सद्व्यतिरेकेण सतस्सहकारिकारणं द्वितीयं प्राप्तं प्रतिषिध्यते। स्वयमेव चेतनत्वेन निमित्तत्वसम्भवात्।

ननु चेतनत्वेऽपि कुलालस्य स्वव्यतिरिक्तमृद्रूपोदानापेक्षा दृष्टा, एवमत्रापि उपादानापेक्षा अस्तीति चेत्-मैवं-अभिन्ननिमित्तोपादानत्वसम्भवात्। श्रूयते हि **तदैक्षत बहुस्यां प्रजायेयेति** इति। तत्र ईक्षणेन निमित्तत्वं बहुभवनेनोपादानत्वञ्च अद्वितीयस्य सद्वस्तुनोऽवगम्यते। अतो जगतो निमित्तमुपादानं च स्वयमेवेत्यर्थः। ननु अविक्रियस्यासङ्गस्य सद्रूपस्य ब्रह्मणः कथमुभयविधकारणत्वं संभवति; माययेति चेत्, तर्हि तया द्वैतापत्तिरिति-मैवं-तस्यास्सद्रूपे ब्रह्मण्यध्यस्तत्वेन अनिर्वचनीयतया स्वतस्सत्ताऽभावात्। एवञ्च मायाशक्तिवशादविक्रियस्यापि ब्रह्मणस्स्रष्टृत्वादिकमुपपद्यते। नापि द्वैतापत्तिः। मायाया अनिर्वचनीयत्वेन वस्तुत्वासंभवादिति।

तदुक्तं **ब्रह्मगीतायाम्**—

**अतश्च कारणं नित्यमेकमेवाद्वयं सुराः।**
**कुलालादेर्मृदादेश्च भेदे दृष्टेऽपि भूतले।**
**अचैतन्यान्मृदादेस्तु कुलालादिरपेक्ष्यते।**
**अत्र कारणमद्वैतं शुद्धचैतन्यमेव हि।**
**तेन नापेक्ष्यते ह्यन्यत् कारणं चेतनात्मकम्।**
**स्वयं चेतनमप्येतत् कारणं न कुलालवत्।**
**अपेक्षते मृदा तुल्यमचिद्रूपन्तु कारणम्।**
**प्रतीत्या केवलं शक्तिरचिद्रूपा तमोमयी।**
**सर्वप्रकारैर्विद्वद्भिः अनिर्वाच्याऽस्ति शाङ्करी।**
**तया दुर्घटकारिण्या तादात्म्येनैव सङ्गतम्।**
**कारणं सकलस्रष्टृ सर्वसंहर्तृ चास्तिकाः।**
**पालकं च सदा सच्च चिद्रूपत्वात् सुरोत्तमाः॥** इति।

तथा च विषयसंकल्पं परित्यज्य अद्वितीये ब्रह्मणि सदा निष्ठा कार्येत्युक्तं भवति ।

तदुक्तं वासिष्ठे पुत्रं प्रति दाशूरेण—

**सर्वा दृष्टीः परित्यज्य नियम्य मनसा मनः ।**
**सबाह्याभ्यन्तरार्थस्य सङ्कल्पस्य क्षयं कुरु ।**
**यदि वर्षसहस्राणि तपश्चरसि दारुणम् ।**
**पातालस्थस्य भूस्थस्य स्वर्गस्थस्यापि तत्तव ।**
**नान्यः कश्चिदुपायोऽस्ति सङ्कल्पोपशमादृते ।**
**अनाबाधेऽविकारे च सुखे परमपावने ।**
**संकल्पोपशमे यत्नं पौरुषेण परं कुरु ।**
**अधिगतपरमार्थतामुपेत्य प्रसभमपास्य विकल्पजालमुच्चैः ।**
**अधिगमय पदं यदद्वितीयं विततसुखाय सुषुप्तचित्तवृत्तिः ।** इति ।

श्रुतिस्तु—**सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयं** इति ।

**अणिमा**—अणुभावः जगतोमूलं, भाविभवित्रोरभेदविवक्षया । अणुः परमसूक्ष्म इत्यर्थः । **स य एषोऽणिमैतदात्म्यम्** इति श्रुतिः ।

**अष्टमे**—

**अन्वेष्टव्यम्**—गुर्वाश्रयश्रवणाद्युपायैरन्वेषणीयं आत्मतत्त्वमित्यर्थः । **तस्मिन्यदन्तस्तदन्वेष्टव्यमिति** श्रुतिः ।

**अपहतपाप्मा**—अपहतः विनाशितः पाप्मा धर्माधर्माख्यो यस्य सोऽयमपहतपाप्मा । **एव आत्माऽपहतपाप्मा** इति श्रुतिः ॥

**अपिपासः**—पानेच्छारहितः । **अपिपासस्सत्यकाम** इति श्रुतिः ।

**बृहदारण्यके तृतीयाध्याये**—

**अन्तरतरम्**—बाह्यात् पुत्रमित्रादेः प्राणपिण्डसमुदायः अभ्यन्तरस्सन्निकृष्ट आत्मनः, तस्मात् अभ्यन्तरादन्तरतरम् । **अन्तरतरं यदयमात्मा** इति श्रुतिः ।

चतुर्थे—

**अपारम्**—निरवधिकम् । **अनन्तमपारम्** इति श्रुतिः ।

**अमृतमयः**—अमरणधर्मकः । **तेजोमयोऽमृतमय** इति श्रुतिः ।

**अपूर्वम्**—नास्य पूर्वं कारणं विद्यत इति अपूर्वम् ।

**अनपरम्**—नास्य अपरं कार्यं विद्यत इति अनपरम् ।

**अनन्तरम्** । नास्य जात्यन्तरमन्तराले विद्यत इत्यनन्तरम् ।

**अबाह्यम्**—तथा बहिरस्य न विद्यत इति अबाह्यम् ।

ननु ब्रह्मणः कारणाभावेपि स्वयं सर्वकारणत्वात्, ब्रह्मणः अखण्डैकरसत्वेन अन्तराले जात्यन्तराभावेऽपि बाह्यस्याकाशादिप्रपञ्चस्याध्यक्षमीक्ष्यमाणत्वात्, कथमेतत् उपपद्यत इति चेत्—

न-प्रपञ्चस्य कल्पितत्वेन प्रतिभामात्रशरीरत्वात् न काचिदनुपपत्तिः ।

तथा चोक्तं भगवता **वसिष्ठेन श्रीरामं प्रति**—

**अकर्तृकमरङ्गञ्च गगने चित्रमुत्थितम् ।**
**अद्रष्टृकं स्वानुभवमनिद्रस्वप्नदर्शनम् ।**
**साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि ।**
**निरिच्छं प्रतिबिम्बन्ति जगन्ति मुकुरे यथा ।**
**एतत्ते राम वक्ष्यामि कार्यकारणतां विना ।**
**स्थिता ब्रह्मणि विश्वश्रीः प्रतिभामात्ररूपिणी ।**
**एकं ब्रह्म चिदाकाशं सर्वात्मकमखण्डितम् ।**
**इति भावय यत्नेन चेतश्चाञ्चल्यशान्तये ।**
**रेखोपरेखावलिता यथैका पीवरी शिला ।**
**तथा त्रैलोक्यवलितं ब्रह्मैकमिति दृश्यताम् ।**

**द्वितीयकारणाभावादनुत्पन्नमिदं जगत् ।**
**तिष्ठति ब्रह्मणि स्फारे प्रतिभामात्ररूपधृक् ।** इति।

अस्यायमर्थः—चित्रं हि केनचित् कर्त्रा कैश्चिद्रङ्गैःरञ्जकद्रव्यैः कस्मिंश्चित् भित्त्यादौ मूर्तवस्तुनि क्रियते; इदन्तु जगद्रूपं **चित्रं अकर्तृकं** आत्मनो निष्क्रियत्वेनाकर्तृत्वात्, **अरंगञ्च** आत्मनोऽद्वितीयत्वेन रञ्जकस्य द्रव्यान्तरस्याभावात्, **गगने** चिदाकाशे **उत्थितं**, मूर्तस्य कस्यचिदधिकरणस्याभावात्, **अद्रष्टृकं स्वानुभवं**, यत् खल्वनुभूयते तत् सत्येव स्वव्यतिरिक्ते द्रष्टरि, इदन्तु न तथा, दृष्टृदृश्ययोर्भेदाभावात् । किञ्च—**अनिद्रस्वप्नदर्शनम्**, स्वप्नदर्शनं हि सत्यां निद्रायां भवति, इदन्तु न तथा, जाग्रत्येव प्रतीयमानत्वात्, साक्षादीक्षते इति साक्षी दृग्रूपत्वात्, **साक्षिभूते समे** परिपूर्णे **स्वच्छे** निर्मले **निर्विकल्पे** भेदशून्ये **चिदात्मनि जगन्ति मुकुरे यथा** दर्पणे इव **निरर्थं** प्रयोजनमन्तरेणैव **प्रतिबिम्बन्ति** प्रतिफलन्ति; निरिच्छमिति पाठे इच्छामन्तरेणेत्यर्थः । तत्र जगतां जडत्वात् आत्मनश्चासङ्गोदासीनत्वात् निरिच्छत्वं वेदितव्यम् । **विश्वश्रीः** कार्यकारणभावमन्तरेणैव **प्रतिभामात्ररूपिणी ब्रह्मणि** तिष्ठति इत्येतद्रहस्यमिति भावः । **एकंब्रह्मभावये**त्युक्तं, भेदे प्रतीयमाने कथमैक्यमित्यत्राह—**रेखेति । यथा** हि काचित् **पीवरी** गरीयसी गिरि**शिला रेखोपरेखाभिर्वलिता** व्याप्ता करितुरगनरादिचित्रविचित्रदेवालयादिरूपेण प्रतीयमानतया सत्यपि भेदस्फुरणे वस्तुत एकैव **तथा त्रैलोक्यवलितं** त्रैलोक्यात्मना विवृतमपि **ब्रह्म एकमेवेति दृश्यताम्** निश्चीयताम् । **इदं जगत् द्वितीयकारणाभावात्** ब्रह्मव्यतिरिक्तस्य द्वितीयस्य कारणस्य अभावात् भावरूपकार्यारम्भककारणानां समवाय्यसमवायिनिमित्तानामसम्भवात् हेतोः **अनुत्पन्नमेव** । कथं तर्हि प्रतीयते इत्यत्राह—**स्फारे ब्रह्मणि प्रतिभामात्ररूपधृक् तिष्ठति** ब्रह्मण्यध्यस्ततया मरुमरीचिकायां तरङ्गिणीव प्रातिभासिकतया तिष्ठतीत्यर्थः ।

प्रकृतश्रुतिस्तु—**तदेतत् ब्रह्मापूर्वमनपरमनन्तरमबाह्य**मिति ।

**पञ्चमे**—अप्सु तिष्ठन्—अबधिष्ठानतया तिष्ठन् ।

**अद्भ्योऽन्तरः**—अबन्तर्यामितया वर्तमानः ।

**योऽप्सु तिष्ठन् अद्भ्योऽन्तरः** इति श्रुतिः ।

**अग्नौ तिष्ठन्**

अग्नेरन्तरः

अन्तरिक्षे तिष्ठन्

अन्तरिक्षादन्तरः

अर्थस्तु पूर्ववत्। श्रुतिस्तु **योऽग्नौ तिष्ठन्** इत्यादिका।

अदृष्टः—न दृष्टः न विषयीभूतः चक्षुर्दर्शनस्य कस्यचित्; चक्षुरगोचर इत्यर्थः।

अश्रुतः—श्रोत्रगोचरतामनापन्नः कस्यचित्।

अमतः—मनस्सङ्कल्पविषयतामनापन्नः। दृष्टश्रुते एव हि सर्वस्सङ्कल्पयति। अयं तु अदृष्टत्वादश्रुतत्वाच्च अमतः।

अविज्ञातः—निश्चयगोचरतामनापन्नः रूपादिवत् सुखादिवच्च।

श्रुतिस्तु—**अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाते**ति।

अस्थूलम्—स्थूलात् अन्यत्।

अनणु

अह्रस्वम्

अदीर्घम्

एभिश्चतुर्भिः विशेषणैः द्रव्यधर्माः प्रतिषिद्धाः।

अस्नेहम्—अपां गुणः स्नेहः तस्मात् भिन्नम्।

अतमः—अविद्याभिन्नम्।

अवायुः—वायुभिन्नम्।

अनाकाशं—आकाशभिन्नम्।

असङ्गम्—संबन्धरहितं, निर्लेपमित्यर्थः।

अगन्धम्—गन्धभिन्नम्।

अचक्षुष्कम्। न हि चक्षुरस्य करणं विद्यत इत्यतः अचक्षुष्कम्।

अश्रोत्रम्—श्रोत्रेन्द्रियरहितम्।

**अवाक्**—वागिन्द्रियभिन्नम् ।

**अतेजस्कम्**—अविद्यमानं तेजो यस्य तदतेजस्कम्, न हि तेजोऽग्न्यादिप्रकाशवत् अस्य विद्यते ।

**अमुखम्**—मुखं द्वारं तद्रहितम् ।

अनेन अस्थूलत्वादिविशेषणजालेन देहेन्द्रियादिसर्वोपाधिविनिर्मुक्तं प्रत्यभिन्नं ब्रह्म सर्वदा अनुसन्धेयमित्युक्तं भवति ।

तदुक्तं सूतसंहितायाम्—

**चिच्छक्तिर्जडशक्तिश्च तद्भेदाश्च तथैव च ।**
**यदेव तत्त्वतो नित्यं तस्मै सर्वात्मने नमः ।**
**ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।**
**विराडाद्याश्च देवाश्च यन्मात्रं तन्नुमः शिवम् ।**
**महासत्वाश्च ये जीवा मध्यसत्वाश्च चेतनाः ।**
**निहीनाश्चैव यन्मात्रं तन्नमामि महौजसम् ।**
**यद्देशकालदिग्भागैर्न भिन्नं सर्वदाऽद्वयम् ।**
**यदेव विश्वं तद्ब्रह्म यथार्थं प्रणमाम्यहम् ।**
**अनन्तमद्वयं पूर्णमेकमित्यामनन्ति यत् ।**
**आगमा अखिला नित्यं वन्दे तं ब्रह्मसंज्ञितम् ।**
**यत्स्वरूपमविज्ञाय देह आत्मेति मन्यते ।**
**तर्काभासैस्तमीशानं वन्दे देहविलक्षणम् ।**
**यत्स्वरूपमविज्ञाय देहजानीन्द्रियाणि तु ।**
**आत्मेति मन्यते वन्दे तमिन्द्रियविलक्षणम् ।**
**यत्स्वरूपमविज्ञाय प्राण आत्मेति मन्यते ।**
**वन्देऽहं प्राणवेत्तारं प्राणं प्राणस्य सर्वदा ।**

यत्स्वरूपमविज्ञाय मनः संकल्पलक्षणम् ।
आत्मेति मन्यते भक्त्या वन्दे तं मनसः परम् ।
यत्स्वरूपमविज्ञाय बुद्धिरात्मेति मन्यते ।
तं वन्दे बुद्धिबोद्धारं बोधरूपमविक्रियम् ।
यत्स्वरूपमविज्ञाय सर्वप्रत्ययकारणम् ।
अन्तःकरणमात्मेति मन्यते तं नुमः शिवम् ।
यस्मिन् जाग्रदवस्थैषा भातीव भवतीव च ।
तं तद्भ्रान्तेरधिष्ठानं वन्दे साक्षिणमीश्वरम् ।
यस्मिन् स्वप्नप्रपञ्चोऽयं भातीव भवतीव च ।
तं तद्भ्रान्तेरधिष्ठानं वन्दे साक्षिणमीश्वरम् ।
यस्मिन् सुषुप्त्यवस्थेयं भातीव भवतीव च ।
तं तद्भ्रान्तेरधिष्ठानं वन्दे साक्षिणमीश्वरम् ।
यस्मिन् क्लृप्तं तुरीयत्वं त्रिधामापेक्षयैव तु ।
तं तुरीयत्वनिर्मुक्तं वन्दे चिद्घनमीश्वरम् ।
यस्मिन् तुरीयातीतत्वमध्यस्तं तदभावतः ।
तं वन्दे केवलं शुद्धं निर्विशेषं महेश्वरम् ।
एकत्वं च तथा द्वित्वं त्रित्वं यस्मिन् प्रकल्पितम् ।
बहुत्वं च तमीशानमसंख्येयं नुमः शिवम् ।
अभिन्नं च तथा भिन्नं भिन्नाभिन्नं वदन्ति यम् ।
तं सदा केवलं वन्दे केषाञ्चिल्लभ्यमीश्वरम् । इति ।

वासिष्ठे चूडालाया आत्मविवेकप्रकारः—चूडाला

प्रेक्षे तावत् स्वमात्मानं किमहंस्यामिति स्वयम्
कस्यायमागतो मोहः कथमभ्युत्थितः क्व वा ।
देहस्तावज्जडो मूढो नाहमित्येव निश्चयः ।
कर्मेन्द्रियगणश्चास्मादभिन्नो जड एव सः ।

अस्माद्देहादभिन्न इति जड एवेत्यर्थः ।

**बुद्धीन्द्रियगणोऽप्येवं जड एवेति निश्चयः ।**
**प्रेर्यते मनसा यस्माद्यष्ट्येव भुवि लोष्टकः ।**

बुद्धीन्द्रियगणोऽपि यष्ट्या लोष्टक इव मनसा यस्मात् प्रेर्यते तस्मात् जड एवेति निश्चयः इत्यर्थः ।

**मनश्चैवं जडं मन्ये सङ्कल्पात्मकशक्तिमत् ।**
**क्षेपणैरिव पाषाणः प्रेर्यते बुद्धिनिश्चयैः ।**

सङ्कल्पात्मकशक्तिमत् मनश्च क्षेपणैः पाषाण इव बुद्धिकृतैर्निश्चयैः प्रेर्यते इति जडं मन्ये। क्षिप्यन्ते एभिरिति क्षेपणानि रज्जुदार्वादिमयाः यन्त्रविशेषाः ।

**बुद्धिर्निश्चयरूपैवं जडैवेति विनिश्चयः ।**
**खातेनेव सरित्कूलमहंकारेण चाल्यते ।**

खननजनितश्वभ्रेण सरित्कूलमिव अहङ्कारेण चाल्यते प्रेर्यत इति जडैवेति निश्चयः ।

**अहङ्कारोऽपि निस्सारो जड एव शवात्मकः ।**
**जीवेन जन्यते यक्षो बालेनेव भ्रमात्मकः ।**

निस्सारः विपरीतज्ञानरूपत्वात् निस्तत्त्वः चेष्टारहितत्वात् शवात्मकः अहङ्कारोऽपि बालेन भ्रमात्मको यक्ष इव जीवेन जन्यते कल्प्यते इति जड एव । अवशात्मक इति पाठे परवशात्मक इत्यर्थः ।

**जीवश्च कलनाकारो वातात्मा हृदये स्थितः ।**
**सुकुमारोऽन्तरूढेन केनापि परिजीवति ।**

हृदये स्थितः अन्तःकरणप्रतिफलितचैतन्यरूपत्वात् हृदये वर्तमानः, अत एव कलनाकारः कल्पितस्वभावः, वातात्मा प्राणमयत्वात्, सुकुमारः अध्रुवः प्रत्यहं सुषुप्तावात्मनि लीयमान-

त्वात् । एवंविधो जीवश्च अन्तरूढेन स्वस्यान्तरनुप्रविष्टेन केनापि अव्यपदेश्येन प्राणप्रदायिना पुरुषेणानुप्राणितः परिजीवति । अतो जीवोऽपि पारमार्थिकमात्मस्वरूपं न भवतीत्यर्थः ।

एतदुक्तं भवति—यथा घटाद्युपाधाववच्छिन्नोऽनवच्छिन्नश्च आकाशोऽस्ति, यथा जलाद्युपाधौ प्रतिबिम्बभूतो बिम्बभूतश्च आकाशोऽस्ति, तथा सर्वप्राणिनां हृदि जीवः ईश्वरश्चास्ति । तथा च **व्याससूत्रं—गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्** इति । तत्र च मायाविधेयो जीवः विधेयमायः ईश्वरः इति भेदः ।

तदुक्तं (**गौडपादाचार्यैः**) **शुकरहस्योपनिषदि**—

**कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।**
**कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ।** इति ।
**आ अहो ज्ञातमेतन्मे चेत्योल्लेखाकलङ्किना ।**
**जीवो जीवत्यजीर्णेन चिद्रूपेणात्मरूपिणा ।**

आ इति स्मृतिद्योतकमव्ययम् । अहो इत्याश्चर्ये । अहो मया ज्ञातमेतत् । किन्तदित्यत्राह—अयं जीवः चेत्योल्लेखाकलङ्किना चेत्योल्लेखः दृश्यसंबन्धः तेन अकलङ्किना प्रतिबिम्बरूपकलङ्कवर्जितेन, अजीर्णेन-अनादिना आत्मरूपिणा-सर्वेषामात्मभूतेन एतेन चिद्रूपेण-चित्स्वरूपेणैव जीवति प्राणान् धारयति । एतदेव सदृष्टान्तमाह—

**चेत्यभ्रमवता जीवश्चिद्रूपेणैव जीवति ।**
**आमोदः पवनेनेव खातेनेव सरिद्रयः ।**

चेत्यभ्रमवता-चेत्येषु प्रतिफलनात् तादात्म्यभ्रमवता

**असत्यजडचेत्यांशचयनाच्चिद्वपुर्जडम् ।**
**महाजलगतो ह्यग्निरिव रूपं स्वमुज्झति ।**

चिद्वपुः—चित्स्वरूपं असत्यजडचेत्यांशचयनात्—असत्या एव जडाश्च चेत्यांशाः तेषां चयनात् उपचयनात् हेतोः जडं सत् महाजलगतो ह्यग्निरिव स्वं रूपं चिद्भावं उज्झति ।

एवं चिद्रूपमप्येतच्चेत्योन्मुखतया स्वयम् ।
जडं शून्यमसत्कल्पं चैतन्येन प्रबोध्यते ।

एतत्-चिद्रूपं एवं-पूर्वोक्तेन प्रकारेण चेत्योन्मुखतया— दृश्यभावनया स्वयमेव जडं-जाड्य-युक्तं शून्यं असत्कल्पं भूत्वाऽपि पुनःचैतन्येन-स्वानुप्रविष्टचैतन्येन प्रबोध्यते । **तत् सृष्ट्वा तदेवानुप्राविशत्** इति श्रुतेः ।

इदानीमिदमीक्षेऽहं केनैषा चित् प्रचेत्यते ।
अहो नु चिरकालेन ज्ञातं ज्ञेयमनामयम् ।

एषा चित् केन हेतुना प्रचेत्यते—मनोबुध्यादिरूपेण प्रवर्त्यते इत्येतदिदानीमहमीक्षे विचारये । ज्ञातं ज्ञेयं-यज्जिज्ञासितं चिद्विवर्तनिमित्तं ज्ञातव्यं तत् ज्ञातमित्यर्थः । किन्तदित्यत आह—

एते हि चिद्विलासान्ता मनोबुद्धीन्द्रियादयः ।
असन्तस्सर्व एवाहो अवधानं विनोदिताः ।

चिद्विलासान्ताः-जडेषु वस्तुषु चैतन्यप्रतिफलनं चिद्विलासः तदन्ताः-तत्पर्यन्ता एते मनोबुद्धीन्द्रियादयः सर्व एव वस्तुतो ऽसन्तोऽपि अवधानं विना-ऐकाग्र्यमवधानं तेन विना-तद-भावेन उदिताः प्रादुर्भूताः - आत्मनःस्वरूपनिष्ठत्वाभावरूपेण प्रमादेन उदिताः, अनवधानमेव चितो नानारूपविवर्तहेतुरित्यर्थः ।

महाचिदेकैवेहास्ति महासत्तेति चोच्यते ।
निष्कलङ्का समा शुद्धा निरहंकाररूपिणी ।
सकृद्विभाता विमला नित्योदयवती समा ।
सा ब्रह्मपरमात्मादिनामभिः परिगीयते ।

महासत्तापरपर्यायभूता निष्कलंका या चिदस्ति सैव ब्रह्मपरमात्मेत्यादिनामभिः परिगीयते इत्यन्वयः ।

तत्र समेति द्विरुपादीयते; तयोरेकः समशब्दः सर्वशब्दपर्यायः, समा सर्वात्मेत्यर्थः; अन्यस्तु अवैषम्यवाची, समा एकरूपेत्यर्थः; इति न पौनरुक्त्यम् ।

तथा **विष्णुपुराणेऽपि**—

**अदीर्घह्रस्वमस्थूलमनण्वग्र्यमलोहितम् ।**
**अस्नेहछायमतनुमसक्तमसमीरणम् ।**
**अनाकाशमसंस्पर्शमगन्धमरसञ्च यत् ।**
**अचक्षुःश्रोत्रमचलमवाक्प्राणममानसम् ।**
**अनामगोत्रममुखमतेजस्कमहेतुकम् ।**
**अभयं भ्रान्तिरहितमनिद्रमजरामरम् ।**
**अरजोऽशब्दममृतं अप्लुतं यदसंवृतम् ।**
**पूर्वापरे न वै यस्मिन् तद्विष्णोः परमं पदम् ।**
**परमीशित्वगुणवत् सर्वभूतमसंश्रयम् ।**
**नताः स्म तत् पदं विष्णोः जिह्वादृग्गोचरे न यत् ।** इति ।

प्रकृतश्रुतिस्तु—**अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन** इति ।

**अगृह्यः**—न गृह्योऽगृह्यः । यस्मात् सर्वकार्यधर्मातीतः तस्मात् अगृह्यः । यद्धि करणगोचरं व्याकृतं वस्तु तत् ग्रहणगोचरम्, इदन्तु तद्विपरीतमात्मतत्वम् ; तस्मात् अगृह्यः ।

**अशीर्यः**—यद्धि मूर्तं संहतं शरीरादि तत् शीर्यते ; अयन्तु तद्विपरीतः, अतोऽशीर्यः ।

**असितः**—अबद्धः । यद्धि मूर्तं तत् बध्यते ; अयन्तु तद्विपरीतः ; अतोऽसितः ।

श्रुतिस्तु—**अगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यते असंगो न हि सज्जते असितो न व्यथते न रिष्यति** इति ।

**षष्ठे—असुप्तः**—प्रकाशस्वरूपः अलुप्तदृगादिशक्तिः स्वाभाव्यात् । **असुप्तस्सुप्तानभिचाकशीति** इति श्रुतिः ।

**अतिच्छन्दाः**—अतिच्छन्दमित्यर्थः, रूपपरत्वात्। छन्दः कामः अतिगतो यस्मात् रूपात् तत् अतिच्छन्दं रूपम्। अन्योऽसौ सान्तः छन्दश्शब्दो गायत्र्यादिछन्दोवाची; अयन्तु कामवाची, अतः स्वरान्त एव। तथाऽपि अतिच्छन्दा इति पाठः स्वाध्यायधर्मो द्रष्टव्यः। अस्ति च लोके कामवचनः छन्दशब्दः स्वच्छन्दः परच्छन्दः इत्यादौ। अतः अतिच्छन्दमित्येवमुपनेयम्। कामवर्जितमेतद्रूपमित्यर्थः।

**अभयं** रूपम्—भयं हि नाम अविद्याकार्यम्; अविद्यया हि भयं मन्यते। तथा च कार्यद्वारेण कारणप्रतिषेधोऽयम्; अविद्याऽतीतं स्वरूपमित्यर्थः।

**तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माभयं रूप**मिति श्रुतिः।

**अकामं** रूपम्—

काम्यन्त इति कामाः विषयाः तद्रहितं रूपम्। **आत्मकामं अकामं रूप**मिति श्रुतिः।

**अग्र्यम्**—अग्रे भवमग्र्यम्, सर्वस्मात् प्रपञ्चात् पुरतो विद्यमानमित्यर्थः। **ब्रह्मपुराणमग्र्य**मिति श्रुतिः।

**अप्रमयम्**—अप्रमेयं सर्वैकत्वात्। अन्येन ह्यन्यत् प्रमीयते। इदंत्वेकमेव, अतोऽप्रमेयम्। **एतदप्रमयं ध्रुव**मिति श्रुतिः।

**अन्नादः**—सर्वभूतस्थस्सर्वान्नानामत्ता। **अन्नादो वसुदानः** इति श्रुतिः।

**अमरः**—नम्रियत इत्यमरः। उत्पत्त्यादिविकाररहितोऽपि। तथा च उत्पत्त्यादिविनिर्मुक्तमात्मानं सदा अहमित्यनुसन्दध्यात्। तदुक्तं **उपदेशसाहस्रिकायाम्**—

**अजोऽमरश्चैव तथाऽजरोऽमृतः स्वयंप्रभस्सर्वगतोऽहमद्वयः।**

**न कारणं कार्यमतीव निर्मलस्सदैव तृप्तश्च ततो विमुक्त ओम्।** इति।

**अजरोऽमरोऽमृत** इति श्रुतिः।

**अविनाशी**—विनशनं शीलमस्येति विनाशी, न विनाशी अविनाशी। विनाशशब्देन विक्रिया [उच्यते] अविक्रिय आत्मेत्यर्थः।

**अनुच्छित्तिधर्मा**—उच्छित्तिरुच्छेदः विनाशः, उच्छित्तिः धर्मोऽस्येति उच्छित्तिधर्मा, न उच्छित्तिधर्मा अनुच्छित्तिधर्मा । न विक्रियालक्षणो नाप्युच्छेदलक्षणो विनाशः अस्यात्मनो विद्यत इत्यर्थः । **अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा** इति श्रुतिः ।

**ब्रह्मोपनिषदि**—

**अमनस्कम्**—मनोरहितम् । **अमनस्कमश्रोत्र**मिति श्रुतिः ।

अथ **कैवल्योपनिषदि**—

**अव्यक्तम्**—शब्दाद्यशेषविशेषशून्यम् । तदुक्त**मीश्वरगीतायां** तृतीयाध्याये—

**यत्तत् सर्वगतं दिव्यमैश्वर्यममलं महत् ।**
**ज्ञानयोगाभियुक्तस्तु देहान्ते तदवाप्नुयात् ।**
**एष आत्माऽहमव्यक्तो मायावी परमेश्वरः ।**
**कीर्तितस्सर्ववेदेषु सर्वात्मा सर्वतोमुखः ।** इति ।

तत्रैव—

**सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।**
**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**सर्वाधारं समानन्दमव्यक्तं द्वैतवर्जितम् ।**
**सर्वोपमानरहितं प्रमाणातीतगोचरम् ।**
**निर्विकल्पं निराभासं सर्वाभासं परामृतम् ।**
**अभिन्नं भिन्नसंस्थानं शाश्वतं ध्रुवमव्ययम् ।**
**निर्गुणं परमं व्योम तत् ज्ञानं सूरयो विदुः ।**
**स आत्मा सर्वभूतानां सबाह्याभ्यन्तरः परः ।**
**सोऽहं सर्वगतं तेजः ज्ञानात्मा परमेश्वरः**

**मया ततमिदं विश्वं जगदव्यक्तमूर्त्तिना ।**
**मत्स्थानि सर्वभूतानि यस्तं वेद स वेदवित् ।** इति ।

**अनन्तरूपम्**—न विद्यते अन्तः इयत्ता रूपाणां यस्य सोऽयमनन्तरूपः । देशकाल-वस्तुपरिच्छेदशून्यो वा । अव्यक्तादिविशेषणमात्मानं सदा अवलोकयेत् । तदुक्तं **वासिष्ठे** अर्जुनं प्रति श्रीकृष्णेन—

**अनन्तमव्यक्तमनादिमध्यमात्मानमालोकय राजहंस ।**
**संविद्वपुः स्फारमलब्धदोषमजोऽसि नित्योऽसि निरामयोऽसि** । इति ।

श्रुतिस्तु—**अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तं** इति।

**अखण्डबोधम्**— अपरिच्छिन्नज्ञानस्वरूपम्। **आधारमानन्दमखण्डबोध**मिति श्रुतिः।

**अद्वयम्**—ज्ञातृज्ञेयादिविभागशून्यम् ।

ननु ज्ञातृज्ञेयादिविभागस्य प्रत्यक्षसिद्धत्वात् कथं तच्छून्यता—मैवम्—द्वयस्य कल्पितत्वात् । तदुक्त**मुपदेशसाहस्रिकायाम्**—

**इदन्तु सत्यं मम नास्ति विक्रिया विकारहेतुर्न हि मेऽद्वयत्वतः ।**
**न पुण्यपापे न च मोक्षबन्धने न चास्ति वर्णाश्रमिताऽशरीरतः ।**

अद्वयत्वतः अशरीरतः-इति पदच्छेदः । इदं-मया प्रतिज्ञातं सत्यमेव । किन्तत्-मम-आत्मनो नास्ति विक्रियेत्यादि ।

**अनादितो निर्गुणतो न कर्म मे फलं च तस्मात् परमोऽहमद्वयः ।**
**यथा नभस्सर्वगतं न लिप्यते तथाप्यहं देहगतोऽपि सूक्ष्मतः ।**
**यदद्वयं ज्ञानमतीव निर्मलं महात्मनां तत्र नशोकमोहता ।**
**तयोरभावे हि न कर्म जन्म वा भवेदयं वेदविदां विनिश्चयः ।**

यदद्वयमतीव निर्मलं ब्रह्म तत्र येषां महात्मनां ज्ञानं वृत्तिरूपं इत्यन्वयः ।

**सुषुप्तवत् जाग्रति यो न पश्यति द्वयन्तु पश्यन्नपि चाद्वयत्वतः।**
**तथा च कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः।**

अस्यार्थः—यथा सुषुप्ते करणोपरमात् द्वयं न पश्यति तथा जागरिते यो ज्ञाननिष्ठः द्वयं न पश्यत्येव - पश्यन्नपि मिथ्यारूपरज्जुसर्पवत् परमार्थबुध्या न पश्यति, अद्वयरूपत्वात् । तथा च भिक्षाटनादिकं प्रारब्धकर्मफलं कर्म जन्मान्तरसंस्कारवशात् कुर्वन्नपि परमार्थतो निष्क्रियश्च यः स आत्मवित्, नान्यः अन्यथादर्शी; इति इह वेदान्तसमये ब्रह्मविदां विनिश्चयः ।

**तद्ब्रह्माद्वयमस्म्यह**मिति श्रुतिः ।

**अचिन्त्यशक्तिः**—अचिन्त्या चिन्ताऽविषयीभूता चिच्छक्तिः तद्वान् । अथवा, अचिन्त्याः चिन्तयितुमशक्याः इयत्तारहिताश्शक्तयो जगत्सर्गादौ सहकारित्वेन अपेक्षिताः यस्य सोऽचिन्त्यशक्तिः ।

तदुक्तं **सूतसंहितायाम्**—

**जगत्कारणमापन्नश्शिवो यो मुनिपुङ्गवाः ।**
**सा तस्यापि भवेच्छक्तिस्तया हीनो निरर्थकः ।**
**सर्वज्ञत्वं गतो यस्तु शिवस्साक्षादुपाधिना ।**
**सा तस्यापि भवेच्छक्तिस्तया हीनो निरर्थकः ।**
**ईक्षितृत्वं गतो यस्तु शिवस्साक्षादुपाधिना ।**
**सा तस्यापि भवेच्छक्तिः** इत्यादिना ॥

**अचक्षुः**—चक्षुर्विहीनः ।

**अकर्णः**—कर्णरहितः । सर्वेन्द्रियरहितोऽपि सर्ववृत्तिसाक्षीत्यर्थः ।

श्रुतिस्तु—

**अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुस्स शृणोम्यकर्णः** । इति ।

**अविमुक्तः**—विरुद्धत्वेन मुक्ताः विमुक्ताः पशवः तेभ्यो व्यतिरिक्तः अविमुक्तः पशुपतिः । **तस्मादविमुक्तमाश्रितो भवती**ति श्रुतिः ।

अथ जाबालोपनिषदि—

**अविमुक्ते प्रतिष्ठितः**—अविमुक्ते अविद्योपाधिकल्पितावच्छेदे जीवात्मनि; स खल्वविमुक्तः; तस्मिन् प्रतिष्ठितः; परमात्मतादात्म्यात्। अविद्याकल्पितत्वेन भेदमाश्रित्य आधाराधेयभावः। **सोऽविमुक्ते प्रतिष्ठितः** इति श्रुतिः।

अथ श्वेताश्वतरोपनिषदि—

**अकर्ता**—कर्तृत्वादिसर्वसंसाररहितः।

**शैवे एकादशरुद्रसंहितायाम्** हेमसभानाथमाहात्म्ये षष्ठाध्याये व्याघ्रपादपतञ्जली—

**जय भूतेश गौरीश जयाशेष महेश्वर।**
**जय भक्तपराधीन प्रमाणानामगोचर।**
**कर्तृत्वमपि भोक्तृत्वं नाथ त्वयि न विद्यते।**
**बुद्धौ त्वं प्रतिबिम्बेन कर्ता भोक्ता च गीयसे।** इति।
**अनन्तश्चात्मा विश्वरूपो ह्यकर्ता** इति श्रुतिः।

**अमृताक्षरम्**—अमृतं च तदक्षरं च अमृताक्षरं, नित्यस्वरूपमित्यर्थः। **क्षरं प्रधानममृताक्षरं हरः** इति श्रुतिः।

**अघोरा**—अविद्यातत्कार्यविनिर्मुक्ता शशिबिम्बमिवाह्लादिनी; परमानंदरूपत्वात्।

**अपापकाशिनी**—स्मृतिमात्रादघनाशनी पुण्याभिव्यक्तिकरी चिद्रूपा मूर्तिः।

श्रुतिस्तु—**या ते रुद्र शिवा तनूरघोराऽपापकाशिनी** इति।

**अनामयम्**—आध्यात्मिकादितापत्रयरहितं, सुखस्वरूपमित्यर्थः। **तद्रूपमनामयमि**ति श्रुतिः।

**अमृतत्वस्येशानः**—अमरणधर्मत्वस्य कैवल्यस्य ईशानः, मोक्षप्रद इत्यर्थः। **उतामृतत्वस्येशानः** इति श्रुतिः।

**अनादिमत्**—आद्यन्तशून्यमात्मतत्वमित्यर्थः । **अनादिमत्त्वं विभुत्वेन वर्तसे** इति श्रुतिः ।

**अनेकरूपः**—चेतनाचेतनात्मकसकलप्रपञ्चरूपः । **विश्वस्य स्रष्टारमनेकरूप**मिति श्रुतिः ।

**अतिसूक्ष्मः**—विद्वद्बुद्धिगम्य इत्यर्थः। **घृतात् परम्मण्डमिवातिसूक्ष्मम्** इति श्रुतिः।

**अजातः**—जन्मजरादिधर्मवर्जितः । तदुक्तं **वायवीयसंहितायां** चतुर्थाध्याये—

**अजातमिममेवैकं मत्वा जन्मनि भीरवः ।**
**रुद्रस्यास्य प्रपद्यन्ते रक्षार्थं दक्षिणामुखम्** । इति ।

**अजात इत्येवं कश्चि**दिति श्रुतिः ।

**अनीडाख्यः**—नीडं शरीरं ; अशरीराख्यः । **भावग्राह्यमनीडाख्यम्** इति श्रुतिः ।

**अमृतस्य परस्सेतुः**—अमृतस्य अमृतत्वस्य मोक्षस्य प्राप्तये परः उत्कृष्टः सेतुरिव सेतुः संसारमहोदधेरुत्तरणोपायत्वात् । **अमृतस्य परं सेतुं दग्धेन्धनमिवानल**मिति श्रुतिः ।

अथ **परहंसोपनिषदि**—

**अचलः**—गमनादिक्रियारहितः ।

**अद्वयानन्दविज्ञानघनः**—स्वगतसजातीयविजातीयभेदशून्यचिदानन्दैकरसः ।
श्रुतिस्तु—**शान्तमचलमद्वयानन्दविज्ञानघन एवास्मीति ।**

अथ **गर्भोपनिषदि**—

**अशुभक्षयकर्ता**—सवासनक्लेशनाशनकर्ता। श्रुतिस्तु—**अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम्** इति ।

अथ **अमृतबिन्दूपनिषदि**—

**अप्रमेयः**—प्रत्यक्षादिप्रमाणागम्यः। तदुक्तं **श्रीमहाभारते आरण्यपर्वणि** किरातार्जुनीये शिवं प्रति अर्जुनः—

संप्राप्तं जन्मसाफल्यं कृतार्थोऽस्मि घृणानिधे ।
अप्रमेयः प्रमाणैस्त्वं अहो प्रत्यक्षितोऽसि यत् ।
निष्कलो निर्मलो नित्यो नित्यानन्दो निरञ्जनः ।
निरन्वयो निराधारो निरीहो निर्गुणोऽमितः ।
चित्घनः परमं ब्रह्म परंज्योतिः सनातनः ।
विज्ञानं सन्मयं विश्वं अवाङ्मनसगोचरम् ।
अणोरल्पतरं चैव महतोऽपि महत्तरः ।
अधिष्ठायाखिलान्तस्थः परमाक्षरशक्तितः ।
व्याप्यस्त्वचित्स्वरूपीव दृश्यसे स्पृश्यसे मया ।
मत्समो न हि लोकेषु भागधेयी महेश्वर । इति ।

**अप्रमेयमनादि** इति श्रुतिः ।

**मैत्रायण्याम्**—

**अक्षय्यः**—क्षयरहितः षड्भावविकाररहित इत्यर्थः। **अनन्तोऽक्षय्यः स्थिरश्शाश्वतो जयति** इति श्रुतिः ।

**अनिच्छः**—इच्छारहितः । इच्छाराहित्यं च आप्तकामत्वात्। तथा चाधिकारी सर्वेच्छाविनिर्मुक्तः परमानन्दरूपं परमात्मानं सर्वदाऽनुसन्दध्यात् । इच्छाया अनर्थहेतुत्वमुक्तं **वासिष्ठे**—वसिष्ठः—

रामेच्छा नाम करिणी इदमस्त्वितिरूपिणी ।
शरीरकानने मत्ता विविधोल्लासकारिणी।
मत्तेन्द्रियोग्रकलभा रसनाकलभाषिणी ।
मनोगहनसंलीना कर्मदन्तद्वयान्विता ।

अस्यार्थः—इच्छा नाम करिणी, सा च इदं मेऽस्त्वित्येवंरूपिणी, सा चेच्छाकरिणी शरीर एव कानने मत्ता सती विविधोल्लासकरणशीला, मत्तानीन्द्रियाण्येव उग्रकलभाः यस्याः तादृशी,

रसनाकलभाषिणी रसनैव रसना तया कलभाषणशीला, मन एव गहनं दुष्प्रवेशं स्थानं तत्र संलीना, कर्मदन्तद्वयान्विता पुण्यापुण्यलक्षणदशनद्वयवती ।

**मदोऽस्या वासनाव्यूहस्सर्वतःप्रसरद्वपुः ।**
**संसारदृष्टयो नाम तस्यास्समरभूमयः ।**
**भूयो यत्रानुभवति नरो जयपराजयौ ।**
**इच्छा नाम निहन्त्येतान् कृपणान् जीवसञ्चयान् ।**

अस्यार्थः—अस्याश्च इच्छाकरिण्याः सर्वतःप्रसरद्वपुः वासनाव्यूह एव मदः, संसारदृष्टय एव तस्यास्समरभूमयः, भूयो यत्र पुमान् नरः जयपराजयौ अनुभवति तस्मिन् इच्छानागी कृपणान् जीवसञ्चयान् निहन्ति ।

**वासनेहा मतिश्चित्तं सङ्कल्पो भावनं स्पृहा ।**
**इत्यादिर्निवहो नाम्नामस्या आशयकोशगः ।**

वासना ईहा मतिः चित्तं सङ्कल्पः भावनं स्पृहा इत्यादिशब्दसमुदायः अस्याः आशयकोशगः-आशयोऽन्तःकरणं स एव कोशः गृहं तद्विषयः, स एव इच्छाकरिण्याः नाम्नां निवहः ।

**धैर्यनाम्ना वरास्त्रेण प्रसृतामवहेलया ।**
**नागीं सर्वात्मिकामेतामिच्छां सर्वात्मना जयेत् ।**

अस्यार्थः—अवहेलया—इतरेषामस्त्राणामवज्ञया प्रसृतां सर्वात्मिकां-सर्वविषयत्वात् विषयैस्तादात्म्यापन्नां इच्छारूपां नागीं धैर्यनाम्ना वरास्त्रेण सर्वात्मना-सर्वप्रकारेणापि जयेत् । धैर्येणैवाङ्कुशेन इच्छारूपां नागीं करिणीं वशीकुर्यात् इत्यर्थः । धैर्यञ्चात्र परे ब्रह्मणि चित्तस्थैर्यम् ।

**यावदस्त्विदमित्येवमियमन्तर्विजृम्भते ।**
**तावदुग्रा कुसंसारविषवेगविषूचिका ।**

इदमस्त्वित्येवंरूपा इच्छाकरिणी यावदन्तर्विजृम्भते, तावदेव इयं उग्रा कुसंसारमहाविषविषूचिका विजृम्भते । कुत्सितस्संसार एव महाविषजन्यविषूचिका ।

**एतावानेव संसारः इदमस्त्विति यन्मनः।**
**अस्य तूपशमो मोक्ष इत्येवं ज्ञानसंग्रहः ।**

इदम्ममास्त्विति यत् मनः-संकल्पनमस्ति एतावानेव संसारः; सर्वस्यापि संसारस्य मनोमूलत्वात् । अस्य तु मनस उपशम एव मोक्षः, इत्येवं ज्ञानस्य ज्ञानोपदेशस्य संग्रहः ।

**मनागप्युदितैवेच्छा छेत्तव्याऽनर्थकारिणी ।**
**असंवेदनशस्त्रेण विषवृक्षाङ्कुरावली ।**

अनर्थकारिणी इयमिच्छा मनागप्युदितैव विषवृक्षस्याङ्कुरावलीव असंवेदनशस्त्रेण-संवेदनं बाह्यानुसन्धानं तदभावोऽसंवेदनं तेनैव शस्त्रेण छेत्तव्या ।

श्रुतिस्तु—**ते होचुर्भगवन् कथमनेनेदृशेनानिच्छेने**ति ।

**अलेपः**—अविद्यातत्कार्यलेपरहितः । तदुक्त**माचार्यैः**—

**दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् ।**
**अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्त ओम् ।** इति आत्मनः

अलेपत्वमुक्तम् ।

**श्रीविष्णुपुराणेऽपि**—

**ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।**
**एकस्सदैकः परमः परेशः स वासुदेवो न ततोऽन्यदस्ति ।** इति ।

**पाद्मे** पुराणे **शिवगीतासू**पनिषत्सु द्वितीयाध्याये श्रीरामं प्रत्यगस्त्यः—

**निर्लेपः परिपूर्णश्च सच्चिदानन्दविग्रहः ।**
**आत्मा न जायते नैव म्रियते न च दुःखभाक् ।**
**सूर्योऽसौ सर्वलोकस्य चक्षुष्ट्वेन व्यवस्थितः ।**
**तथाऽपि चाक्षुषैर्दोषैर्न कदाचिद्विलिप्यते ।**
**सर्वभूतान्तरात्माऽपि तद्वद्दुःखैर्न लिप्यते ।** इति ।

अव्यग्रः—सृष्टिस्थितिसंहारकार्यवैय्यग्र्यरहितः ।

तदुक्तं भगवता—

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि । इति ।

श्रुतिस्तु—अलेपोऽव्यग्रो निस्पृहः इति ।

अनादिनिधनः—उत्पत्तिविनाशरहितः । अत एव नित्यः स्वप्रकाशः मानान्तरागम्यश्च । तदुक्तं श्रीमहाभारते—

अनादिनिधनं देवमात्मयोनिं सनातनम् ।
अप्रतर्क्यमविज्ञेयं हरिं नारायणं प्रभुम् । इति ।

पाद्मे पुराणे कल्याणकाण्डे शिवं प्रति सप्तर्षयः—

जय देव महादेव जय त्रिपुरमर्दन ।
जय दक्षमखाराते जय त्रिपथगाधर ।
ईशानाय नमस्तुभ्यं त्रिणेत्राय नमो नमः ।
ध्येयाय ध्यानरूपाय ध्यापयित्रे नमो नमः ।
अखण्डैकाश्रयाधार अखण्डज्ञानगोचर ।
अनादिमध्यनिधन परमात्मन्नमोस्तु ते । इति ।

अचिन्त्यायाप्रमेयाय अनादिनिधनाय चेति श्रुतिः ।

अथ उत्तरतापनीयोपनिषदि—

अस्वप्नः—स्वप्नावस्थारहितः, भ्रान्तिज्ञानरहितः ।

असुषुप्तः—सुषुप्त्यवस्थारहितः, अज्ञानरहित इत्यर्थः ।

अजाग्रत्—जाग्रदवस्थारहितः, अन्यथाज्ञानरहित इत्यर्थः ।

अव्यभिचारी—अवस्थात्रयेऽप्यनुस्यूतः ।

तथा च जाग्रदाद्यवस्थात्रयक्षीणं तुरीयमात्मानं भावयेदिति भावः ।

तदुक्तं **वासिष्ठे**—

**अविभागमनायासं यदनाद्यन्तमास्थितम् ।**
**ध्यायतोऽध्यायतो वैतत् सौषुप्तं मौनमुच्यते ।**
**यथा भूतमिदं बुध्वा जगन्नानात्वविभ्रमम् ।**
**यथास्थितमसन्देहं सौषुप्तं मौनमेव तत् ।**
**अनेकसंविद्रूपात्म शिवमेवेदमाततम् ।**
**इत्यास्थितमनन्तं यत् सौषुप्तं मौनमुच्यते ।**
**आकाशं नैव चाकाशं सर्वमस्ति च नास्ति च ।**
**इति स्थितं समं शान्तं यत्तन्मौनं सुषुप्तवत् ।** इति ।

अस्यार्थः—अविभागमिति । ध्यायतोऽध्यायतो वा अन्तर्मुखस्य वा बहिर्मुखस्य वा मुने- अविभागं—अविद्यमानजाग्रदादिविभागं अनायासं—अविद्यमानज्ञानकर्मेन्द्रियनिरोधक्लेशं अनाः द्यन्तं उपक्रमोपसंहाररहितं यदास्थितम्—ब्रह्मनिष्ठत्वं एतत् सौषुप्तं-सुषुप्तिसंभवं मौनमुच्यते । महायोग एव सौषुप्तं मौनमित्यर्थः । यदाह **सर्वयोगी**—

**प्रपञ्चस्य भानेऽप्यभाने समं यत् न वा विद्ययाऽविद्ययाऽऽलिङ्गिताङ्गम् ।**
**तदात्मस्वरूपं सदानन्दसान्द्रं परं ब्रह्मभावं महायोगमाहुः ।** इति ।

यथा च **शैवे**—

**शिवस्वभाव एवैकश्चिन्त्यते निरुपाधिकः ।**
**यदा सैव मनोवृत्तिर्महायोग इहोच्यते ।** इति ।

नानात्वविभ्रमं—नानात्वेन परिभ्रान्तं जगत्, यथा भूतं येन प्रकारेण निष्पन्नं तं प्रकारं बुद्ध्वा—ब्रह्मणि अध्यस्तत्वात् तदात्मकं निश्चित्य असन्देहं—निर्विकल्पं यत् ब्रह्मभावेन आस्थितं तच्च सौषुप्तं मौनमेव ।

इदं-जगत् अनेकसंविद्रूपात्म-अनेकसंविद्रूपा आत्मानः स्वभावा यस्य तादृशं आततं—व्याप्तं शिवं-ब्रह्मैवेति यदनन्तं—निरवधिकं ब्रह्मनिष्ठत्वं तत्सौषुप्तं मौनमुच्यते।

सर्वं जगत् आकाशं, चिदाकाशविवर्तत्वात्; आकाशं नैव च, मूर्तिमत्वात्; तथा अस्ति च, अधिष्ठानसत्तया सद्रूपेण प्रतीतेः; नास्ति च, कल्पितत्वात्; इति जगतो ब्रह्मव्यतिरेकेण नास्तित्वं निश्चित्य सममेकाकारं शान्तञ्च यत् स्थितं तत् सुषुप्तवत् मौनं सुषुप्ततुल्यं मौनमित्यर्थः इति।

श्रुतिस्तु—**तं वा एतमात्मानञ्जाग्रत्यस्वप्नमसुषुप्तं स्वप्नेऽजाग्रतमसुषुप्तं सुषुप्ते अजाग्रतमस्वप्नं तुरीयेऽजाग्रतमस्वप्नमसुषुप्तमव्यभिचारिण**मिति।

**अविक्रियः**—सर्वसाक्षित्वात् विकाररहितः। तदुक्तमाचार्यैः—

**दृशिस्तु शुद्धोऽहमविक्रियात्मको नमेऽस्ति कश्चिद्विषयः स्वभावतः।**
**पुरस्तिरश्चोर्ध्वमधश्च सर्वतः सुपूर्णभूमा त्वज आत्मनि स्थितः।** इति।

**अविक्रियो महाचैतन्य** इति श्रुतिः।

**अनुज्ञाता**—अनुज्ञां ददाति इत्यनुज्ञाता, सर्वस्य प्रपञ्चस्य अनृतजडरूपस्य स्वात्मन्यध्यस्तस्य सत्तां स्फूर्तिञ्च ददातीत्यर्थः। श्रुतिस्तु—**अनुज्ञाताह्ययमात्मा अस्य सर्वस्य स्वात्मानं ददाति इदं सर्वं स्वात्मानमेव करोतीति।**

**अनुज्ञा**—अनुज्ञैकरस इत्यर्थः। **ओतानुज्ञात्रनुज्ञा** इति श्रुतिः॥

**अनुज्ञैकरसः**—स्वात्मन्यध्यस्तस्य प्रविलापने सति स्वयमेव प्रकाशते, यथा दाह्यं दग्ध्वाऽग्निः स्वयमेव वर्तते तद्वत् इत्यर्थः। श्रुतिस्तु—**अनुज्ञैकरसो ह्ययमात्मा चिद्रूप एव यथा दाह्यं दग्ध्वा अग्निः** इति।

**अविकल्पः**—विकल्परहितः, अवाङ्मनोगोचरः, मनोवागविषय इत्यर्थः।

**स्कान्दे** कालिकाखण्डे पञ्चचत्वारिंशाध्याये शिवं प्रति भृंगिरिटिः—

नित्य निर्माय नीरूप सुनिर्मल निरञ्जन ।
धुरन्धर नमस्तुभ्यं मनोवाचामगोचर । इति ।

**वायवीयसंहितायां** चतुर्विंशाध्याये कृष्णं प्रत्युपमन्युः—

जय जय जगदेकनाथ देव प्रकृतिमनोहर चित्स्वभावरूप ।
अतिगतकलुषप्रपञ्च वाचामपि मनसां पदवीमतीततत्त्व । इति ।

**शिवगीतायां** दशमाध्याये श्रीरामं प्रति शिवः—

सत्यज्ञानात्मकोऽनन्तस्सच्चिदानन्दविग्रहः ।
परमात्मा परञ्ज्योतिः अव्यक्तोऽव्यक्तकारणम् ।
नित्यो विशुद्धस्सर्वात्मा निर्लेपोऽहं निरञ्जनः ।
सर्वधर्मविहीनश्च न ग्राह्यो मनसाऽपि च ।
नाहं सर्वेन्द्रियग्राह्यस्सर्वेषां ग्राहकोऽस्म्यहम् ।
ज्ञाताऽहं सर्वलोकस्य मम ज्ञाता न विद्यते ।
दूरः सर्वविकाराणां परिणामादिकश्च न ।
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्म मां ज्ञात्वा न बिभेति कुतश्चन । इति ।

**तत्रैव त्रयोदशाध्याये** रामं प्रति शिवः—

सत्यं ज्ञानमनन्तं सदानन्दं ब्रह्मकेवलम् ।
सर्वधर्मविहीनश्च मनोवाचामगोचरम् ।
स्वजातीयविजातीयरूपनामाद्यसम्भवात् ।
अतस्तद्व्यतिरिक्तत्वादद्वैतमितिसंज्ञितम् ।
मत्वा रूपमिदं राम शुद्धं यदभिधीयते ।
मध्ये च दृश्यते सर्वं जगत् स्थावरजंगमम् ।

व्योम्नि गन्धर्वनगरं यथा दृष्टं न दृश्यते ।
अनाद्य विद्यया विश्वं सर्वं मय्येव विद्यते ।
विवर्तते तु मय्येव मय्येवेदं विलीयते ।
मम स्वरूपज्ञाने च यदाऽविद्या प्रणश्यति ।
तदैक एव वर्तेऽहं मनोवाचामगोचरः ।
सदैव परमानन्दस्वप्रकाशचिदात्मनि ।
न कालः पञ्चभूतानि न दिशो विदिशश्च न ।
मदन्यन्नास्ति यत्किञ्चित्तदा वर्तेऽहमेकलः । इति ।

ब्रह्मगीतायां देवान् प्रति ब्रह्मा—

यतो वाचो निवर्तन्ते निमित्तानामभावतः ।
निर्विशेषे शिवे शब्दः कथं देवाः प्रवर्तते ।
विशेषं कञ्चिदाश्रित्य खलु शब्दः प्रवर्तते ।
यस्मादेतन्मनस्सूक्ष्मं व्यावृत्तं सर्वगोचरम् ।
यस्माच्छ्रोत्रत्वगक्ष्यादि खानि कर्मेन्द्रियाणि च ।
व्यावृत्तानि पराग्वस्तुविषयाणि सुरोत्तमाः ।
तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ।
विदित्वा स्वात्मरूपेण न बिभेति कुतश्चन । इति ।

तत्रैव—

तत्र चक्षुश्च वाक्चैव मनश्चान्यानि खानि च ।
न गच्छन्ति स्वयंज्योतिस्स्वरूपे परमात्मनि । इति ।

अविकल्पो ह्ययमात्मा वाङ्मनोऽगोचरत्वात् इति श्रुतिः ।

अविकल्परूपं—वाच्यवाचकभेदरहितम् ।

स्वरूपमविकल्परूपं हीदं सर्वमिति श्रुतिः।

अविद्याकार्यहीनः—नित्यशुद्धबुद्धमुक्तस्वभाव इत्यर्थः ।

अविद्याकार्यहीनः स्वात्मबन्धहरः इति श्रुतिः।

अहं—आत्मेत्यर्थः।

ननु अहंकारस्य कर्तृत्वादिविशिष्टत्वेन अध्यस्तरूपत्वात् कथमात्मत्वं? उक्तञ्च भगवद्भिर्भाष्यकारैरहङ्कारस्याध्यस्तरूपत्वं तथाऽप्यन्योन्यस्मिन्नित्यादिना, अहमिदम्ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः इत्यन्तेन । उक्तञ्च भामत्यां—तदेवमुक्तेन प्रकारेणाहंप्रत्यये पूतिकूश्माण्डीकृते भगवती श्रुतिः अप्रत्यूहा कर्तृत्वभोक्तृत्वदुःखशोकाद्यात्मत्वमहनुभवप्रसञ्जितमात्मनो निषेद्धुमर्हतीति। पञ्चपादिकायामप्युक्तम्— अहमिति तावत् प्रथमोऽध्यासः इति । शैवे एकादशरुद्रसंहितायाम्—

अहङ्कारपरं विप्रमन्तर्गृहजलाशयम् ।
गुडान्नञ्च विषोन्मिश्रं दूरतः परिवर्जयेत् । इति ।

वासिष्ठेऽपि—

मुधैवाभ्युत्थितो मोहात् मुधैव परिवर्धते ।
मिथ्यामयेन भीतोऽस्मि दुरहङ्कारवैरिणा ।

अस्यार्थः—अहङ्कारस्य अन्यथाज्ञानस्वरूपत्वात् मोहात्—अज्ञानात् उदयः वृद्धिश्च युज्यते । भीतोऽस्मि-भयं प्रापितोऽस्मि।

अहङ्कारवशादापदहङ्कारात् दुराधयः ।
अहङ्कारवशादीहा नाहङ्कारात् परो रिपुः ।
तमहङ्कारमाश्रित्य परमश्चिरवैरिणम् ।
न भुञ्जे न पिबाम्यम्भः किमु भोगान् भुजे मुने ।

**सर्वापदां निलयमध्रुवमन्तरस्थं उन्मुक्तमुत्तमगुणेन न संश्रयामि।**
**यस्मादहंकृतिपदं परितोऽतिदुःखं शेषेण मां समनुशाधि महानुभाव।**

अहंकृतिपदं—यस्मिन् देहादौ अहंकृतिरुदेति तत् अहंकारास्पदं देहेंद्रियादिकं यस्मान्न संश्रयामि - आत्मत्वेन नाभिमन्ये दुःखात्मकत्वात्, अतश्शेषेण मां समनुशाधि - अहंकृतिविषयीकृतात् देहेंद्रियादेर्यच्छिष्यते तेन शिष्यमाणेन अहंकृत्यविषयेण शुद्धेन आत्मस्वरूपेण मामनुशाधि बोधय इति श्रीरामेण अहङ्कारनिन्दा कृता। अन्यत्राप्युक्तं **वसिष्ठेन**—

**अहभावोऽङ्कुरो जन्मवृक्षाणामक्षयात्मनाम्।**
**ममेदमिति या बुद्धिस्तेषां शाखा असत्फलाः।** इति।

किञ्च—अहंकारत्यागस्य आत्मज्ञानं प्रति हेतुत्वमुक्तं **भगीरथं** प्रति **त्रितुलेन** गुरुणा।

**रागद्वेषक्षयकरं संसारव्याधिभेषजम्।**
**अहंभावोपशान्तौ तु राजन् ज्ञानमवाप्यते।**

भगीरथः—

**शरीरेऽस्मिंश्चिरारूढो गिरौ तरुरिव स्थितः।**
**अहंभावो महाभाग वद मे त्यज्यते कथम्।**

त्रितुलः—

**पौरुषेण प्रयत्नेन त्यक्त्वा भोगौघभावनाम्।**
**गत्वा विकसितां सत्तामहंकारलयं व्रजेत्।**

पौरुषेण प्रयत्नेन - वासनाक्षयहेतुसम्यग्ज्ञानसमाध्यभ्यासादिरूपः पौरुषप्रयत्नः तेन, भोगौघभावनां त्यक्त्वा विकसितां - पूर्णां सत्तां - ब्रह्मसत्तां गत्वा - आश्रित्य अहंकारलयं व्रजेत्।

**यन्त्रणापञ्जरं यावत् भग्नं लज्जादि नाखिलम्।**
**अकिञ्चनत्वशेषेण स्फुटा तावदहंकृतिः।**

लज्जादि—अनुचिते कर्मणि चेतस्संकोचो लज्जा, आदिशब्दात् जातिकुलाभिमानादिर्गृह्यते। तदुक्तम्—

**घृणा शङ्का स्पृहा लज्जा जुगुप्सा चेति पञ्चमी।**
**कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्तिताः।** इति।

तादृशं लज्जादि यन्त्रणापञ्जरं अकिञ्चनत्वशेषेण-स्वरूपातिरिक्तं किञ्चिदपि यस्य नास्ति सोऽकिञ्चनः तद्भावमात्रशेषेण यावदखिलं न भग्नं तावदहंकृतिः स्फुटा-न निवर्तत इत्यर्थः।

**सर्वमेतद्धिया त्यक्त्वा यदि तिष्ठसि निश्चलः।**
**तदहंकारविलये त्वमेव परमं पदम्।**

सर्वं लज्जाऽभिमानादिकमित्यर्थः।

**शान्ताशेषविशेषणो विगतभीस्सन्त्यक्तसर्वैषणो**
**गत्वा नूनमकिञ्चनत्वमरिषु त्यक्त्वा समग्रं श्रियम्।**
**शान्ताहंकृतिरस्तदेहकलनस्तेष्वेव भिक्षामटन्**
**मामप्युज्झितवानलं यदि भवस्युच्चैस्तदुच्चैरपि।**

शान्तानि अशेषविशेषाणि-ब्राह्मणोऽहं गृहस्थोऽहमित्यादीनि यस्य, विगता भीर्भयहेतुर्यस्मात्, मामपरित्याज्यमपि गुरुं अलं सम्यगुज्झितवान् यदि भवसि तत्तर्हि उच्चैरपि-उन्नतादपि उन्नतोऽसि, सर्वोत्कृष्टं ब्रह्मैवासीत्यर्थः।

**शिखिध्वजोपाख्यानेऽपि** अहङ्कारत्यागस्य पुरुषार्थत्वमुक्तम्—

शिखिध्वजः—

**अहङ्कारात्मनश्चित्तद्रुमबीजस्य हे मुने।**
**कोऽनलो दहनाख्येऽस्मिन् कर्मण्यर्थकरो भवेत्।**

कुम्भः—

**राजन्नात्मविचारोऽयं कोऽहंस्यामितिरूपधृक्।**
**चित्तदुर्द्रुपबीजस्य दहने दहनः स्मृतः।**

शिखिध्वजः—

मया मुने स्वया बुद्ध्या बहुशः प्रविचारितः ।
नाहं जगत्तथा देहो न मांसास्थ्यसृगादिमान् ।
कर्मेन्द्रियाणि नैवाहं नाहं बुद्धीन्द्रियाण्यपि ।
न मनो नापि बुद्धिश्च नाहङ्कारश्च जाड्यतः ।

कुम्भः—

एतावन्मात्रकं बृन्दं यदि न त्वं महीपते ।
जडत्वात् त्वं महाबुद्धे योऽसि तं वद मेऽनघ ।

शिखिध्वजः—

चिन्मात्रमजमच्छात्म वेदनं विदुषां वर ।
यत्र भावाः स्वदन्त्येते निर्णीयन्ते च येन वा ।

एते प्रतीयमाना भावाः पदार्थाः यत्र यस्मिन् वस्तुनि स्वदन्ते - यदाश्रिता रोचन्ते येन च निर्णीयन्ते - निश्चीयन्ते तदच्छात्म-निर्मलं अजं चिन्मात्रं वेदनमेवाहम् ।

एवंरूपस्य मे लग्नं नूनं मलमकारणम् ।
चित्तद्रुमस्य यद्बीजमहंभावात्मकं हृदि ।
तच्च त्यक्तुं न शक्नोमि तेन तप्ये सुदारुणम् ।

यच्चित्तद्रुमस्य बीजं तदहंभावात्मकं मलं एवंरूपस्य - विशुद्धचिन्मात्रस्य मे हृदि अकारणमेव लग्नं, तद्भूयोभूयस्त्यक्तमपि मामुपैति, अतस्त्यक्तुं न शक्नोमि, यस्माच्च न शक्नोमि तेन हेतुना सुदारुणं तप्ये - तप्तो भवामि ।

कुम्भः—

कारणाज्जायते कार्यमहंभावात्मकस्य तत् ।
मुने कारणमन्विष्य कथयाशु ममाधुना ।

शिखिध्वजः—

**मुनेऽहमितिदोषस्य वेदनं वेद्मि कारणम् ।**
**तद्यथोपशमं याति तन्मे वद मुनीश्वर ।**
**चितश्चेत्योन्मुखत्वेन दुःखायायमहं स्थितः ।**
**चेत्योपशमनं ब्रूहि मुने दुःखोपशान्तये ।**

अहमितिदोषस्य - अहङ्कारस्य वेदनं - चित्तश्चेत्योन्मुखत्वमेव कारणं वेद्मि। तच्च वेदनं यथा उपशमं याति तन्मे वद । एतदेव विवृणोमि - चितश्चेतनस्य चेत्योन्मुखत्वं - दृश्यानुसन्धानं तेन हेतुना अयमहङ्कारः दुःखाय स्थितः । ततो दुःखोपशान्तये चेत्योपशमनं - दृश्यस्य अस्फुरणं ब्रूहीति ।

कुम्भः—

**कारणं कारणज्ञोऽसि वेदनस्य वदाशु मे ।**
**ततस्त्वां बोधयिष्यामि कारणाकारणक्रमम् ।**

त्वं कारणज्ञोऽसि, अतो वेदनस्य कारणं वद । ततो वेदननिमित्तनिरूपणानन्तरं त्वां कारणाकारणक्रमं - अकारणं-कारणाभावः कारणस्य अकारणस्य च क्रमं - प्रकारं बोधयिष्यामि, इदमस्य कारणं भवति इदमस्य कारणं नेत्येतत् बोधयिष्यामीत्यर्थः ।

शिखिध्वजः—

**देहादिरूपयोदेति वेदनं वस्तुसत्तया ।**
**असत्याभासया स्पन्दो यथा पवनलेखया ।**

वेदनं कर्तृ, देहादिरूपया - शरीरेन्द्रियविषयरूपया असत्याभासया - मिथ्याभूतस्फुरणया वस्तुसत्तया - पदार्थरूपसत्तया उदेति, पवनलेखया स्पन्द इव ।

**असत्तां वस्तुसत्तायाः नावगच्छाम्यहं यया ।**
**अहत्ववेदनं चित्तबीजं समुपशाम्यति ।**

यया चित्तबीजमहत्त्ववेदनं - अहङ्कारः तत्कारणं वेदनञ्च समुपशाम्यति तां वस्तुसत्ताय असत्तां मिथ्यात्वं नावगच्छामि ।

कुम्भः—

**विद्यते यदि देहादिवस्तुसत्ता तदस्ति ते ।**
**अभावाद्देहसत्त्वादेः किंनिष्ठं तव वेदनम् ।**

देहादिवस्तुसत्ता यदि विद्यते तत्—तर्हि ते वेदनमस्ति संभवति, युज्यत इति यावत् देहसत्तादेरभावात्तु तव वेदनं किंनिष्ठं निरालम्बनमित्यर्थः ।

शिखिध्वजः—

**हस्तपादादिसंयुक्तः क्रियाफलविलासवान् ।**
**सदाऽनुभूयमानोऽयं देहो नास्ति कथं मुने ।**

कुम्भः—

**कारणं यस्य कार्यस्य भूमिपाल न विद्यते ।**
**विद्यते नेह तत्कार्यं तत्संवित्तिस्तु विभ्रमः ।**
**अविद्यमानमेव त्वं विद्धि सर्वं भ्रमोदितम् ।**
**अकारणं हि यद्वस्तु तन्मिथ्या रज्जुसर्पवत् ।**

शिखिध्वजः—

**आद्यः पितामहो यः स्यात् तेन सृष्टमिदं जगत् ।**
**स एवास्य कथं न स्यात् कारणं वद मे मुने ।**

कुम्भः—

**सर्गादौ केवलं शान्तं ब्रह्मैवास्ति महीपते ।**
**द्वितीयकलना भावात् वेधसोऽस्ति न कारणम् ।**

सर्गादौ केवलमद्वितीयं ब्रह्मैवास्ति, तत्तु न कारणं निर्विकारत्वात्, अन्यदपि जगत्कारणभूतं वस्तु नास्ति द्वितीयकलनाभावात्—द्वितीयस्य ब्रह्मव्यतिरिक्तस्य वस्तुनः प्रतीत्यभावात्। **आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषद्**इत्यादिश्रुतेः। अतो वेधसः कारणं नास्ति।

शिखिध्वजः—

**वेधसः परमं ब्रह्म कारणं किं न हे मुने।**
**अकारणकर्ता साधो तन्न प्रत्येमि वेधसः।**

कुम्भः—

**अनन्तमजमव्यक्तमजरं शान्तमच्युतम्।**
**अद्वितीयमनाद्यन्तं यदाद्यमुपलम्भनम्।**
**अप्रतर्क्यमविज्ञेयं तच्छिवं शान्तमव्ययम्।**
**तत् कथं कस्य केनैव कर्तृ वा भोक्तृ वा भवेत्।**
**अतो नेदं कृतं किञ्चिज्जगदेतन्न विद्यते।**
**चिन्मात्रकल्पितो वेधाश्चिदेवेति विनिश्चयः।**
**तन्मात्रजनितस्सर्गस्तदात्मक इति स्थितः।**

अनन्तत्वादिलक्षणं यदाद्यमुपलम्भनं ज्ञानस्वरूपं वस्त्वस्ति तद्वस्तु शिवं शान्तं अव्ययञ्चेति कृत्वा तत् कथं-केन प्रकारेण कर्तृ भवेत्, कस्य वा, स्वव्यतिरिक्तकार्यस्याभावात्, केन वा उपकरणेन, न केनचित्, तस्याप्यभावात्, एवं कर्तृत्वाभावात् भोक्तृत्वमपि नास्तीत्यर्थः। अतः कर्तृत्वाभावादिदंजगत् किञ्चिदपि न कृतम्। अतश्च वेधाश्चिन्मात्रपरिकल्पितत्वात् चिदेव। सर्गश्च तन्मात्रजनितः चिन्मात्ररूपिणा वेधसैव जनितत्वात् तदात्मकः चिन्मात्रात्मक इत्येवं स्थितो निश्चितः।

**न कर्ताऽस्ति न भोक्ताऽस्ति सर्वं शान्तमजं शिवम्।**
**इति निश्चयवानन्तरज्ञानं तनुतां नय।**
**अज्ञानं शिथिलीभूतमेवं नष्टं विदुर्बुधाः।**

न नाशेन विनोदेति पूर्वसंस्थानविच्युतिः ।
तानवं दृश्यते यस्य तस्यानुक्रमतस्स्वयम् ।
पूर्वसंस्थानविगमात् प्रशमोऽप्युपपद्यते ।

एवं पूर्वोक्तरीत्या शिथिलीभूतमज्ञानं नष्टं विदुः, यस्मान्नाशेन विना पूर्वसंस्थानविच्युतिः नोदेति, समवायिकारणनाशे कार्यद्रव्यनाशस्य न्याय्यत्वात्, पूर्वसंस्थानविच्युतेश्च समवायिकारण-नाशरूपत्वात् इति भावः । तानवमिति स एवार्थः ।

तस्माच्चिदात्मकतया निजचित्ततोऽयं नित्यं स्वयं कचति भूमिप देवदेवः ।
तेनैव पद्मज इति स्वयमात्मनाऽऽत्मा प्रोक्तः स्वरूपमिति शान्तमिदं समस्तम् ।

निजचित्ततः—स्वसंकल्पवशात् कचति-स्फुरति देवदेवः परमात्मा । समस्तमेवेदं देव-देवस्य शान्तं स्वरूपम् ।

शिखिध्वजः—

बुद्धोऽस्मि भगवन् युक्तियुक्तमुक्तं त्वयोत्तमम् ।
कर्त्रभावाज्जगन्नास्ति तेन नास्ति पदार्थदृक् ।
एवं स्थिते प्रबुद्धोऽस्मि विशुद्धोऽस्मि शिवोऽस्मि च ।
नमो मह्यं परं चेत्यं न किञ्चिदिति बोधितः ।

मत्तः परं चेत्यं - दृश्यं नास्तीति त्वया बोधितः ; ततश्च मह्यमेव नमो नमः ।

पदार्थभावनादित्थमसदेवावभासते ।
अहमद्यालमेतेन शान्तमासे खकोशवत् ।

पदार्थभावनात् - भेदेन पदार्थानुसन्धानाद्धेतोः असदेवेदञ्जगत् ; एतेन-पदार्थवेदनेन अलं पर्याप्तम् ।

जगत्पदार्थप्रविभागदृष्टिस्सदेशदिक्कालकलाक्रियौघा ।
अहो नु कालेन चिरेण शान्ता ब्रह्मैव शान्तं स्थितमव्ययात्मन् ।

शान्ता - निवृत्ता, शान्तं - निर्विकारं स्थितं - अवस्थितम् ।

एवं **कचोपाख्यानेऽपि** अहङ्कारस्यानात्मत्वेन त्याज्यत्वं तत्त्यागोपायश्च वर्णितः ।

कचः किल बृहस्पतिं पितरं संसारोत्तरणोपायं पृष्टवान्। बृहस्पतिश्च सर्वत्यागः संसारोत्तरणोपायः इत्युक्तवान्। कचेन पुनरपि पृष्टेन सर्वत्यागस्वरूपं चित्तत्याग एव सर्वत्याग इति प्रत्युक्तं बृहस्पतिना । पुनरपि चित्तं किमिति पृष्टस्तत्स्वरूपमाह ।

**बृहस्पतिः—**

**चित्तं निजमहंकारं विदुश्चित्तविदो जनाः ।**
**अन्तर्योऽयमहंभावो जन्तोस्तच्चित्तमुच्यते ।**

**कचः—**

**मन्येऽस्य दुष्करस्त्यागो न सिद्धिमुपगच्छति ।**
**कथमेष किल त्यक्तुं शक्यते योगिनां वर ।**

**गुरुः—**

**अपि पुष्पावदलनादपि लोचनमीलनात् ।**
**सुकरोऽहंकृतित्यागो न क्लेशोऽत्र मनागपि ।**
**एकमाद्यन्तरहितं चिन्मात्रकमनन्तकम् ।**
**खादप्यतितरां सूक्ष्मं विद्यते सर्ववेदनम् ।**
**तदेव भावयन् साधो शान्तस्तिष्ठ गतव्यथः ।**
**मिथ्यारूपो ह्यहंभावो लीयते तत्त्ववेदनात् ।**
**चिति कोऽयमहंभावः कुतो वा कथमुत्थितः ।**
**क्वाप्सु जातो रजोराशिः क्वानलादुत्थितज्जलम् ।**
**अयं सोऽहमिति व्यर्थं प्रत्ययं त्यज पुत्रक ।**
**कष्टं परिमिताकारं दिक्कालविवशीकृतम् ।**

दिक्कालाद्यनवच्छिन्नं स्वच्छं नित्योदितं ततम् ।
सर्वार्थमयमेकार्थं चिन्मात्रममलं भवान् ।

वसिष्ठः—

इति प्राप्य परं योगं उपदेशमनुत्तमम् ।
जीवन्मुक्तो बभूवासौ ततो देवगुरोस्सुतः ।
निर्ममो निरहंकारः छिन्नग्रन्थिः प्रशान्तधीः ।
कचो यथा स्थितो राम तथा तिष्ठाविकारवान् ।
अहङ्कारमसद्विद्धि मैनमाश्रय मा त्यज ।
असतः शशशृंगस्य परित्यागग्रहौ कुतः । इति ।

एवं **मिथ्यापुरुषोपाख्यानेऽपि** अहंकारस्य अविचारितरमणीयत्वं तत्त्यागोपायश्च वर्णितः । यथा कश्चिच्छून्यादुत्थितो मिथ्यापुरुषः रक्षार्थं गृहचतुश्शालकुम्भकुसूलादिकं सृष्ट्वा तदवच्छिन्नं खं मया रक्षितमिति बुध्वा गृहादिनाशान्ते खं नष्टमिति शोचति तद्वत् संसारी दुःखं प्राप्नोतीति वसिष्ठेनोक्तः श्रीरामः मिथ्यापुरुषस्वरूपं पप्रच्छ । तं प्रत्याह **वसिष्ठः**—

मायायन्त्रमयः प्रोक्तो यः पुमान् रघुनन्दन ।
एनं च त्वमहंकारं विद्धि शून्याम्बरोत्थितम् ।

चिदाकाशोत्थितम् ।

यस्मिन्नाकाशकोशेऽस्मिन् सर्वञ्जगदिदं स्थितम् ।
यदनन्तमसच्छून्यं सर्गादौ तिष्ठति स्वयम् ।
तस्मादुदेत्यहंकारः पूर्वं स्पन्द इवानिलात् ।
अनात्माऽऽत्मैकरक्षार्थं देहं नानाविधानसौ ।
भूयो भूयोऽपि निर्निष्ठान् सृजत्याकुलतां गतः ।

निर्निष्ठान् - अनवस्थितान् - अनित्यानित्यर्थः । यथा मिथ्यापुरुषस्य शून्यादुत्पत्तिः तेन गृहादिनिर्माणं तद्द्वारा आकाशरक्षणम् तन्नाशेन आकाशो नष्ट इत्यनुतापः इत्येतत्सर्वं मिथ्या-

भूतमेव, एवमसंगचिद्रूपादात्मनस्सकाशादहंकारस्योत्पत्तिः तेन विविधशरीररचना तद्द्वारा शरीरावच्छिन्नात्मसंरक्षणं तन्नाशे आत्मा नष्ट इत्यनुसन्तापः इत्येतत् सर्वं मिथ्यैव ।

**घटादिषु प्रणष्टेषु यथाऽऽकाशो ह्यखण्डितः ।**
**तथा देहेषु नष्टेषु देही नित्यमलेपकः ।**
**शुद्धचिन्मात्र आत्माऽयमाकाशादप्यणोरणुः ।**
**स्वानुभूत्यंशमात्रत्वात् खवद्राम न नश्यति ।**

स्वानुभूत्यंशमात्रत्वात् - स्वानुभवमात्रत्वादित्यर्थः ।

**न जायते न म्रियते क्वचित् किञ्चित् कदाचन ।**
**जगद्विवर्तरूपेण केवलं ब्रह्म जृम्भते ।**
**सर्वमेकमिदं शान्तमादिमध्यान्तवर्जितम् ।**
**भावाभावविनिर्मुक्तमिति मत्वा सुखी भव ।**
**सर्वापदां निलयमध्रुवमस्वतन्त्रं आसन्नपातमविवेकममानमज्ञम् ।**
**बोधादहङ्कृतिपदं सकलं विमुच्य शेषे सुबुद्धपद उत्तमतां प्रयाहि ।**

सर्वापदां निलयमध्रुवमस्वतन्त्रमासन्नपातं-नश्वरं अविवेकममानं - अप्रामाणिकं अज्ञं - जडं अहङ्कृतिपदं - अहंकाररूपं वस्तु सकलमपि बोधात् - आत्मतत्वस्वरूपावबोधाद्धेतोः विमुच्य शिष्टे अहंकृतिरहिते सुबुद्धपदे स्थित्वा उत्तमतां जीवन्मुक्ततां प्रयाहीत्येवंरीत्या अहंकारस्य त्याज्यत्वात् कथमात्मत्वमिति चेत्—

सत्यम्—अहंकारस्यानेकत्वात् । तथा ह्युक्तं **वसिष्ठेन**—

**त्रिविधो राघवास्तीह त्वहंकारो जगत्त्रये ।**
**द्वौ श्रेष्ठावितरस्त्याज्यः शृणु त्वं कथयामि ते ।**
**अहं सर्वमिदं विश्वं परमात्माऽहमच्युतः ।**
**नान्यदस्तीति संविद्या परमा सा ह्यहंकृतिः ।**
**सर्वस्माद्व्यतिरिक्तोऽहं वालाग्रादप्यहं तनुः ।**
**इति या संविदेवासौ द्वितीयाऽहंकृतिश्शुभा ।**

मोक्षायैव न बन्धाय जीवन्मुक्तस्य विद्यते ।
पाणिपादादिमात्रोऽयमहमित्येष निश्चयः ।
अहंकारस्तृतीयोऽसौ लौकिकस्तुच्छ एव सः ।
अहंकृतिद्वये एते पूर्वोक्ते भावयन् यदि ।
तिष्ठत्यभ्येति परमं तत् परं पुरुषोऽनघ । इति ।

एवं, तृप्तिदीपिकायामपि असङ्गचिद्रूपस्य कूटस्थस्य अहंप्रत्ययविषयत्वाभावमाशङ्क्य मुख्यया वृत्त्या अहंप्रत्ययाविषयत्वेऽपि लक्षणया तदस्तीति परिहृतम्—

नासंगेऽहंकृतिर्युक्ता कथमस्तीति चेच्छृणु ।
एको मुख्यो द्वावमुख्यौ इत्यर्थस्त्रिविधोऽहमः ।
अन्योन्याध्यासरूपेण कूटस्थाभासयोर्वपुः ।
एकीभूय भवेन्मुख्यः तत्र मूढाः प्रयुञ्जते ।
पृथगाभासकूटस्थावमुख्यौ तत्र तत्ववित् ।
पर्यायेण प्रयुङ्क्तेऽहंशब्दं लोके च वैदिके ।

अयं भावः—चिदाभासकूटस्थयोरविविक्तस्वरूपस्य सार्वजनीनव्यवहारविषयत्वात् मुख्यार्थत्वम् । विविक्तरूपस्य तु कतिपयजनैः कदाचिदेव व्यवह्रियमाणत्वात् अमुख्यार्थत्वमिति ।

पर्यायेण प्रयुङ्क्ते इत्युक्तमेवार्थं प्रपञ्चयति श्लोकद्वयेन—

लौकिकव्यवहारेऽहंगच्छामीत्यादिके बुधः ।
विविच्यैव चिदाभासं कूटस्थात्तं विवक्षति ।
असंगोऽहं चिदात्माऽहमिति शास्त्रीयदृष्टितः ।
अहंशब्दं प्रयुङ्क्तेऽयं कूटस्थे केवले बुधः । इति ।

एवं ज्ञानवासिष्ठेऽन्यत्रापि अहङ्कारश्चतुर्धा विभज्य दर्शितः—

आपादमस्तकमहं मातापितृविनिर्मितः ।
इत्येको निश्चयो राम बन्धायासद्विलोकनात् ।
अतीतः सर्वभावेभ्यो वालाग्रादप्यहं तनुः ।

इति द्वितीयो मोक्षाय निश्चयो जायते सताम् ।
जगज्जालपदार्थात्मा सर्वमेवाहमक्षयः ।
तृतीयो निश्चयश्चेत्थं मोक्षायैव रघूद्वह ।
अहं जगद्वा सकलं शून्यं व्योमसमस्सदा ।
एवमेव चतुर्थोऽपि निश्चयो मोक्षसिद्धये ।
एतेषां प्रथमः प्रोक्तस्तृष्णया बन्धयोग्यया ।
शुद्धतृष्णास्त्रयश्शुद्धा जीवन्मुक्तविलासिनः ।
सर्वमात्माऽहमेवेति निश्चयो यो महामते ।
तमादाय विषादाय न भूयो जायते मतिः । इति ।

अयं भावः-तत्र आपादमस्तकमहमेवेति प्रथमः । सर्वातीतः परमसूक्ष्मोऽहमिति द्वितीयः। सर्वात्मकोऽहमिति तृतीयः । अहमिति जगदिति च सकलं शून्यमेव, अतो व्योमवत् सर्वविकल्पातीतोऽहमिति चतुर्थः। एतेषां मध्ये प्रथमो बन्धयोग्यः तृष्णाप्रोतत्वात् बन्धायैव । अन्ये तु त्रयश्शुद्धतृष्णान्वितत्वाज्जीवन्मुक्तेष्वेव विलसन्ति । उपादेयेष्वपि त्रिषु सर्वात्मकोऽहमिति निश्चयश्श्रेयानित्याह—**सर्वमिति**—सर्वमहञ्चात्मैवेति यो निश्चयः इत्यन्वयः । एवं सर्वदृश्यविनिर्मुक्ते प्रत्यगात्मनि परमात्माभिन्ने अहंशब्दप्रयोग **आचार्यैः** कृतः ।

नाहं देहो नेन्द्रियाण्यन्तरङ्गं नाहङ्कारः प्राणवर्गो न बुद्धिः।
दारापत्यक्षेत्रवित्तादि दूरे साक्षी नित्यः प्रत्यगात्मा शिवोऽहम् । इति ।

एवं सकलप्रपञ्चविलापनपुरस्सरं प्रत्यगात्मनि अहंशब्दः प्रयुक्तः **सर्ववेदान्तसारे**—

न भूमिर्न तोयं न तेजो न वायुः न खं नेन्द्रियं वा न तेषां समूहः ।
अनैकान्तिकत्वात् सुषुप्तैकसिद्धस्तदेकोऽवशिष्टश्शिवः केवलोऽहम् । इति।
न शास्ता न शास्त्रं न शिष्यो न शिक्षा
न च त्वं न चाहं न चायं प्रपञ्चः ।
स्वरूपावबोधो विकल्पासहिष्णुः
तदेकोऽवशिष्टश्शिवः केवलोऽहम् । इत्यादिना ।

अहमस्सर्वात्मकत्वमप्युक्तं **दक्षिणामूर्तिस्तोत्रे**—

**बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि**
**व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा ।**
**स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया**
**तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ।**
**विश्वं पश्यति कार्यकारणतया स्वस्वामिसम्बन्धतः** इत्यादिना ।

एवं **विरूपाक्षपञ्चाशिकायामपि** अहमस्सर्वात्मकत्वं स्फुटीकृतम्—

**अहमेकोऽनस्तमितप्रकाशरूपोऽस्मि तेजसां तमसाम् ।**
**अन्तः स्थितो ममान्तस्तेजांसि तमांसि चैकस्य ।** इति ।

अस्यार्थः—अनस्तमितप्रकाशरूपः—नित्योदितप्रकाशमयः एकः अद्वितीयः तेजसां—तेजस्त्वेन अभिमतानां बुध्यादिकरणानां आदित्यादिज्योतिषाञ्च अन्तःस्थितोऽस्मि - प्रकाशमानत्वेन तेषामन्तरात्मतया अहमस्मि । तथा तमस्त्वेन प्रकाशमानत्वात् तमसां (बन्धु) मायादीनाञ्च अन्तःस्थितोस्मि । प्रकाशात्मनि मयि अन्तरस्थिते तेजस्तया तेजः तमस्तया तमश्च न प्रकाशेतेत्याशयः । तानि तेजांसि तमांसि च मम अन्तःस्थितानि, प्रकाशकोऽहमेक एव भावाभावात्मकजगद्रूपतया परिस्फुरामीति । अहमस्सर्वात्मकत्वे **आदित्यानामहं विष्णु**रित्यारभ्य **विष्टभ्याहमिदं कृत्स्न**मित्यन्त उदाहार्यः ।

**ब्रह्मगीतायां** पञ्चमाध्याये समस्तदेवादीन् प्रति परमेश्वरवचनं **अहं हि सर्वं न च किञ्चि**दित्यादि **सर्वस्वरूपेण सुसंस्थितोऽ**हमित्यन्तं अहमस्सर्वात्मकत्वप्रकटनपरं द्रष्टव्यम् ।

एवं **सूतगीतायां** पञ्चमाध्याये अहंशब्दः प्रत्यगात्मपर एव न तु देहेन्द्रियप्राणमनोबुद्ध्यहंकारपर इति सम्यग्विवेचितः—

**सूतः**—

**वक्ष्यामि परमं गुह्यं युष्माकं मुनिसत्तमाः ।**
**विज्ञानं वेदसम्भूतं भक्तानामुत्तमोत्तमम् ।**
**रुद्रविष्णुप्रजानाथप्रमुखास्सर्वचेतनाः ।**

स्वभावेनाहमित्याहुरिदमित्यपि च स्वतः ।
इदंबुद्धिस्तु बाह्यार्थेत्वहंबुद्धिस्तथाऽऽत्मनि ।
प्रसिद्धा सर्वजन्तूनां विवादोऽत्र न कश्चन ।
इदमर्थे घटाद्यर्थेऽनात्मत्वं सर्वदेहिनाम् ।
अहमर्थे तथाऽऽत्मत्वमपि सिद्धं स्वभावतः ।
एवं समस्तजन्तूनां अनुभूतिर्व्यवस्थिता ।
भ्रान्ता अपि न कुर्वन्ति विवादश्चात्र सत्तमाः ।
एवं व्यवस्थितेत्वर्थे सति बुद्धिमतां वरैः ।
संसारविषवृक्षस्य मूलविच्छेदकांक्षिभिः ।
यत्र यत्रेदमित्येषा बुद्धिर्दृष्टा स्वभावतः ।
तत्र तत्रत्वनात्मत्वं विज्ञातव्यं विचक्षणैः ।
यत्र यत्राहमित्येषा बुद्धिर्दृष्टा स्वभावतः ।
तत्र तत्र तथाऽऽत्मत्वं विज्ञातव्यं मनीषिभिः ।
शरीरे दृश्यते सर्वैरिदंबुद्धिस्तथैव च ।
अहंबुद्धिश्च विप्रेन्द्रास्ततस्ते भिन्नगोचरे ।
शरीरालंबना बुद्धिरिदमित्यास्तिकोत्तमाः ।
चिदात्मालम्बना साक्षादहंबुद्धिर्न संशयः ।
इदमर्थे शरीरे तु याऽहमित्यादिका मतिः ।
सा महाभ्रान्तिरेव स्यादतस्मिंस्तद्ग्रहत्वतः ।
अचिद्रूपमहंबुद्धेः पिण्डं नालम्बनं भवेत् ।
मृत्पिण्डादिष्वदृष्टत्वात्ततोऽनात्मैव विग्रहः ।
अचित्त्वादिन्द्रियाणाञ्च प्राणस्य मनसस्तथा ।
आलम्बनत्वन्नास्त्येव बुद्धेश्चाहम्मतिं प्रति ।
बुद्धेरचित्त्वं संग्राह्यं दृष्टत्वाज्जन्मनाशयोः ।
अचिद्रूपस्य कुड्यादेः खलु जन्मविनाशनम् ।

अहंकारस्य चाचित्त्वाच्चित्तस्यापि तथैव च ।
आलम्बनत्वं नास्त्येव सदाऽहंप्रत्ययं प्रति । इत्यादिना ।
इत्थं विवेकतस्साक्ष्यं देहादिप्राणपूर्वकम् ।
अन्तःकरणमात्मानं विभज्य स्वात्मनः पृथक् ।
सर्वसाक्षिणमात्मानं स्वयंज्योतिस्स्वलक्षणम् ।
सत्यमानन्दमद्वैतमहमर्थं विचिन्तयेत् ।
रूद्रविष्णुप्रजानाथप्रमुखास्सर्वचेतनाः ।
अहमेव परं ब्रह्मेत्याहुरात्मानमेव हि ।
ते तु चिन्मात्रमद्वैतमहमर्थतया भृशम् ।
अंगीकृत्याहमद्वैतं ब्रह्मेत्याहुर्न देहतः । इत्यन्तेन ।

एवं **श्रुतिरपि** जीवन्मुक्तस्वानुभवप्रतिपादकवचनसरूपा सर्वात्मकत्वप्रतिपादनपरा **हा उ हा उ हा उ अहमन्नमहमन्नमहमन्नं अहमन्नादोऽहमन्नादोऽहमन्नादः अहं श्लोककृदहं श्लोककृदहंश्लोककृद्**इत्यादिका **तैत्तरीयके** ।

एवं **बृहदारण्यकेऽपि—ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मीति** इति शोधितत्वंपदार्थपरोऽहंशब्दः । **अन्यत्रापि अहं मनुरभवं सूर्यश्चेति** सर्वात्मकत्वप्रतिपादनपरोऽहंशब्दः ।

**कौषीतक्यामपि - सहोवाच मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीया**दिति ।

उक्तञ्च भगवता **सूत्रकारेण - शास्त्रदृष्ट्या तूपदेशो वामदेववद्**इति । व्याख्यातञ्च **भाष्यकारैः**--इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेन अहमेव परं ब्रह्मेति आर्षेण दर्शनेन यथा---शास्त्रं पश्यन् उपदिशति स्म-मामेव विजानीहि इति, यथा—**तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेति** तद्वदिति । **आवृत्तिरसकृदुपदेशाद्**इत्यधिकरणे **भगवद्भिर्भाष्यकारैः** सर्वदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहमित्येष आत्मानुभवः, न चैवमात्मानमनुभूतवतः किञ्चिदप्यन्यत् कृत्यमवशिष्यते इति ।

प्रकृतश्रुतिस्तु—**निरस्ताविद्यातमोमोहोऽहमेव** इति। एवकारः अहङ्कारप्रसङ्गेन प्राप्तसर्वद्वैतनिषेधार्थः।

**अकारः**—प्रत्यगात्मा। ननु अकारस्य प्रत्यगात्मपरत्वं कथमप्रसिद्धत्वात् इति चेन्न, श्रुत्यैव प्रतिपादनात्। तथाहि—**अथैषो एवाकार आप्ततमार्थः** इति। अत्र एवकारो भिन्न-क्रमः। अकार आप्ततमार्थ एव, व्याप्ततमार्थ एवेत्यर्थः। स च व्याप्ततमार्थः कः यस्मिन् अका-रस्य वृत्तिर्भवति इत्यत आह श्रुतिः—आत्मन्येवेति—प्रत्यगात्मन्येवेत्यर्थः।

**अनल्पः**—परिपूर्णः।

**अभिन्नरूपः**—सर्वात्मकः।

**तस्मादयमनल्पोऽभिन्नरूपः** इति श्रुतिः।

**अनुग्रः अवीरः अमहान् अविष्णुः अज्वलन् असर्वतोमुखः अनृसिंहः अभीषणः अभद्रः अमृत्युमृत्युः अनमामि अनहम्**। अत्र उग्रादिपदार्थानवगमे अनुग्रादिपदार्थानामर्थबोधनं न संभवति। उग्रादिपदानाञ्च श्रुत्यैव अर्थो वर्णितः—सर्वसंहारसमर्थः परिभवासहः प्रभुः व्याप्तः सदोज्वलः अविद्याकार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहितः आनन्दरूपः सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेतीति। सर्वसंहारसमर्थइत्यादिद्वादशपदानां भाष्यमेव लिख्यते। तत्र उग्रमित्यस्य पदस्य तुरीयबोधकतां दर्शयन् तस्यार्थमाह-सर्वसंहारसमर्थ इति। नहि तुर्या-दन्यस्य जडस्य सर्वसंहारसामर्थ्यं संभवति; अतस्सर्वसंहारसमर्थवाचक उग्रशब्दः सर्वद्वैतसंहारसमर्थं तुरीयमेव लक्षणया प्रकाशयतीत्यर्थः। लोके संहारसमर्थोऽपि मन्दप्रस्थानः कश्चित् संहार्यमसंहरन् दृष्ट इति तुरीयोऽपि तथा स्यादिति अस्यापि संहारसामर्थ्यं न निर्णेतुं शक्यत इत्याशङ्कायां तद्व्यावर्त-कत्वेन वीरमित्यपि पदं अर्थतः तुरीयप्रतिपत्तौ विनियोजयति - परिभवासह इति। न लौकिक-मन्दपुरुषवदयं मन्दप्रस्थानः परिभवसहिष्णुः, अतस्संहरत्येव सदा संहार्यमविद्यादिलक्षणं जगत्, ततश्च तत्सामर्थ्यमस्य निर्णेतुं शक्यत इत्यर्थः। परिभवासहिष्णुरपि प्रतिवन्धसंभवात् न संहरती-त्याशङ्कायां तद्व्यावर्तकत्वेन महाविष्णुमित्यत्र महत्पदमर्थतोऽवतारयति - प्रभुरिति। महाप्रभुत्वात् न प्रतिबन्धः शङ्क्य इत्यर्थः। समर्थस्य परिभवासहिष्णोः प्रतिबन्धहीनस्यापि सर्वत्र व्याप्त्य-भावेन सर्वसंहर्तृत्वं न संभवति साप्यनुपपत्तिरिह नास्तीति वदन् विष्णुमितिपदमर्थतोऽवतार-यति - व्याप्त इति। उक्तसामग्रीसंभवेऽपि येन प्रमाणेन अभिज्वलितस्सन् सर्वं संहरति तत्र

संहर्तुं युक्तमुपकारकत्वादित्याशंकायां निर्विकारत्वात् न प्रमाणसापेक्षमस्याभिज्वलनं, किन्तु सर्वद्वैतविरुद्धस्वप्रकाशचिद्रूपत्वेन सदैवाभिज्वलितः सर्वदा संहृतसकलद्वैतश्च स परमार्थत इति वदन् ज्वलन्तमिति पदमवतारयति - सदोज्वल इति। तथापि लौकिकसंहर्तुरसंहार्यं रक्षणीयं वस्तु कार्यकरणादि दृष्टं, तद्वदस्य स्वाभाविकमसंहार्यं किमप्यभ्युपगन्तव्यमित्याशंकायां नास्य लौकिकपुरुषवदविद्यातत्कार्ययोरहम्ममाभिमानोऽस्ति, येन असंहार्यं तद्रक्षणीयं स्यात्, तस्मात् स्वमहिमस्थो निरपेक्षस्सर्वमेव संहरतीति वक्तुं सर्वतोमुखमिति पदमर्थतोऽवतारयति-अविद्याकार्यहीन इति। सर्वतस्सर्वत्र मुखं यस्य। मुखशब्देन उपलब्धिः अविद्याकार्यासंस्पृष्टस्वप्रकाशा उच्यते। अतस्सर्वत्र उपलब्धिस्वरूप एवायं न विजातीयमसंहार्यं किमप्यत्रास्तीति सर्वतोमुखपदस्यार्थः। एवंरूपो महाप्रभुः किमर्थमतिदुर्बलद्वैतजातं संहरतीत्याकांक्षायां स्वानर्थप्रतिभासहेतुत्वादिति वदन् नृसिंहमितिपदमवतारयति - स्वात्मबन्धहर इति। नृ गताविति धातो रूपेण नृशब्देन त्रिविधपरिच्छेदरहित आत्मोच्यते। सीति तद्बन्धकमविद्यालक्षणद्वैतं, हमिति तत्संहर्तृत्वं उच्यते। अतः नृसिंहपदस्य स्वात्मसंबन्धहर इति अर्थोक्तिरुपपन्ना। नन्वेवंरूपत्वेऽपि एवं विवेकात् प्राक् यथा द्वैतं तत्पराभवसहिष्णुत्वञ्च तथैव सर्वदाऽस्त्वित्याशंकायां कदाचिदप्यस्य परमार्थतो न द्वैतपरिभव इति वदन् भीषणमिति पदमवतारयति - सर्वदा द्वैतरहित इति। न हि महास्फुरणस्वभावमेनं तमः स्वनाशभयात् कदाचिदपि परमार्थतः स्पृशति मध्याह्नभास्करमिवेति भीषणपदार्थ इति भावः। ननु सर्वद्वैतसंहारे सुखसाधनाभावात् अपुरुषार्थत्वं स्यात्, अतः न सर्वं संहर्तव्यमित्याशङ्क्य, स्वत एव परमानन्दानुभवरूपत्वमाह भद्रपदेन-आनन्दरूप इति। ननु नित्यस्य कारणस्यापि संहारे स्वात्मनोऽपि तत्प्रसंगः, अतो न संहर्तव्यं सर्वमित्याशङ्क्य अध्यस्तस्यात्माज्ञानलक्षणस्य कारणस्य अधिष्ठानज्ञानेन नाशेऽपि परमार्थसद्रूपमनध्यस्तमबाधितं पूर्ववत् स्वमहिमस्थमेव भवति इति परिहरति मृत्युमृत्युपदेन—सर्वाधिष्ठानसन्मात्र इति। पूर्वमृत्युशब्देन मरणशीलं सर्वात्मकमज्ञानमुच्यते तस्य संहर्ता मृत्युमृत्युः, सदा मरणशीलमेवाज्ञानं नित्यं कल्पितम्, अयन्तु तन्मृत्युत्वेन सर्वदा अमृत एव, अतो न तन्नाशकस्य नाशप्रसङ्गः, किन्तु पूर्वमधिष्ठानत्वेन उत्तरत्र बाधावधित्वेन तत्साक्षित्वेनापि शिष्यते इति मृत्युमृत्युपदस्यार्थ इति भावः। यस्मादेवं सर्वसंहारसमर्थः परिभवासहो निष्प्रतिबन्धस्सर्वसंहार्यकबलीकरणस्वभावो निरपेक्षो रक्षणीयशून्यः स्वात्मबन्धहरो भयङ्करः परमानन्दानुभवः परमार्थसद्रूपोऽयमात्मेति नाविद्यालक्षण-

द्वैतमस्मिन् कदाचिदप्युपपद्यते, तस्मात् तदत्र कालत्रयेऽपि नास्तीति वदन् नमामीत्यस्यार्थमाह—निरस्ताविद्यातमोमोह इति। अविद्येति विद्याविरोधित्वकथनेन निवर्तयितुं शक्यतोक्ता; तम इत्याच्छादकत्वेन निरसनीयत्वं; मोह इति च विक्षेपहेतुत्वेन निरस्यत्वमुक्तं; अविद्यादिलक्षणमनर्थकारणं नित्यमेव निरस्तं यस्मिन् स तथोक्तः। नमामीत्यत्र न कारो निषेधार्थः। मेति प्रमावाचकत्वेन परिपूर्णानन्दसच्चिद्रूपतुरीयवाचकः। मीति तद्धिंसाकरं तदाच्छादनविक्षेपादिकारणभूतमज्ञानमुच्यते। तस्मात् माहिंसाकारणं नास्तीति नमामिपदस्यार्थ इति भावः। उक्तञ्च-**मीति हिंसाकरं नात्र तमोऽज्ञानादिलक्षण**मिति। किन्तर्ह्यस्तीत्याकाङ्क्षायां तुरीयः प्रत्यगात्मेति वदन् अहंशब्दार्थमाह-अहमेवेतीति। एवकारोऽहंकारप्रसंगेन प्राप्तसर्वद्वैतनिषेधार्थः। तथा च उग्रमिति वाक्यजन्यवृत्त्यभिव्यक्तस्य तुरीयस्य सर्वसंहारकर्तृत्वमुच्यते। अनुग्रमिति तदाऽपि परमार्थतः स्वमहिमस्थिततया कूटस्थत्वेन परमार्थतः अकर्तृत्वमुच्यते। अथवा अनुग्रमित्ययमर्थः—उग्रत्वं नाम न धर्मः किन्तु स्वरूपमेवेति। एवमवीरमित्यत्रापि वीरत्वं नाम न धर्मः, किन्तु स्वरूपमेवेति योज्यम्।

प्रकृतश्रुतिस्तु—**उग्रमनुग्रं वीरमवीरं महान्तमहान्तं विष्णुमविष्णुं ज्वलन्तमज्वलन्तं सर्वतोमुखमसर्वतोमुखं नृसिंहमनृसिंहं भीषणमभीषणं भद्रमभद्रं मृत्युमृत्युममृत्युमृत्युं नमाम्यहमनमाम्यहमहमनह**मिति।

**अभातम्**—अविषयत्वेन स्वयमेव प्रकाशरूपम्। **अभातमद्वैतमचिन्त्य**मिति श्रुतिः।

**अभृङ्गम्**—अमात्रं निरवयवमिति यावत्। **भृङ्गेष्वभृङ्गं संयोज्य** इति श्रुतिः।

**अशोकः**—शोकरहितः।

**अमोहः**—मोहरहितः।

**अनशनायः**—अशितुं इच्छा अशनाया तद्रहितः अनशनायः।

**अशोकत्वादमोहत्वादनशनायत्वा**दिति श्रुतिः।

**अनुभूतिः**—स्वयंप्रकाशरूपा अवाङ्मनसगोचरेत्यर्थः। श्रुतिस्तु—**अनुभूतिरिति कैषेति इयमियं नेति अवचनेनैवानुभवन्नुवाचे**ति।

**अत्ता**—ब्रह्मक्षत्रादिसर्वचराचरसंहर्ता । **ब्रह्म वा इदं सर्वमत्तृत्वात्** इति श्रुतिः ।

**अत्युग्रः अतिवीरः अतिमहान् अतिविष्णुः अतिज्वलन् अतिसर्वतोमुखः अतिनृसिंहः अतिभीषणः अतिभद्रः अतिमृत्युमृत्युः अतिनमामि अत्यहम्**—प्रत्यगात्मा हि ज्ञानबलेन एतत् सर्वं कार्यप्रपञ्चं कारणात्मन्युपसंहृत्य कारणात्मानमपि सर्वात्मना अन्तर्बहिश्च संव्याप्य चिद्रूपतामापाद्य स्वात्मतावन्मात्रतया विलाप्य स्वात्मानं चिद्रूपमेषां कार्यकारणरूपपदार्थानां ददाति, न हि तेषां स्वरूपान्तरमस्ति, कल्पितत्वात्, एतादृशः प्रत्यगात्मा अत्युग्रः । उग्रत्वगुणादतिक्रान्तत्वे सत्युग्रत्वमत्युग्रत्वम् एवमतिवीर इत्यादिकमपि योज्यम् । **अत्युग्रोऽतिवीरः** इत्यादिश्रुतिः ।

**अविकारी**—षड्भावविकाररहितः इत्यर्थः ।

**असंगत्वादविकारित्वा**दिति श्रुतिः ।

**अनुमन्ता**—स्वतस्सत्ताप्रकाशप्रवृत्तिसामर्थ्यरहितानां प्राणबुद्ध्यादीनां स्वात्मन्यध्यस्ततया तत्सर्वमनुजानातीत्यनुमन्ता । **उपद्रष्टाऽनुमन्तैष आत्मे**ति श्रुतिः ।

**अविकारः**—सर्वविकारसाक्षी । **अविकारो ह्युपलब्धे**ति श्रुतिः ।

**अविषयज्ञानः**—यद्यप्ययं सर्वज्ञः परमात्मा तथापि सुषुप्ते स्वव्यतिरिक्तविषयसंबन्धराहित्यादविषयज्ञानः । **स्वप्रकाशोऽप्यविषयज्ञानत्वाज्जानन्नेव ह्यत्र न विजानाती**ति श्रुतिः ।

**अमूढः**—कर्तृत्वभोक्तृत्वरहितत्वात् स्वमहिमस्थितत्वाच्च स्वयंप्रकाश इत्यर्थः । श्रुतिस्तु—**अमूढो मूढ इव व्यवहरन्नास्ते माययैवे**ति ।

**अनुभवात्मा**—कालत्रयेऽपि परमार्थतोऽविद्यासंबन्धरहित इत्यर्थः । **नाविद्याऽनुभवात्मनि स्वप्रकाशे** इति श्रुतिः ।

**अयोनिः**—परमार्थतः सर्वप्रपञ्चकल्पकत्वरहितः । **पुरस्तादयोनिः स्वात्मस्थ**मिति श्रुतिः ।

**असिद्धम्**—स्वयं सच्चिदानन्दरूपत्वेन सर्वप्रमाणसाधकत्वात् प्रमाणान्तरसिद्धं न भवति, किन्तु स्वत एव सिद्धमित्यर्थः । **आनन्दचिद्घनं सिद्धं ह्यसिद्ध**मिति श्रुतिः ।

अबाध्यस्वरूपः---सत्यस्वरूप इत्यर्थः । अत एव शुद्धोऽबाध्यस्वरूपः इति श्रुतिः ।

अविशेषः—साक्षित्वादिसर्वविशेषरहितः ।

अनन्यः---सर्वशरीरेषु एकरूपतया प्रत्यगात्मत्वेन विद्यमान इत्यर्थः ।

असुखदुःखः—सुखदुःखादिधर्मरहितः इत्यर्थः ।

साक्ष्यविशेषोऽनन्योऽसुखदुःखोऽद्वयः इति श्रुतिः ।

अभिन्नः—विजातीयसाक्ष्यसद्भावरहितः परमार्थत इत्यर्थः । भागवते अष्टमस्कन्धे शिवं प्रति देवाः—

न ते गिरित्राखिललोकपालविरिञ्चिवैकुण्ठसुरेन्द्रगम्यम् ।
ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम् । इति ।

अनन्तोऽभिन्नः इति श्रुतिः ।

अवक्तव्यं अनादातव्यम् अगन्तव्यम् अविसर्जयितव्यम् अनानन्दयितव्यम्—एभिः नामभिः कर्मेन्द्रियविषयत्वनिषेधः ।

अमन्तव्यम् अबोद्धव्यम् अनहङ्कर्तव्यम् अचेतयितव्यम्—अनेन नामचतुष्टयेन अन्तःकरणवृत्तिविषयत्वप्रतिषेधः ।

अप्राणयितव्यम् अनपानयितव्यम् अव्यानयितव्यम् अनुदानयितव्यम् असमानयितव्यम् अनेन नामपञ्चकेन प्राणनादिव्यापारविषयत्वप्रतिषेधः ।

अनिन्द्रियम्—ज्ञानकर्मेन्द्रियरहितम् ।

अविषयम्—विषयसामान्यरहितम् ।

अकरणम्—अन्तःकरणरहितम् ।

अगुणम्—गुणसामान्यरहितम् ।

असत्त्वम् अरजस्कम् अतमस्कम्—नामत्रयेण सत्वादिगुणत्रयनिषेधः ।

**अमायम्**—सत्वादिगुणसामान्यरूपमायावर्जितम् ।

**अवक्तव्यमनादातव्य**मित्यादिः श्रुतिः ।

॥ **अकारादिनामव्याख्या** समाप्ता ॥

**अथ आकारादीनि नामानि**—

**ईशावास्ये**—

**आत्मा**—सर्वव्यापकः सर्वोपादानभूतः सर्वात्मकः सर्वविषयावभासकः सर्वोपसंहारकश्च । तथा च स्मर्यते—

**यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।**
**यच्चास्य सन्ततो भावस्तस्मादात्मेति गीयते ।** इति ।

**अध्यात्मरामायणे**—

**अयं हि विश्वोद्भवसंयमानां एकः स्वमायागुणबिंबितो यः ।**
**विरिञ्चिविष्ण्वीश्वरनामभेदान् धत्ते स्वतन्त्रः परिपूर्ण आत्मा ।** इति ।

श्रुतिस्तु—**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति** इति ।

**काठके**—

**आसीनः**—अवस्थितः अचल इत्यर्थः । **आसीनो दूरं व्रजतीति** श्रुतिः ।

**आत्मस्थः**—स्वशरीरहृदयाकाशे बुद्धौ चैतन्याकारेण अभिव्यक्तः । नहि शरीराधारत्वमात्मनस्संभवति, आकाशवदमूर्तत्वात् । आदर्शस्थं मुखं इति यद्वत् । श्रुतिस्तु—**तमात्मस्थं येऽनुपश्यन्ति धीराः** इति ।

**मुण्डके**—

**आनन्दरूपम्**—सर्वानर्थदुःखायासहीनं सुखरूपम् । **आनन्दरूपममृतं यद्विभाति** इति श्रुतिः ।

**तैत्तरीये**—

**आकाशः**—आ समन्तात् काशते प्रकाशतं इत्याकाशः परिपूर्णप्रकाशरूप इत्यर्थः ।

एवं छान्दोग्येऽप्याकाशशब्दः **आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते** इत्यादिना श्रूयते। तत्रत्य आकाशशब्दः उपास्यब्रह्मपरः। उद्गीथे आकाशशब्दवाच्यब्रह्मदृष्टिः कर्तव्येत्यर्थः। तदुक्तं **सूत्रकारेण - आकाशस्तल्लिङ्गा**दिति। तद्यथास्यातम**धिकरणरत्नमालायां**—

**आकाश इति होवाचेत्यत्र खं ब्रह्म वाऽत्र खम्।**
**शब्दस्य तत्र रूढत्वात् वाय्वादेस्सर्जनादपि।**
**नाकाशं जगदुत्पत्तिहेतुत्वाच्छ्रुतिरूढतः।**
**एवकारादिना चात्र ब्रह्मैवाकाशशब्दितम्।** इति।

छान्दोग्ये एव अष्टमाध्यायान्ते आकाशशब्दः **आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मे**त्यत्र श्रूयते ज्ञेयब्रह्मपरः। तदुक्तं **सूत्रकारेण - आकाशोऽर्थान्तरत्वादिव्यपदेशा**दिति। विवृतञ्च—

**वियद्वा ब्रह्म वाऽऽकाशो वै नामेति श्रुतं वियत्।**
**अवकाशप्रदानेन सर्वनिर्वाहकत्वतः।**
**ब्रह्म स्याद्वाक्यशेषे च ब्रह्मात्मेत्यादिशब्दतः।** इति।

**आनन्दः**—परमप्रेमालम्बनत्वेन उपलक्षितः, सर्वदुःखविनिर्मुक्तसुखस्वरूपः। **यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाती**ति श्रुतिः।

**आत्मेश्वरः**—आत्माचानादीश्वरश्च आत्मेश्वरः, प्रत्यगभिन्नः परमात्मेत्यर्थः। **पतिं विश्वस्यात्मेश्वर**मिति श्रुतिः।

**छान्दोग्ये**—

**आप्रणखात् सर्व एव सुवर्णः**—प्रणखो नखाग्रं नखाग्रेण सह सर्वतस्सुवर्ण इव भारूप इत्यर्थः। आदित्यमण्डलान्तर्वर्तित्वेन हिरण्यश्मश्रुत्वादिविशिष्टपरमेश्वरो ध्येयः। उक्तञ्च—

**सूतसंहितायां**—

**आदित्यमण्डले पूर्णे लक्षयोजनविस्तृते।**
**सर्वलोकविधातारमीश्वरं हेमरूपिणम्।**
**हिरण्यश्मश्रुकेशश्च हिरण्मयनखं तथा।**
**कप्यास्यासनवद्वक्त्रं नीलग्रीवं विलोहितम्।**

आगोपालप्रसिद्धं तमम्बिकार्धशरीरिणम् ।
सोऽहमित्यनिशं ध्यायेत् सन्ध्याकालेषु वा नरः । इति ।

तथाचाभियुक्ताः—

मण्डलान्तरगतं हिरण्मयं भ्राजमानवपुषं शुचिस्मितम् ।
चण्डदीधितिमखण्डितद्युतिं चिन्तयेन्मुनिसहस्रसेवितम् । इति ।

श्रुतिस्तु—**अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी** इति ।

**आकाशात्मा**—आकाश इव आत्मा स्वरूपं यस्य स आकाशात्मा । सर्वगतत्वं सूक्ष्मत्वं रूपादिरहितत्वञ्च आकाशतुल्यतेश्वरस्य । **सत्यसंकल्प आकाशात्मा** इति श्रुतिः ।

**आदेशः**—आदिश्यत इत्यादेशः, केवलं शास्त्राचार्योपदेशादेव गम्यते, न तु स्वबुद्ध्या ऊहितुं शक्य आत्मेत्यर्थः । तदुक्तं **सूतसंहितायाम्**—

अतीव गुह्यमादेशमनन्तार्थप्रकाशकम् ।
वक्ष्ये युष्माकमद्याहं शृणुत श्रद्धया सह ।
यस्य श्रवणमात्रेण श्रुतमेवाश्रुतं भवेत् ।
अमतञ्च मतं ज्ञातमविज्ञातञ्च सत्तमाः । इति ।

**उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवतीति** श्रुतिः ।

**बृहदारण्यके** तृतीये—

**आनखाग्रेभ्यः प्रविष्टः**—नखाग्रमर्यादं ह्यात्मनश्चैतन्यमुपलभ्यते । नखाग्रव्यतिरिक्ते सर्वशरीरे प्रविष्ट इत्यर्थः । **स एष इह प्रविष्ट आ नखाग्रेभ्यः** इति श्रुतिः ।

पञ्चमे—

**आदित्ये तिष्ठन्**—आदित्याधिष्ठानतया वर्तमान इत्यर्थः ।

**आदित्यादन्तरः**—आदित्यदेवतान्तर्यामितया वर्तत इत्यर्थः ।

**य आदित्ये तिष्ठन् आदित्यादन्तरः** इति श्रुतिः ।

**आकाशे तिष्ठन् आकाशादन्तरः**—पूर्ववत् ।

**माध्यन्दिनशाखायाम्**—

**आत्मनि तिष्ठन्**—आत्मनि जीवात्मनि प्रतिबिंबभूते बिंबत्वेन वर्तमानः।

**आत्मनोऽन्तरः**—जीवस्य नियन्ता।

**य आत्मनि तिष्ठन्नात्मनोऽन्तर** इति श्रुतिः।

**षष्ठे—**

**आप्तकामम् आत्मकामम्**—यस्मात् समस्तमेतद्रूपं तस्मादाप्ताः कामा यस्मिन् रूपे तदिदमाप्तकामम्, यस्य ह्यन्यत्वेन प्रविभक्तः कामो भवति तदनाप्तकामं भवति यथा जागरितावस्थायां देवदत्तादिरूपं नत्विदं तथा कुतश्चित्प्रविभज्यते अत आप्तकामं भवति। किमन्यस्माद्वस्त्वन्तरात् न प्रविभज्यते आहोस्विदात्मैव तद्वस्त्वन्तरम्। अत्राह। नान्यदस्त्यात्मनः। कुतः। यतः आत्मकामम् आत्मैव कामोऽस्मिन् रूपे, अन्यत्र विभक्त इव अन्यत्वेन काम्यमानः यथा जाग्रत्स्वप्नयोः ते अस्मिन्नात्मैव, अन्यत्वप्रत्युपस्थापकहेतोरविद्याया अभावात्, अत आत्मकामम्। **तद्वा अस्यैतदाप्तकाममात्मकामम्** इति श्रुतिः।

**आयुः**—आयुस्स्वरूपं ब्रह्म, कालानवच्छिन्नत्वात्। अतोऽन्यन्म्रियते, इदन्तु आदित्यादिज्योतिषामवभासकं न म्रियते, अतः आयुष्कामेन आयुर्गुणविशिष्टं ब्रह्मोपास्यमित्यर्थः। **तद्देवा ज्योतिषाञ्ज्योतिरायुर्होपासतेऽमृत**मिति श्रुतिः।

**आकाशात् परः**—आकाशादव्याकृताख्यात् परः व्यतिरिक्तः सूक्ष्मो व्यापी वा। **विरजः पर आकाशा**दिति श्रुतिः।

**ब्रह्मोपनिषदि—**

**आत्मविद्यातपोमूलम्**—आत्मनः स्वयंप्रकाशचिदानन्दरूपस्य विद्या उपासनं श्रवणमननादि तज्जन्यसाक्षात्कारश्च, तपः आत्मज्ञानसाधनं स्वस्ववर्णाश्रमोचिताचाररूपं तयोः प्रवृत्तिनिवृत्त्यात्मकयोः विद्यातपसोः, उपलक्षणमेतत्, निखिलस्य जगतो मूलं उपादानकारणम्। श्रुतिस्तु—**आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्पद**मिति।

**कैवल्योपनिषदि—**

**आदिमध्यान्तविहीनम्**—उत्पत्तिपरिच्छेदविनाशवर्जितः

तदुक्तं सूतसंहितायाम्—

ऐश्वरं परमं तत्त्वमादिमध्यान्तवर्जितम् ।
आधारं सर्वभूतानामनाधारमविक्रियम् ।
अनन्तानन्दबोधांबुनिधिमद्भुतविक्रमम् ।
अम्बिकापतिमीशानमनिशं प्रणमाम्यहम् । इति ।

**तमादिमध्यान्तविहीनमेकम्**इति श्रुतिः ।

**आधारम्**—रज्जुरिव सर्पधारादेः सकलस्य विश्वस्याधारभूतम् । **आधारमानन्दमखण्डबोधम्**इति श्रुतिः ।

**श्वेताश्वतरोपनिषदि**—

**आत्मसंस्थम्**—आत्मनि स्वे महिम्नि स्थितम् ।

तदुक्तं वासिष्ठे—

स्निग्धा स्पष्टा मृदुस्पर्शा महाविस्तारशालिनी ।
निबिडा नित्यनीरन्ध्रा क्वचिदस्ति महाशिला ।

अस्यार्थः—स्निग्धा परमप्रेमास्पदत्वात् स्पष्टा स्वयप्रकाशमानत्वात् मृदुस्पर्शा सुखरूपत्वात् महाविस्तारशालिनी परिपूर्णत्वात् निबिडा सन्ततत्वात् नित्यनीरन्ध्रा विजातीयैरनन्तरितत्वात् क्वचिदस्ति स्वमहिमप्रतिष्ठितत्वात् महाशिला अचला चिदेवेति ।

**एतज्ज्ञेयं नित्यमेवात्मसंस्थम्**इति श्रुतिः ।

**आत्मतत्त्वम्**—आत्मनः वास्तवं सच्चिदानन्दरूपमित्यर्थः । **तद्वात्मतत्त्वं प्रसमीक्ष्य**ेति श्रुतिः ।

**आदित्यवर्णः**—प्रकाशरूपः । **आदित्यवर्णं तमसः परस्तात्** इति श्रुतिः ।

**आदिः**—कारणम् । **आदिस्स संयोगनिमित्तहेतुः**इति श्रुतिः ।

**आत्मयोनिः**—आत्मा चासौ योनिश्च आत्मयोनिः सर्वस्यात्मा सर्वस्य योनिः । पाद्मे कल्याणकाण्डे षड्विंशाध्याये वर्णिरूपं शिवं प्रति उमासखी—

**श्रुतिर्यदीयं स्तुवती चरित्रं भवादृशै र्नित्यमधीयते च ।**
**तमात्मयोनिं तरुणेन्दुमौलिं सखीयमिच्छत्यधुना वरीतुम् ।** इति ।

**स विश्वकृद्विश्वविदात्मयोनिरि**ति श्रुतिः ।

**आत्मबुद्धि[प्रसादः]प्रकाशः**—आत्मनि या बुद्धिस्तस्याः प्रसादकरः। प्रसन्ने हि परमेश्वरे बुद्धिरपि तद्विषया प्रमा निष्प्रपञ्चाकारब्रह्मात्मनाऽवतिष्ठते । अथवा आत्मैव बुद्धिरात्मबुद्धिः सैव प्रकाशोऽस्येत्यात्मबुद्धिप्रकाशः । **तं ह देवमात्मबुद्धिप्रकाश**मिति श्रुतिः ।

**आरुणिकोपनिषदि**—

**आततम्**—आसमन्तात् ततं व्याप्तं परिपूर्णमित्यर्थः । **दिवीवचक्षुराततमि**ति श्रुतिः ।

**अथर्वशिखायां** —

**आत्मज्योतिः**—आत्मैवज्योतिरात्मज्योतिः, स्वयम्प्रकाशरूपम् । **आत्मज्योतिस्सकृदावर्तत** इति श्रुतिः ।

**तापनीयोपनिषदि**—

**आनन्दघनः**—निबिडानन्दस्वरूपः, परमप्रेमास्पदत्वात्। **सर्वस्मात्प्रियतम आनन्दघनं** इति श्रुतिः ।

**आनन्दामृतरूपः**—नाशरहितसुखैकतानमित्यर्थः । **चतुस्सप्तात्मानश्चतुरात्मानमानन्दामृतरूप**मिति श्रुतिः ।

**आप्ततमार्थः**—व्यापकतम इति यावत् । **अर्थैषो एवाकार आप्ततमार्थ** इति श्रुतिः ।

**आप्ततमः**—व्याप्ततमः—परिपूर्ण इत्यर्थः । श्रुतिस्तु—**आप्ततममुत्कृष्टतमश्चिन्मात्रं सर्वद्रष्टार**मिति ।

**आनन्दचिद्घनम्**—कस्यचिदपि द्वितीयस्यासत्त्वे सुखानुभवस्याप्यसत्त्वात् न पुरुषार्थं तदिति चेन्नेत्याह-आनन्दचिद्घनमिति । स्वयमेवानन्दानुभवात्मकमेकरसञ्चेत्यर्थः । **स्वात्मस्थं आनन्दचिद्घनं सिद्धं ह्यसिद्ध**मिति श्रुतिः ।

आन्तरः—ओतादप्यान्तरः, आत्मस्वरूपमित्यर्थः। **ओतं ओतेन जानीयादनुज्ञातारमान्तर**मिति श्रुतिः॥

॥ आकारादिनामव्याख्या समाप्ता ॥

॥ अथ इकारादिनामानि ॥

**ऐतरेयके**—

इदन्द्रः—आत्मेत्यर्थः। कथम्? आत्मैव आकाशादिद्वारा शरीरं सृष्ट्वा तत्र प्रविश्य सुखदुःखादिकं संसारमनुभूय आचार्योपदेशानन्तरं परिपूर्णमेव स्वात्मनः स्वरूपमिदमित्यपरोक्षरूपेण दर्शयति, दृष्टवानस्मीत्येवंप्रकारेण स्वात्मानमपरोक्षरूपेणानुभूतवान्, तस्मादिदन्द्रो नाम परमात्मा। तर्हि कथमिन्द्र इत्युच्यते? परोक्षाभिधानेनेति गृहाण। इन्द्रः परमेश्वरः। तदुक्तं **विद्याप्रकाशे**—

**यथाशास्त्रं विविच्येत्थं प्रत्यग्दृष्ट्या चिदात्मनः।**
**साक्षाच्चकार ब्रह्मत्वञ्जीवश्शान्त्यादिसंयुतः।**
**इदमित्यपरोक्षेण ददर्शेति विवक्षया।**
**इदन्द्रनामाऽभूज्ज्ञानी वैयाकरणदृष्टितः।**
**तमिन्द्रमित्याहुरन्ये नाम्नः पारोक्ष्यसिद्धये।**
**पूज्यस्य देवपित्रादेः परोक्षन्नाम हि प्रियम्।**
**परमेश्वररूपत्वादपीन्द्रत्वमिहोचितम्।**

**स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिति तस्मादिदन्द्रो नाम इदन्द्रोह वै नाम, तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण, परोक्षप्रिया इव हि देवाः** इति श्रुतिः।

**बृहदारण्यके**—

इन्धः—दीप्तिगुणविशिष्टः परमात्मा। **इन्धो ह वै नामैष योऽयंदक्षिणेऽक्षन् पुरुषः तं वा एतमिन्धं सन्तमिन्द्र** इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः इति श्रुतिः।

॥ इकारादिनामव्याख्या समाप्ता ॥

॥ अथ ईकारादिनामानि ॥

ईशावास्ये—

ईट्—ईष्ट इति ईट् सर्वनियन्ता । श्रुतिस्तु—**ईशावास्यमिदं** सर्वमिति ।

**मुण्डके—ईशः**—जीवविलक्षणोऽसंसारी, अशनायापिपासाशोकमोहजरामृत्युव्यतीतः सर्वस्य जगत ईश्वरः । तदुक्तं **पाद्मे** त्रयोविंशाध्याये—

कालकालं कलातीतं कलाधीशं कलात्मकम् ।
कालदेशापरिच्छेद्यं कालात्मानं कलामयम् ।
जगन्नाथं जगद्वन्द्यं जगत्कर्तारमीश्वरम् ।
जगदाद्यञ्जगद्योनिञ्जगद्भावनभावितम् ।
एवं सत्यान्तरात्मानं ध्यायन्विश्वेश्वरं विभुम् ।
समाधिनिष्ठो योगीन्द्रः समाधिस्थोऽभवन्मुनिः । इति ।

**श्रीमहाभारते द्रोणपर्वणि** द्रौणिं प्रति व्यासः—

स तपः परमास्थाय मैनाकं गिरिमास्थितः ।
ऊर्ध्वबाहुर्महातेजा ज्वलनादित्यसन्निभः ।
षष्टिर्वर्षसहस्राणि तावन्त्येव शतानि च ।
व्यशोषयत् तदाऽऽत्मानं वायुभक्षो जितश्रमः ।
अथापरं तपस्तप्त्वा द्विस्ततोन्यत् पुनर्महत् ।
द्यावापृथिव्योर्विवरं तेजसा समपूरयत् ।
स तेन तपसा तात ब्रह्मभूतो यदाऽभवत् ।
ततो विश्वेश्वरं योगी विश्वस्य जगतः प्रभुम् ।
ददर्श भृशदुर्दर्शं सर्वभूतैरपीश्वरम् ।
दुर्वारणं दुर्विषहं दुर्निरीक्षं दुरासदम् ।
अतिमन्युम्महात्मानं सर्वभूतप्रचेतसम् ।
तं देवदेवं परमाणुमीड्यं दिव्यं चापमिषुधी चाददानम् ।

हिरण्यवर्माणमनन्तवीर्यं पिनाकिनं वज्रिणं दीप्तशूलम् ।
परश्वधिनं गदिनं चायतासिं बिभ्रज्जटामण्डलं चन्द्रमौलिम् ।
व्याघ्राजिनं परिघदण्डपाणिं शुभ्राङ्गदं नागयज्ञोपवीतम् ।
विश्वेशानं भूषितं भूतसंघैः एकीभूतं तपसां सन्निधानम् ।
वचोऽधिकैरभिष्टुतं साधुवाग्भिः ज्वलन् दिवं खं क्षितिं चन्द्रसूर्यौ ।
हुताशवायुप्रतिमं सुरेशं नालं द्रष्टुं भिन्नवृत्ता नरा वै ।
ये चानृता नास्तिकाः पापशीलाः ब्रह्मद्विषो वाऽप्यमृतस्य योनिम् ।
यं पश्यन्ति ब्राह्मणा स्साधुवृत्ताः क्षीणे पापे मनसा वीतशोकाः ।
तन्निष्ठात्मा तपसा देवमीड्यं तं भक्त्या वै विश्वरूपं ददर्श ।
दृष्ट्वा चैनं वाङ्मनोबुद्धिदेहैः संहृष्टात्मा मुमुदे देवदेवम् ।
दिव्यमालापरिक्षिप्तं तेजसां परमं निधिम् ।
रुद्रं नारायणो दृष्ट्वा ववन्दे देवमीश्वरम् ।
वरदं सह पार्वत्या प्रियया दयितं प्रभुम् ।
अजमीशानमव्यक्तं कारणात्मानमीश्वरम् ।
स जानुभ्यां महीं गत्वा कृत्वा शिरसि चाञ्जलिम् ।
पद्माक्षस्तं विरूपाक्षमभितुष्टाव भक्तिमान् । इति ।

तत्रैव अष्टनवतिशततमाध्याये अर्जुनः—

संग्रामे शात्रवान्निघ्नन् शरौघैर्विमलैरहम् ।
अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ।
ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते ।
तस्यां दिशि विशीर्यन्ते शत्रवो मे महामते ।
पद्भ्यां न स्पृशते भूमिं न च शूलं विमुञ्चति ।
शूलाच्छूलसहस्राणि निष्पतन्त्यस्य तेजसा ।
तेन भग्नानरीन् सर्वान् मद्भग्नान् मन्यते जनः ।
तेन दग्धानि सैन्यानि पृष्ठतोऽनुदहाम्यहम् ।

भगवंस्त्वं ममाचक्ष्व को वा स पुरुषोत्तमः ।
शूलपाणिर्महान् कृष्ण तेजसा सूर्यसन्निभः ।

व्यासः—

प्रजापतीनां प्रथमं तेजसां प्रवरं प्रभुम् ।
भुवनं भूर्भुवं देवं सर्वलोकमहेश्वरम् ।
ईशानमीश्वरं देवं दृष्टवानसि शङ्करम् ।
शरणं प्राप्य कौन्तेय वरदं भुवनेश्वरम् ।
महादेवं महात्मानमीश्वरं वरदं प्रभुम् ।
त्र्यक्षं महाभुजं वीरं जटिलं चीरवाससम् । इति ।

पाद्मे कल्याणकाण्डे षड्विंशाध्याये—

यं देवं यतयो धीरा हृदयाम्भोजमध्यगम् ।
ज्योतिर्मयं विमुक्त्यर्थं ध्यायन्ति परमं शिवम् ।
यमाहुर्वेदसारज्ञास्सर्वज्ञं सर्वगं विभुम् ।
स्वयंप्रकाशसंज्ञानमानन्दं परमं विभुम् ।
यं दृष्ट्वा योगिनो नित्यं सन्तृप्ताः स्वान्तसंस्थितम् ।
अक्षरं सदसच्छून्यं परमात्मानमीश्वरम् ।
अनादिमध्यनिधनं परिपूर्णं सनातनम् ।
अजन्मानं स्वयंभूतं मनोवाचामगोचरम् । इति ।
द्रव्यं धरादि रूपादिगुणं यत् कर्मपञ्चकम् ।
द्विधा जातिर्विशेषस्त्वं समवायश्च कीर्त्यसे ।
माता मेयं मिति र्मानमिति तत्त्वचतुष्टयम् ।
सदसत्प्रविभागेन द्वेधा सर्वं त्वमीर्यसे ।

14

स्वामिन् भावनया सार्धं वाक्यार्थव्यपदेशया ।
क्रिया त्र्यंशस्वरूपिण्या त्वमेव प्रतिपद्यसे ।
आदौ नियोगत स्सिद्धं पुंसा साध्यं प्रयत्नतः ।
यदपूर्वं तदेवासि स्वर्गादिफलदायकम् ।
परादिवैखर्यन्तं तु चतुर्धा तच्छ्रुतीरितम् ।
शब्दब्रह्म त्वमेवासि प्रकृतिप्रत्ययात्मकम् ।
द्वयोश्चिदचितोस्तन्वन् उत्पत्तिस्थितिनिग्रहान् ।
व्यश्नुवांश्च महास्वामिन्नीश्वरस्त्वं विभाव्यसे । इति च ।

आदित्यपुराणे तृतीयाध्याये भानुः—

यदेतदैश्वरञ्ज्योतिस्सर्वगं भाति केवलम् ।
तदेव शरणं गच्छ यदीच्छसि परं पदम् ।
तदेव सर्वभूतस्थं चिन्मात्रं तमसः परम् ।
अक्षयं निर्मलं शुद्धं आनन्दं परमव्ययम् ।
प्रत्यक्षं सर्वभूतानामज्ञानां तद्विपर्ययम् ।
विश्वमायाविधातारं द्विरष्टादशरूपिणम् ।
भक्तिग्राह्यम्महादेवं जानीह्यात्मस्थमीश्वरम् । इति ।

लैङ्गपुराणे द्विचत्वारिंशाध्याये विष्णुः—

चिन्तयन्नेवमात्मस्थं ज्योतिर्लिङ्गं सदाशिवम् ।
प्रणनाम हरिर्भक्त्या देवमष्टाङ्गया मुहुः ।
अथ तेजोमयश्शंभुश्शरण्यश्शरणं गतम् ।
अनुगृह्य कटाक्षैस्तं समुत्तिष्ठेत्यभाषत ।
उत्थाय करुणापूर्णमीशं चन्द्रार्धशेखरम् ।
विश्वस्रष्टारमीशानं तुष्टाव दुरितच्छिदम् । इति ।

शिवरहस्ये अष्टमाध्याये दण्डपाणिः—

त्वामेवानन्तमीशानं त्वामेव जगदीश्वरम् ।
वदन्ति निगमास्सर्वे त्वां महेश नतोऽस्म्यहम् ।
यादृशस्त्वं महादेव न जाने तत्वतश्शिव ।
वेदैरपि न ते रूपं ज्ञातमीश नमोस्तु ते । इति ।

कूर्मपुराणे पञ्चविंशाध्याये कृष्णः—

ततोऽन्वपश्यत् गिरिशस्य वामे स्वात्मानमव्यक्तमनन्तरूपम् ।
स्तुवन्तमीशं बहुभिर्वचोभिः शंखासिचक्राङ्कितहस्तमाद्यम्
कृताञ्जलिं दक्षिणतस्सुरेशं हंसाधिरूढं पुरुषं ददर्श ।
स्तुवन्तमीशस्य महाप्रभावं पितामहं लोकगुरुं दिविस्थम् ।
त्वं ब्रह्मा हरिरजविश्वयोनिरग्निः संहर्ता दिनकरमण्डलाधिवासी ।
प्राणस्त्वं हुतवहवासवादिभेदः त्वामेकं शरणमुपैमि देवमीशम् ।
ख्यातं त्वामगुणमथाहुरेकरूपं योगस्थास्सततमुपासते हृदिस्थम् ।
देवस्त्वामभिदधतीह रुद्रमग्निं त्वामेकं शरणमुपैमि देवमीशम् । इति ।

आनुशासनिके—

दिवसकरशशाङ्कवह्निनेत्रं त्रिभुवनसारमपारमीशमाद्यम् ।
अजरममरमप्रसाद्य रुद्रं जगति पुमानिह को लभेत शान्तिम् । इति ।

ईश्वरगीतायां चतुर्थाध्याये—

सर्वेन्द्रियेभ्यः परमं मन आहुर्मनीषिणः ।
मनसश्चाप्यहंकारो ह्यहंकारान्महान् परः ।
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषाद्भगवान् प्राणस्तस्य सर्वमिदं जगत् ।

प्राणात् परतरं व्योम व्योमातीतोऽहमीश्वरः ।
नास्ति मत्तः परं भूतं मां विज्ञाय विमुच्यते । इति ।

तत्रैव पञ्चमाध्याये—

यं विदुर्योगतत्त्वज्ञाः योगिनो यतचेतसः ।
तमीशं सर्वभूतानां आकाशे ददृशुः किल ।
यस्य मायामयं सर्वं येनेदं प्रेर्यते जगत् ।
नृत्यमानः स्वयं विप्रैर्विश्वेशस्संप्रदृश्यते ॥
यत्पादपंकजं स्मृत्वा पुरुषोऽज्ञानजं भयम् ।
जहाति नृत्यमानं तं शिवं ते ददृशुः किल ।
यं विनिद्रा जितश्वासाश्शान्ता भक्तिसमन्विताः ।
ज्योतिर्मयं प्रपश्यन्ति स योगी दृश्यते किल ।
योऽज्ञानान्मोचयेत् क्षिप्रं प्रसन्नो भक्तवत्सलः ॥
तमेव मोचकं रुद्रमाकाशे ददृशुः परम् ॥ इति ।

तत्रैव—

त्वामेकमीशं पुरुषं पुराणं प्राणेश्वरं रुद्रमनन्तमूर्तिं ।
नमाम सर्वे हृदि सन्निविष्टं प्रचेतसं ब्रह्ममयं पवित्रम् ।
त्वां पश्यन्ति मुनयो ब्रह्मयोनिं दान्ताश्शान्ता हृदये रुक्मवर्णम् ।
ध्यात्वाऽऽत्मस्थमचलं ते शरीरे कविं परेभ्यः परमं तत्परञ्च । इति ।
त्वत्पादपद्मस्मरणादशेषं संसारबीजं विलयं प्रयाति ।
मनो नियम्य प्रणिधाय कायं प्रसादयामो वयमेकमीशम् । इति ।

तत्रैव दशमाध्याये—

नात्रान्तरं ब्रह्मविदोऽथ नित्यं पश्यन्ति नित्यमचलं यत् स ईशः ।
नित्यानन्दममृतं नित्यरूपं शुद्धं वदन्ति पुरुषं सर्ववेदाः । इति ।

तत्रैव एकादशाध्याये—

ओङ्कारवाच्यमव्यक्तं रश्मिज्वालासमाकुलम् ।
चिन्तयेत् तत्र विमलं परं ज्योतिर्यदक्षरम् ।
तस्मिन् ज्योतिषि विन्यस्य स्वात्मानं तदभेदतः ।
ध्यायीताकाशमध्यस्थमीशं परमकारणं ।
तदात्मा सर्वगो भूत्वा नकिञ्चिदपि चिन्तयेत् । इति ।
येचान्यदेवताभक्ताः पूजयन्तीह देवताः ।
मद्भावनासमायुक्ताः मुच्यन्ते तेऽपि भावतः ।
तस्मादनीश्वरानन्यांस्त्यक्त्वा देवानशेषतः ।
मामेव संश्रयेदीशं स याति परमां गतिम् । इति ।

ब्रह्माण्डपुराणे ब्रह्माणं प्रति यजुर्वेदः—

यो यज्ञैरखिलैरीशः योगाद्यैश्च समर्च्यते ।
यमाहुरीश्वरं देवं स देवः स्यात् पिनाकधृक् । इति

तत्रैव ब्रह्मा—

कथं तत् परमं ब्रह्म सर्वसङ्गविवर्जितम् ।
रमते भार्यया सार्धं प्रमथैश्चातिगर्वितैः ।
इतीरिते तु भगवान् प्रणवात्मा सनातनः ।
अमूर्तिर्मूर्तिमान् भूत्वा वचः प्राह पितामहम् ।

प्रणवः—

नह्येष भगवान् पत्न्या स्वात्मनो व्यतिरिक्तया ।
कदाचिद्रमते रुद्रस्तादृशोऽपि महेश्वरः ।

स्वयं स भगवानीशस्स्वयञ्ज्योतिस्सनातनः ।
स्वानन्दभूता कथिता गौरी नागन्तुका शिवा । इति ।

पुराणान्तरेऽपि—

सच्चिन्मयश्शिवस्साक्षात् तस्यानन्दमयी शिवा ।
सच्चिदानन्दरूपाभ्यां ताभ्यां नित्यं नमो नमः । इति ।

जुष्टं यदा पश्यत्यन्यमीशं इति श्रुतिः ।

श्वेताश्वतरोपनिषदि—ईशानः—स्पष्टम्

उक्तञ्च वायवीयसंहितायां चतुर्थाध्याये—

सर्वेन्द्रियगुणाभासस्सर्वेन्द्रियविवर्जितः ।
सर्वस्य प्रभुरीशानस्सर्वस्य शरणं सुहृत् । इति ।

ईश्वरगीतायां पञ्चमाध्याये—

तं ते ददृशुरीशानं तेजसां परमं निधिम् ।
नृत्यमानं महादेवं विष्णुना गगनेऽमले ।
नृत्यन्तं ददृशुर्देवं विश्वकर्माणमीश्वरम् ।
महादेवं महायोगं देवानामपि दैवतम् ।
पशूनां पतिमीशानं ज्योतिषाञ्ज्योतिरव्ययम् ।
पिनाकिनं विशालाक्षं योमानन्दं परं विभुम् ।
कालात्मानं कलात्मानं कालकालं महेश्वरम् ।
उमापतिं विरूपाक्षं भेषजं भवरोगिणाम् ।
ज्ञानवैराग्यनिलयं ज्ञानयोगं सनातनम् ।
शाश्वतैश्वर्यविभवं धर्माधारं दुरासदम् ।
महेन्द्रोपेन्द्रनमितं महर्षिगणवन्दितम् ।

आधारं सर्वशक्तीनां महायोगेश्वरेश्वरम् ।
योगिनां परमं ब्रह्म योगिनं योगवन्दितम् ।
योगिनां हृदि तिष्ठन्तं योगमायासमावृतम् ।
तं ततो जगतां योनिं नारायणमनामयम् ।
ईश्वरेणैकतापन्नमपश्यन् ब्रह्मवादिनः ।
दृष्ट्वा तदैश्वरं रूपं रुद्रं नारायणात्मकम् ।
कृतार्थं मेनिरे सन्तः स्वात्मानं ब्रह्मवादिनः । इति ।

ईड्यः—स्तुत्यः । तमीशानं वरदं देवमीड्यम् इति श्रुतिः ।

ईश्वराणां परमो महेश्वरः—ईश्वराणां विष्णुवैवस्वतादीनां परमो महेश्वरः उत्कृष्टनियन्ता । तदुक्तमनुभूतिप्रकाशे—

विष्ण्वादीनामीश्वराणां परमं तं महेश्वरम् ।
देवानां परमं देवं विदामास प्रसादतः । इति ।

तमीश्वराणां परमं महेश्वरमिति श्रुतिः ।

ईशसंस्थः—ईशे स्वामित्वे सर्वनियन्तृत्वे संस्थितिः अवस्थानं यस्य सः ईशसंस्थः । स तन्मयो ह्यमृत ईशसंस्थः इति श्रुतिः ।

अथर्वशिरसि—

ईशनी यः—नियमनशक्तिमान् । य इमांल्लोकानीशत ईशनी यः इति श्रुतिः । तापनीयोपनिषदि—

ईश्वरग्रासः—ईश्वरमपि कारणात्मानं अखण्डाकारवृत्त्यारूढस्सन ग्रसतीति ईश्वरग्रासः अनेन ब्रह्मणो निरुपाधिकं स्वरूपमुक्तं भवति ।

तदुक्तं वासिष्ठे—

श्रीरामः—परमार्थस्य किं रूपं तस्यानष्टचिदाकृतेः ।
पुनरेतन्ममाचक्ष्व निपुणं बोधवृद्धये ।

वसिष्ठः—

महाप्रलयसंपत्तौ सर्वकारणकारणम् ।
शिष्यते तत् परं ब्रह्म तदिदं वर्ण्यते शृणु ।

नाशयित्वा स्वमात्मानं मनसो वृत्तिसंक्षये।
सद्रूपं यदनाख्येयं तद्रूपं तस्य वस्तुनः।
अंगलग्नेऽपि वातादौ स्पर्शाद्यनुभवं विना।
जीवतश्चेतसो रूपं यत्तत् परममात्मनः।

ब्रह्मार्कविष्णुहरशक्रसदाशिवादिशान्तौ शिवं परममेतदिहैकमास्ते।
सर्वोपधिव्ययवशादविकल्परूपं चैतन्यमात्रमयमुज्झितविश्वसङ्गम्। इति।

ईश्वरग्रासस्तुरीयः इति श्रुतिः।

॥ ईकारादिनामव्याख्या समाप्ता ॥

॥ अथ उकारादिनामानि ॥

तैत्तरीयके—

उमापतिः—उमाशब्देन चिच्छक्तिः ब्रह्मविद्या ब्रह्मविद्याप्रदात्री भवानी वा तस्याः पतिः परमेश्वरः। यदत्र वक्तव्यं तत् सर्वं अम्बिकापतिनामव्याख्यानावसरे प्रपञ्चितमिति तत्रैव द्रष्टव्यम्।

आदित्यपुराणे द्वितीयाध्याये—

बालाग्रमात्रं हृत्पद्मे विश्वाधीशमुमापतिम्।
येऽनुपश्यन्ति विद्वांसस्तेषां शान्तिस्सदा भवेत्। इति।

तत्रैव त्रिषष्टितमाध्याये—

सकृत् पूजयते यस्तं भगवन्तमुमापतिम्।
अप्यश्वमेधादधिकं फलं प्राप्नोति नारद। इति।
भवव्यालमुखस्थानां भीरूणां देहिनां मुने।
तस्माद्विमोचकः श्रीमानुमापतिरिति श्रुतिः। इति च।

शैवे एकादशरुद्रसंहितायां हेमसभानाथमाहात्म्ये पञ्चमाध्याये—

श्रीमच्छाकरमारूढस्साक्षाद्धर्मं सनातनम्।
स्वस्यासौ किमधिष्ठानं स्वयं वाऽस्येति तर्कितम्।

सर्वानन्दमयाकारः सर्वाश्चर्यसमुच्चयः ।
तयोर्भाग्यवशादग्रे देवस्सन्निदधे शिवः ।
ततस्त्रिजगदाधारं सहस्रादित्यसन्निभम् ।
जटावल्कं नभोगङ्गालोलबालेन्दुशेखरम् ।
त्रिपुण्ड्रकोल्लसत्फालं भस्मोद्धूलितविग्रहम् ।
कंबलाश्वतरोद्गीतकल्याणजयघोषणम् ।
नीलकण्ठं ललाटाक्षं निशानाथार्कलोचनम् ।
मनोज्ञम्मधुरारावं मन्दहासमुखांबुजम् ।
कण्ठस्थलप्रभाक्षिप्तकालिन्दीजलविभ्रमम् ।
कल्पब्रह्मकपालास्रृक्कमनीयभुजान्तरम् ।
नन्दिभृंगिमहाकालजयालापस्मिताननम् ।
स्फुरत्त्रिशूलमुद्दीप्तकपालं सपरश्वथम् ।
ज्वलज्ज्वलनमुल्लासिडमरुं विलसन्मृगम् ।
उन्मिषत्पाणिकोदण्डमुदञ्चितवराभयम् ।
कार्कोटककटीसूत्रं करिचर्मधरं हरम् ।
कटाक्षकरुणासारकल्लोलितदिगन्तरम् ।
पश्चाद्भागस्थया देव्याऽप्यविनाभूतरूपया ।
शरन्मेघसमाश्लेषद्योतिविद्युत्प्रकाशया ।
परार्ध्यमुक्तामञ्जीरपरिष्कृतपदाब्जया ।
काषायवासस्संवीतकाञ्चीनद्धनितंबया ।
स्तनचक्राह्वयोन्मुक्तमृणालवरहारया ।
माणिक्यकंकणच्छायामनोज्ञकरपद्मया ।
मग्नलिरेखकण्ठार्हमौक्तिकत्रिसरश्रिया ।
अकलंकशशांकाभस्मयमानमुखश्रिया ।
कल्याणरत्नताटंककमनीयकपोलया ।

बालप्रवालबन्धूकपाटलाधरबिंबया ।
कमलोत्पलसंस्पर्धिकरुणानेत्रपूर्णया ।
धम्मिल्लकेतकीबर्हसगन्धेन्द्रकलंकया ।
आदिशक्त्या जगन्मात्रा गाढमाश्लिष्टविग्रहम् ।
आलोकनेन धातारमालापेन मुरद्विषम् ।
महेन्द्रादींश्च दिक्पालान् मानयन्तं स्मितश्रिया ।
तं दृष्ट्वा तौ महात्मानं व्याघ्रपादपतञ्जली ।
आनन्दसंभ्रमाश्चर्यमग्नात्मानौ बभूवतुः । इति ।

वायवीयसंहितायामुपरिभागे अष्टमाध्याये—

मुमुक्षया परे केचिन्मुनयो ब्रह्मवादिनः ।
संशयाविष्टमनसो विमृशन्ति यथातथम् ।
किं कारणं कुतो जाता जीवामः केन वा वयम् ।
केन वर्तामहे शश्वत् सुखेष्वन्येषु वाऽनिशम् ।
अविलंघ्या च विश्वस्य व्यवस्था केन वा कृता ।
कालः स्वभावो नियतिर्यदृच्छा नात्र युज्यते ।
भूतानि योनिः पुरुषो योगो वैषां परोऽथवा ।
अचेतनत्वात् कालादेश्चेतनत्वेन चात्मनः ।
सुखदुःखाभिभूतत्वादनीशत्वं विचार्य तु ।
ते ध्यानयोगाभिरताः प्रापश्यन् शक्तिमैश्वरीम् ।
पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम् ।
तया विच्छिन्नपाशास्ते सर्वकारणकारणम् ।
शक्तिमन्तं महादेवमपश्यन् दिव्यचक्षुषा ।
यः कारणान्यशेषाणि कालात्मसहितान्युत ।
अप्रमेयोऽनया शक्त्या साकमेकोऽधितिष्ठति ।

तस्य प्रसादयोगेन ध्यानेन च परेण च ।
दृढेन भक्तियोगेन दिव्यां गतिमवाप्नुयुः ।
तस्मात् सह तया शक्त्या हृदि पश्यन्ति ये शिवम् ।
तेषां हि शाश्वती मुक्तिर्नेतरेषामिति श्रुतिः । इति ।

तत्रैव एकोनविंशाध्याये श्रीकृष्णं प्रत्युपमन्युः—

आधारानन्तसंयुक्तं सिंहयोगासनादिकम् ।
पद्मासनं वा विमलं तत्त्वत्रयसमन्वितम् ।
तस्योपरि शिवं ध्यायेत् साम्बं सर्वमनोहरम् ।
सर्वावयवसंयुक्तं सर्वाभरणभूषितम् ।
सर्वलक्षणसंपन्नं सर्वातिशयसंयुतम् ।
रक्तास्यपाणिचरणं कुन्दमन्दस्मिताननम् ।
शुद्धस्फटिकसंकाशं फुल्लपद्मत्रिलोचनम् ।
चतुर्भुजमुदाराङ्गं चारुचन्द्रकलाधरम् ।
वरदाभयहस्तञ्च मृगटंकधरं शुभम् ।
सर्वकल्याणनिलयं चारुनीलगलाधरम् ।
सर्वोपमानरहितं सानुगं सपरिच्छदम् ।
ततस्संचिन्तयेत्तस्य वामभागे महेश्वरीम् ।
प्रफुल्लोत्फुल्लपत्राभविस्तीर्णायतलोचनाम् ।
पूर्णचन्द्राभवदनां नीलकुञ्चितमूर्धजाम् ।
नीलोत्पलदलप्रख्यां चन्द्रार्धकृतशेखराम् ।
अतिवृत्तघनोत्तुङ्गस्निग्धपीनपयोधराम् ।
तनुमध्यां पृथुश्रोणीं पीतसूक्ष्मतरांबराम् ।
सर्वाभरणसंपन्नां ललाटतिलकोज्ज्वलाम् ।
विचित्रपुष्पसंकीर्णकेशपाशोपशोभिताम् ।
सर्वतोऽनुगुणाकारां किञ्चिल्लज्जानताननाम् ।

हेमारविन्दं विकसद्दधानां दक्षिणे करे ।
दण्डवच्चापरं हस्तं न्यस्यासीनां सहासने ।
एवं देवश्च देवीश्च ध्यात्वाऽऽसनवरे शुभे ।
सर्वोपचारवद्भक्त्या भावपुष्पैस्समर्चयेत् । इति ।

**नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः** इति श्रुतिः ।

**छान्दोग्ये—**

**उत्**—उदिति परमेश्वरस्य गौणं नाम । सर्वेभ्यः पाप्मभ्यः सर्वदुरितेभ्यः उदितः अस्पृष्टत्वात् । तदुक्तं श्रुत्या—**स एष सर्वेभ्यः पाप्मभ्य उदितः** । एवंवेदनफलमाह—**उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद** इति । उन्नाम्नः परमेश्वरत्वं सूत्रकारेणापि निर्णीतं **अन्तस्तद्धर्मोपदेशा**दिति—अन्तः आदित्यमण्डलान्तर्वर्ती पुरुषः परमेश्वर एव; कुतः ? तद्धर्मोपदेशात्—तस्य परमात्मनः प्रसिद्धौ यौ धर्मौ सार्वात्म्यसर्वदुरिताभावौ तयोरुपदेशादिति सूत्रार्थः । श्रुतिस्तु—**तस्योदिति नामे**ति ।

**उद्गीथः**—उद्गीथ इति परमेश्वरस्य परोक्षं नाम । तथा हि—**तस्यर्क् च साम च गेष्णौ तस्मात् उद्गीथः** इति श्रुतिः । पृथिव्यग्न्याद्यात्मके ऋक्सामनी गेष्णौ पर्वणी-अवयव भूते परमेश्वरस्य, सर्वात्मा हि देवः, उन्नामा चासौ ऋक्सामगेष्णश्चेत्युद्गेष्णत्वे प्राप्ते उद्गीथत्वमुच्यते परोक्षेण । परोक्षप्रियत्वाद्देवस्य । **तस्मादुद्गीथः** इति श्रुतिः ।

**उत्तमपुरुषः** । उत्तमश्चासौ पुरुषश्च उत्तमपुरुषः अक्षिस्वप्नसुषुप्तपुरुषापेक्षया । **स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुषः** इति श्रुतिः ।

**ब्रह्मोपनिषदि—**

**उपनिषत्पदम्**—सदेरुपनिपूर्वस्य संसारविनाशार्थस्य ब्रह्मगत्यर्थस्य अविद्यादिबन्ध-शिथिलीकरणार्थस्य च ब्रह्मज्ञानमन्तरेणासंभवात् उपनिषत् ब्रह्मज्ञानं तस्य पदं विषयः । ब्रह्म-ज्ञानैकबोध्यमित्यर्थः । **तत् ब्रह्मोपनिषत्पदमि**ति श्रुतिः ।

अथ कैवल्योपनिषदि—

उमासहायः—उमा चिच्छक्तिः ब्रह्मविद्या भवानी वा सहायो यस्य स उमासहायः। तदुक्तमाचार्यैः श्रीपुरश्रीचक्रवर्णनानन्तरं सर्वानन्दमयनामके बिन्दौ पञ्चब्रह्मात्मकं हंसतूलिकातल्पयुक्तं मञ्चमुपवर्ण्य तदनन्तरं

तस्योपरि निवसन्तं तारुण्यश्रीनिषेवितं सततम्।
आवृन्तफुल्लहल्लकमरीचिकापुञ्जमञ्जुलच्छायम्।
सिन्दूरशोणवसनं शीतांशुस्तबकचुंबितकिरीटम्।
कुंकुमतिलकमनोहरकुटिलालकभरितकुमुद्बन्धुशिशुम्।
पूर्णेन्दुबिंबवदनं फुल्लसरोजातलोचनत्रितयम्।
तरलापाङ्गतरङ्गितशफरांकनशास्त्रसंप्रदायार्थम्।
मणिमयकुण्डलपुष्यन्मरीचिकल्लोलमांसलकपोलम्।
विद्रुमसहोदराधरविसृत्वरस्मितकिशोरसञ्चारम्।
आमोदिकुसुमशेखरमानीलभ्रूलतायुगमनोज्ञम्।
वीटीसौरभवीचीद्विगुणितवक्त्रारविन्दसौरभ्यम्।
पाशांकुशेक्षुचापप्रसवशरस्फुरितकोमलकराब्जम्।
काश्मीरपङ्किलाङ्गं कामेशम्मनसि कुर्महे सततम्।
तस्याङ्कभुवि निषण्णां तरुणकदम्बप्रसूनकिरणाभाम्।
शीतांशुखण्डचूडां सीमन्तन्यस्तसान्द्रसिन्दूराम्।
कुंकुमललामभास्वन्निटिलां कुटिलतरचिल्लिकायुगलाम्।
नालीकतुल्यनयनां नासाञ्चलनटितमौक्तिकाभरणाम्।
अङ्कुरितमन्दहासामरुणाधरकान्तिविजितबिम्बाभाम्।
कस्तूरीमकरीयुतकपोलसंक्रान्तकनकताटङ्काम्।
कर्पूरसान्द्रवीटीकबलितवदनारविन्दकमनीयाम्।
कंबुसहोदरकण्ठप्रलम्बमानाच्छमौक्तिककलापाम्।
कल्हारदामकोमलभुजयुगलस्फुरितरत्नकेयूराम्।

करपद्ममूलविलसत्काञ्चनमयकटकवलयसन्दोहाम् ॥
पाणिचतुष्टयविलसत्पाशांकुशपुण्ड्रचापपुष्पास्त्राम् ।
कूलङ्कषकुचशिखरां कुंकुमकर्दमितरत्नकूर्पासाम् ।
अणुदायादवलग्नामंबुदशोभासनाभिरोमलताम् ।
माणिक्यखचितकाञ्चीमरीचिकाक्रान्तमांसलनितम्बाम् ।
सरलोरुकाण्डयुगलां जङ्घाजितकामजैत्रतूणीराम् ।
प्रपदपरिभूतकूर्मां पल्लवसच्छायपदयुगमनोज्ञाम् ।
कमलभवकञ्जलोचनकिरीटरत्नांशुरञ्जितपदाब्जाम् ।
उन्मस्तकानुकम्पामुत्तरलापाङ्गपोषितानङ्गाम् ।
आदिमरसावलंबामनिदम्प्रथमोक्तिवल्लरीकलिकाम् ।
आब्रह्मकीटजननीमन्तः कलयामि सुन्दरीमनिशम् । इति।

उमासहायं परमेश्वरं प्रभुमिति श्रुतिः ।

श्वेताश्वतरोपनिषदि—

उद्गीतम्—

कार्यकारणलक्षणात् प्रपञ्चात् उपरि गीतं वेदान्तैः "अन्यदेव तद्विदिदितादथो अविदितादधि" "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद"इत्यादिभिः । प्रपञ्चास्पृष्टं ब्रह्मेत्यर्थः । तदुक्तं स्कान्दे ब्रह्मगीतायाम्—

प्रत्यगात्मा परञ्ज्योतिर्माया सा तु महत्तमः ।
तथा सति कथम्मायासम्भवः प्रत्यगात्मनि ।
तस्मात्तर्कप्रमाणाभ्यां स्वानुभूत्या च चिद्घने ।
स्वप्रकाशैकसंसिद्धे नास्ति माया परात्मनि ।
व्यावहारिकदृष्ट्येयं विद्याऽविद्या च नान्यथा ।
तत्त्वदृष्ट्या तु नास्त्येव तत्त्वमेवास्ति केवलम् ।

व्यावहारिकदृष्टिस्तु प्रकाशाव्यभिचारतः ।
प्रकाश एव सततं तस्माद्द्वैतमेव हि ।
अद्वैतमिति चोक्तिश्च प्रकाशाव्यभिचारतः ।
प्रकाश एव सततं तस्मान्मौनं हि युज्यते । इति ।

उद्गीतमेतत् परमन्तु ब्रह्म इति श्रुतिः ।

अथर्वशिरसि—

उपसंहर्ता—प्रलयकाले नामरूपात्मकप्रपंचोपसंहारकर्ता, अथवा, अखण्डाकारवृत्त्यारूढस्सन् स्वेतरं कृत्स्नप्रपञ्चमुपसंहरतीति ।

तदुक्तं स्कान्दे—

स्वतस्सिद्धं स्वयं सर्वं जगत् स्वेन प्रकाशितम् ।
स्वस्वरूपतया बुद्ध्वा तदत्ति स्वात्मना स्वयम् ।
... .... .... ....
स्वयमेव यथा स्वप्नं सृष्ट्वा गृह्णाति चेतनः ।
.... .... .... ....
स्वस्वप्नः स्वप्रबोधेन स्वात्ममात्रं यथा भवेत् ।
तथैव स्वप्रपञ्चोऽपि स्वयं स्यात् स्वप्रबोधतः ।
स्वस्वरूपतया सर्वं वेद स्वानुभवेन यः ।
स धीर स्स तु सर्वज्ञ स्स शिव स्स तु दुर्लभः । इति ।

तस्मादुपसंहर्त्रे महाग्रासाय वै नमो नमः इति श्रुतिः ।

उपासितव्यम्—श्रवणमनननिदिध्यासनैस्साक्षात्कर्तव्यम् ; अथ वा निर्विशेषस्वरूपप्रतिपत्त्यर्थं सगुणब्रह्मरूपेण वा उपासनीयम् ।

तदुक्तं स्कान्दे—

ईक्षणोपाधिसम्पन्नं परं तत्त्वमपि द्विजाः ।
स्वप्रधानादिरूपेण त्रिधोपास्यमतिप्रियात् ।

सत्वं रजस्तमश्चेति गुणा ये ब्रह्मशक्तिजाः ।
तैरप्येकत्वमापन्नं परं ब्रह्म यथाक्रमम् ।
रुद्रः प्रजापतिर्विष्णुरिति भेदमुपैति च ।
ते जगन्नाशसर्गादेः कर्तारः कार्यरूपिणः ।
उपास्यास्त्रिविधा नित्यं तेऽपि स्वं स्वमुपाधिभिः ।
तैर्गृहीतास्त्रिधा विप्रा मूर्तयस्त्रिप्रकारतः ।
चित्तपाकानुगुण्येन चिन्तनीया मनीषिभिः ।

एवमग्न्यादित्यादिदेवाः शब्दस्पर्शादयः आकाशादिभूतानि अण्डभेदाः लोकाः देशाः मेरुमन्दरादिपर्वताः नदीनदादयः वापीकूपतटाकाद्याः वनसमुद्राद्याः दिगादयः अनागतादिकालाः चतुर्विधभूतग्रामः वर्णा आश्रमाः धर्माधर्मादयः कर्त्रादिकारकं सर्वं प्रमातृप्रमाणादिकं विधिनिषेधाश्च विद्याविद्ये इत्यादिकञ्च सर्वं ब्रह्मरूपतया उपास्यं इत्युक्त्वा

यद्यदस्तितया भाति यद्यन्नास्तितयाऽपि च ।
तत्तद्ब्रह्मतया नित्यमुपास्यं ब्रह्मवित्तमैः । इति चोक्त्वा

तत्फलमुक्तम्—

इत्थं सर्वत्र यस्साक्षाद्ब्रह्मोपास्ते सनातनम् ।
स याति ध्यानयज्ञेन साक्षाद्विज्ञानमैश्वरम् । इति ।

तदेतदुपासितव्यं इति श्रुतिः ।

उत्तरतापनीयोपनिषदि ।

**उग्रः**—सर्वसंहारसमर्थः-अखण्डाकारवृत्त्यारूढस्सन् अविद्यातत्कार्यनिवर्तकः । श्रुतिस्तु—एष एवोग्र एष वीरः इति ।

**उकारः**—उत्कृष्टतमार्थः—उत्कृष्टतमश्चासौ अर्थश्च उत्कृष्टतमार्थः । ननु उकारस्य वर्णरूपत्वात् कथमुत्कृष्टतमार्थत्वमिति चेत्—सत्यं—वाच्यवाचकयोरभेदात् एवकाराच्च । तथा हि श्रुतिः—अथैषो एवोकार उत्कृष्टतमार्थ आत्मन्येव नृसिंहेदेवे ब्रह्मणि वर्तते इति ।

**उत्कृष्टः**—स्पष्टम्। **एष एवोग्र एषह्येवोत्कृष्टः** इति श्रुतिः।

**उत्कृष्टतमः**—स्पष्टम्। **ब्रह्मैव व्याप्ततम उत्कृष्टतमः** इति श्रुतिः।

**उदुत्कृष्टः उदुत्पादकः उत्प्रवेष्टा उत्स्थापयिता उद्द्रष्टा उत्कर्ता उदुत्पथवारकः उदुद्ग्रासः उदुद्भ्रान्तः उदुत्तीर्णविकृतिः**--पूर्वत्र अकारस्य शुद्धप्रत्यगर्थतामभिधाय उच्चारणसमये किञ्चिद्दीर्घतया मात्राद्वयविशिष्टस्य उकारस्य ब्रह्मार्थत्वे युक्तिमाह-**उदुत्कृष्टत्वा**दित्यादित्यादिना। उत्कृष्टत्वधर्मादुद्गतत्वे सति उत्कृष्टत्वमुदुत्कृष्टत्वम्। उदुत्पादकत्वादिकमप्येवमेव द्रष्टव्यम्। उत्कृष्टत्वं सर्वसंसारधर्मवर्जितत्वं ब्रह्मणस्सर्वज्ञत्वादिगुणविशिष्टत्वञ्च, उत्पादकत्वं सर्वस्रष्टृत्वं ब्रह्मरूपेण, सृष्टे जगति जीवरूपेण प्रवेष्टृत्वम्, तन्नियन्तृविष्णुरूपेण स्थापयितृत्वम्, प्रविष्टस्य द्रष्टृत्वम् कर्तृत्वञ्च बुद्धिप्राणोपाधितया, उत्पथवारकत्वं नियन्तृत्वमीश्वररूपेण, उद्ग्रासत्वं सर्वसंहर्तृत्वं रुद्ररूपेण, उद्भ्रान्तत्वं व्याप्तत्वं कारणात्मना, उत्तीर्णविकृतित्वं साक्ष्यात्मना। अयमर्थः—ब्रह्म तावदुत्कृष्टत्वादिगुणविशिष्टम्। तथाविधब्रह्मवाचकाश्चैते शब्दा उत्कृष्टादयः। तेषामादिभूतश्चायं प्रणवस्थ उकारो द्विमात्रः। तस्मादुत्कृष्टादिशब्दरूप एव सः। तस्मादुत्कृष्टत्वादिगुणविशिष्टब्रह्मवाचकोऽसाविति।

श्रुतिस्तु---**उदुत्कृष्टत्वादुदुत्पादकत्वादुत्प्रवेष्टृत्वादुत्स्थापयितृत्वादुद्द्रष्टृत्वादुत्कर्तृत्वादुदुत्पथवारकत्वादुदुद्ग्रासत्वादुदुद्भ्रान्तत्वादुदुत्तीर्णविकृतित्वाच्च** इति।

**उपद्रष्टा**—कर्तृसमीपस्थस्सन् कर्तॄन् पश्यति न स्वयं कर्त्रेत्युपद्रष्टा; अतो न कर्तृत्वादि संसारधर्मवत्त्वमात्मन इत्यर्थः। **उपद्रष्टाऽनुमन्ता** इति श्रुतिः।

**उपलब्धा**—सर्वसाक्षीत्यर्थः **अविकारोह्युपलब्धे**ति श्रुतिः।

॥ उकारादिनामव्याख्या समाप्ता ॥

**तैत्तरीये**—

**ऊर्ध्वरेतम्**—सदा सन्दीप्ततपस्कं यद्विकारेभ्य ऊर्ध्ववर्ती। छान्दसस्सकारलोपः। निर्विकारमित्यर्थः। **ऊर्ध्वरेतं विरूपाक्षं** इति श्रुतिः।

॥ ऊकारादिनामव्याख्या समाप्ता ॥

तत्रैव—

ऋतम्—अवितथस्वभावम् ।

ऋतं सत्यं परं ब्रह्म पुरुषमिति श्रुतिः ।

श्वेताश्वतरोपनिषदि—

ऋषिसंघजुष्टम्—ऋषिसंघैर्वामदेवादिभिः जुष्टं सेवितं-साक्षात्कृतमिति यावत् । प्रोवाच सम्यगृषिसंघजुष्टमिति श्रुतिः ।

॥ ऋकारादिनामव्याख्या समाप्ता ॥

ईशावास्ये—

एकम्—अद्वितीयम् । ईश्वरगीतायां द्वितीयाध्याये—

> नित्यस्सर्वात्मको ह्यात्मा कूटस्थो दोषवर्जितः ।
> एकस्स भिद्यते शक्त्या मायया सर्वभावतः । इति ।

सूतसंहितायाम्—

> रुद्रनारायणादीनां स्तंबादीनाञ्च साक्षिणम् ।
> एकं तर्कप्रमाणाभ्यां यः पश्यति स पश्यति । इति ।

अनेजदेकम्मनसो जवीयः इति श्रुतिः ।

माण्डूक्योपनिषदि—

एकात्मप्रत्ययसारः—जाग्रदादिस्थानेषुएकएवायमात्मेत्यव्यभिचारी यः प्रत्ययः तेनानुसरणीयः । अथवा, एकात्मप्रत्ययः सारः यस्य तुरीयस्याधिगमे स तुरीय एकात्मप्रत्ययसारः । एकात्मप्रत्ययसारं प्रपञ्चोपशममिति श्रुतिः ।

छान्दोग्ये—

एकलः—अद्वितीयः, अनवयवो वा । एकल एव मध्ये स्थातेति श्रुतिः ।

बृहदारण्यके—

**एकहंसः** । एकस्सन् जाग्रत्स्वप्नयोः इहलोकपरलोकान् गच्छतीति एकहंसः । **हिरण्मयः पुरुष एकहंसः** इति श्रुतिः ।

श्वेताश्वतरोपनिषदि—

**एकनेमिः**—योनिः कारणमव्याकृतमाकाशं परमव्योम माया प्रकृतिश्शक्तिस्तमो अविद्या छाया अज्ञानमनृतमव्यक्तमित्येवमादिशब्दैरभिलप्यमाना एका कारणावस्था नेमिरिव आधारा यस्याधिष्ठातुरद्वितीयस्य परमात्मनस्स एकनेमिः । **तमेकनेमिं त्रिवृतं षोडशान्त**मिति श्रुतिः ।

अथर्वशिरसि—

**एको रुद्रः**—भेदरहितस्सन् सर्वदुःखादिनाशकः । **ब्रह्माण्डपुराणे** अष्टाविंशाध्याये अनवद्यां प्रति नाथशर्मणोक्तम्—

**एको रुद्रो न द्वितीयाय तस्थे तद्ब्रह्मैकं नेह नानास्ति किञ्चित् ।**
**यद्यस्त्यन्यः कोऽपि वा कुत्रचिद्वा व्याचष्टाम् तं यस्य शक्तिस्समग्रा ।** इति ।

**वायवीयसंहितायां** सप्तदशाध्याये दक्षं प्रति दधीचिः—

**वाचकः प्रणवो यस्य ज्ञानमूर्तेरुमापतेः ।**
**अनुग्रहं विना तस्य कस्तं जानाति शूलिनम् ।**
**एक एवेति यो रुद्रस्सर्ववेदेषु गीयते ।**
**यस्य प्रसादलेशेन मूर्तिर्भवति शांकरी ।** इति ।

**ईश्वरगीतायां** पञ्चमाध्याये—

**एको रुद्रस्त्वं करोषीह विश्वं त्वं पालयस्यखिलं विश्वरूपः ।**
**त्वामेवान्ते विलयं विन्दतेदं नमामस्त्वां शरणं संप्रपन्नाः ।**
**त्वामेवाहुः कविमेकरुद्रं प्राणं बृहन्तं हरिमग्निमीशम् ।**
**इन्द्रम्मृत्युमखिलं चेकितानं नमामस्त्वां शरणं संप्रपन्नाः ।** इति ।

**स एक स्स एको रुद्रस्स ईशानः** इति श्रुतिः ।

अथर्वशिखायां—

एकर्षिः । एकश्चासावृषिश्चेत्येकर्षिः—स्वयं प्रकाशमानः । **आत्मा संवर्तकोऽग्निर्मारुतो विराडेकर्षि**रिति श्रुतिः ।

उत्तरतापनीये—

**एकरसम्**—चैतन्यैकस्वरूपम् । **अस्मात्सर्वस्मात् पुरतस्सुविभातमेकरसमेवे**ति श्रुतिः ।

॥ एकारादिनामव्याख्या समाप्ता ॥

प्रश्नोपनिषदि—

ओङ्कारः—

अत्र ओंकारे नामान्तरापेक्षया विशेषो दृश्यते श्रुतिस्मृतीतिहासपुराणेषु ।

तथाहि—**अन्यत्र धर्मादन्यत्राधर्मा**दित्यारभ्य—

**सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि ओमित्येतत् ।**
**एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।**
**एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ।**
**एतदालम्बनं श्रेष्ठमेतदालंबनं परम् ।**
**एतदालंबनं ज्ञात्वा ब्रह्मलोके महीयते ।** इति **काठके ।**
**प्रणवो धनुश्शरोह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।**
**अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ।** इति **मुण्डके ।**

**ओमित्येतदक्षरमिदं सर्व**मित्युपक्रम्य—

**प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ।**
**अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ।**
**सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च ।**
[illegible]

प्रणवं ह्यीश्वरं विद्यात् सर्वस्य हृदये स्थितः ।
सर्वव्यापिनमोंकारं मत्वा धीरो न शोचति ।
अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमश्शिवः ।
ओंकारो विदितो येन स मुनिर्नेतरे जनाः । इति **माण्डूक्योपनिषदि** ।

**यश्छन्दसामृषभो विश्वरूपः छन्दोभ्योऽध्यमृतात्संबभूव** इति, **ओमिति ब्रह्म ओमितीदं सर्वम्** इति, **ओंतद्ब्रह्म ओंतद्वायुः ओंतदात्मा ओंतत्सर्व**मिति, **ओमित्यात्मानं युञ्जीते**ति च **तैत्तरीयके** ।

**तदस्येदं वाचा तन्त्या नामभिर्दामभिस्सर्वं सितं सर्वं हीदं नामनि** इति **ऐतरेयके** ।

**तद्यथा शंकुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णा ओंकार एवेदं सर्व**मिति **छान्दोग्ये** ।

**ओं खं ब्रह्म खं पुराण**मिति **बृहदारण्यके** ।

**आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम्। ध्याननिर्मथनाभ्यासात् पाशं दहति पण्डितः** इति **कैवल्योपनिषदि** ।

**मोक्षमन्त्रस्त्रय्येवं विदेत् तद्ब्रह्म तदुपासितव्य**मिति **जाबालोपनिषदि** ; अस्यार्थः— मुमुक्षोर्जप्यम्मन्त्रमाह श्रुतिः—मोक्षमन्त्रः—मोक्षहेतुर्मन्त्रः मोक्षमन्त्रः त्रयी-प्रणवः ओङ्कार इत्येतत् । त्रयीरूपत्वात्तस्य । एवं-वक्ष्यमाणेन प्रकारेण विदेत् । तद्ब्रह्म-सत्यज्ञानादिलक्षणं ब्रह्म तत् ओङ्कारादिरूपमुपासितव्यमिति ।

**ओंहि ओंहि ओंहीत्येतदुपनिषदं विन्यसेदित्यारुणिकोपनिषदि** ; अस्यार्थः-भिक्षादौ जप्यं मन्त्रमाह श्रुतिः—**ओंहि** । हिर्हेत्वर्थः । यस्मात् ओंकार एव सर्वावान् तस्मादोङ्कार एव सर्वदा सर्वकर्मसु सन्यासिनाजप्य इत्यर्थः । त्रिरभ्यास आदरार्थः । एतमोङ्काराख्यमुपनिषदं— सामीप्येनाहं ब्रह्मास्मीति गमयित्वा नितरामहम्ममादिग्रन्थिं शिथिलीकृत्य अविद्यां सकार्यसंस्कारां सादयति विनाशयति इत्युपनिषत्, तद्धेतुः प्रणवोऽप्युपनिषत्, तां—विन्यसेत् गुरूपदिष्टमार्गेण तस्मिन् तस्मिन्नंगे विविधं न्यासं कुर्यादिति ।

**शब्दाक्षरं परं ब्रह्म तस्मिन् क्षीणे यदक्षरम् ।**
**तद्विद्वानक्षरं ध्यायेद्यदीच्छेच्छान्तिमात्मनः ।**

इत्यमृतबिन्दूपनिषदि ; अस्यार्थः—शब्दाक्षरं शब्दरूपं ओमित्येतदक्षरं प्रथमतः परं ब्रह्म-उत्कृष्टं ब्रह्म-परब्रह्मदृष्ट्या अवगतं इत्यर्थः । तस्मिन् शब्दाक्षरे क्षीणे विनष्टे यत्प्रसिद्धमक्षरं अविनाशि आनन्दात्मस्वरूपं तत् अक्षीणमक्षरं विद्वान् शास्त्रतात्पर्यवित् अक्षरमुक्तं ध्यायेत्—तदहमस्मीति चिन्तासन्ततिं कुर्यात् । यदीच्छेत्-इच्छां कुर्यात् शान्तिं - सर्वदुःखोपरतिरूपां मोक्षावस्थामात्मनः इति ।

**ओङ्काररथमारुह्य विष्णुं कृत्वाऽथ सारथिम् ।**
**ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ।**
**तावद्रथेन गन्तव्यं यावद्रथपथस्थितिः ।**
**स्थात्वा रथपथस्थानं रथमृत्सृज्य गच्छति ।**

इत्यमृतनादोपनिषदि ;अस्यार्थः—ओङ्काररथं शब्दब्रह्मसारभूतप्रणवात्मकं परब्रह्मरथमारुह्य—अकारादिमात्राफलकेषु विश्वाद्यात्मना अधिरोहं कृत्वा विष्णुं व्यापिनं सर्वात्मकत्वबोधकत्वमित्यर्थः,कृत्वा विधाय अथ-ओंकाररथारोहणानन्तरं सारथिं रथनेतारं ब्रह्मलोकपदान्वेषी ब्रह्म देशकालवस्तुपरिच्छेदशून्यं तदवलोक्यते आत्मत्वेनेति ब्रह्मलोकः प्रत्यगभिन्नं ब्रह्म तत् पद्यते येन साक्षात्कारेण तद्ब्रह्मलोकपदं जीवब्रह्मैक्यसाक्षात्कारः तदन्वेषः तत्प्राप्तीच्छा अस्यास्ति इति ब्रह्मलोकपदान्वेषी । रुद्राराधनतत्परः—रुद्राः—समनस्कानि ज्ञानकर्मेन्द्रियाण्येकादश तेषामाराधनं विषयेष्वप्रवृत्त्या भ्रान्त्यभावापादनं तत्परः रुद्राराधनतत्परः । इन्द्रियेष्वप्रमत्त इत्यर्थः । तावत् तावत्कालं रथेन ओंकारेण गन्तव्यं प्राप्तव्यं । यावद्विश्वादीनां क्रमेण प्रविलापनद्वारा तुरीयात्मनि बुद्धेरवस्थानम् । स्थात्वा स्थित्वा अहं ब्रह्मास्मीत्यवगत्येत्यर्थः । रथपथस्थानं रथपथस्थाने ओंकाररथचिन्तननिरोधे आनन्दात्मनि वाङ्मनसातीते रथं ओंकारलक्षणमुत्सृज्य गच्छति ओंकारं त्यजति इत्यर्थः इति ।

**सर्वजगद्धितं वा एतदक्षर**मिति **अथर्वशिरसि ।**
**ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यम्** इति **अथर्वशिखायाम् ।**

एतदेवाक्षरं पुण्यमेतदेवाक्षरं परम् एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् इति मैत्रायण्यां ।

ओमित्येतदक्षरमिदं सर्वमित्यादि तापनीये ।

एवम्—

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् इत्याद्याः स्मृतयोऽनुसन्धेयाः

आद्यं त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
एकाक्षरं परं ब्रह्म । ओङ्कारः स्वर्गद्वारं ।
प्रणवाद्या मुने देवाः प्रणवे पर्यवस्थिताः ।
वाङ्मयं प्रणवस्सर्वं तस्मात् प्रणवमभ्यसेत् । इति च ।

सारसंग्रहे प्रणवनिर्णये—

ऋग्वेदः स्यादकारान्तं उकारान्तं यजुस्स्मृतम् ।
सामवेदो मकारान्तस्सर्वग्राही ततो ध्रुवः ।
षडंगन्यायमीमांसापुराणस्मृतिपूर्वकम् ।
वेदेऽन्तर्भूतमेव स्यात् सर्वे वेदाश्च पारगाः ।
अहयोर्मध्यगा वर्णा (लक्षौकषलगौ ?) ःयतः ।
अकारः पुरुषस्तत्र हकारः प्रकृतिर्मता ।
तथा प्रणवगोऽकारो बीजात्मा पुरुषः स्मृतः ।
उकारः शक्तिरूपत्वात् प्रकृतिश्चाद्यरूपिणी ।
पुंप्रकृत्यात्मका वर्णास्तस्मादोम्मध्यगास्सदा ।
क्षराक्षरपरो देवो मकारः परमेश्वरः ।
अकारः सोमरूपोऽयमुकारस्सूर्य एव तु ।
मकारश्च महावह्निरिति तेजस्त्रयात्मकः ।
षोडशात्मा भवेत् सोमः षोडशस्वररूपवान् ।
सूर्यो द्वादशमासात्मा मासाश्च द्विविधा मताः ।
अयनद्वयभेदेन सृष्टिसंहाररूपतः ।

संसारमोक्षभेदेन तथाऽहोरात्रभेदतः ।
कखादिवर्णरूपास्ते सृष्टिसंहाररूपतः ।
मकारः कादिकलितः परमात्मा महेश्वरः ।
आदित्यान्तर्गतो देवः कालकालो महाप्रभुः ।
सर्वसंसारवर्णात्मा साक्षाच्चिन्मात्रविग्रहः ।
पुरुषः पञ्चविंशोऽयं षड्विंशश्च महेश्वरः ।
पञ्चविंशात्मना भोक्ता षड्विंशो भोजको मतः ।
उभयात्मा मकारोयं प्रणवस्थ उदाहृतः ।
भोक्ता तत्राग्निरूपः स्यात् दशभेदयुतस्स च । इति ।

सूतसंहितायां—

प्रसादहेतुभूतेषु प्रणवाख्यो महामनुः ।
वरिष्ठः कथितः प्राज्ञैः देवतासु विशेषतः ।
रुद्राराधनमेवोक्तं वरिष्ठमिति वैदिकैः । इति ।

वायवीयसंहितायाम्—

प्रणवो वाचकस्तस्य शिवस्य परमात्मनः ।
शिवरुद्रादिशब्दानां प्रणवो हि परः स्मृतः ।
शंभोः प्रणववाच्यस्य भावनात् तज्जपादपि ।
सा सिद्धिस्सा परा प्राप्या भवत्येव न संशयः ।
तस्मादेकाक्षरं देवमाहुरागमवेदिनः ।
वाच्यवाचकयोरैक्यं मन्यमाना मनस्विनः । इति ॥

अन्यत्र—ओमित्येकाक्षरे मन्त्रे स्थितस्सर्वगतश्शिवः । इति च ।
यदस्ति वस्तु तत्सर्वं गुणप्राधान्ययोगतः ।
समस्तं व्यस्तमपि च प्रणवार्थं प्रचक्षते ।
सर्वार्थवाचकस्तस्मादेकं ब्रह्मैतदक्षरम् ।

तेनोमिति जगत् कृत्स्नं कुरुते प्रथमं शिवः ।
शिवो वा प्रणवो ह्येष प्रणवो वा शिवः स्मृतः ।
वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते यतः । इति च ।

ननु उदाहृतश्रुत्यादिषु **'एवमोङ्कारेण सर्वा वाक्सन्तृण्णे'**त्यादिना ओङ्कारस्य सर्ववागात्मत्वमुक्तम्, तच्च सर्वश्रुतिस्मृतीतिहासपुराणात्मकपञ्चाशन्मातृकाजनकत्वं विना न संभवति, न च ओंकारस्य अकारोकारमकारात्मकस्य पञ्चाशन्मातृकाजनकत्वं संभवति, तदपेक्षया पूर्वभावित्वाभावात् तदन्तर्गतत्वाच्च-इति चेत्-सत्यम्-वैखर्योङ्कारस्य मातृकोत्पादकत्वाभावेऽपि नादोङ्कारस्य तदुत्पादकत्वसंभवात् । तदुक्तं **श्रीसूतसंहितायां** यज्ञवैभवखण्डे मातृकाऽध्याये—

सूतः—

अथाहं वाचिकं यज्ञं वक्ष्यामि श्रद्धया सह ।
परात्परतरादस्माच्छिवाच्चैतन्यलक्षणात् ।
स्वशक्तिसहितादेव द्विजा ज्योतिर्मयः परः ।
शब्दःसूक्ष्मःस्वभावेन प्रादुरासीदखण्डितः ।
स शब्दः पुनराधारे प्राणिनामास्तिकोत्तमाः ।
पिण्डीभूततया भाति तप्तजांबूनदप्रभः ।
स पुनर्ब्रह्मनाड्या तु प्रविश्य हृदयांबुजम् ।
विभक्तः सूक्ष्मरूपेण भाति वह्निप्रभः स्वतः ।
ब्रह्मरन्ध्रे पुनःसाक्षाच्छिवस्य स्थानमुत्तमम् ।
तत्रस्थोऽयं द्विजाश्शब्दःसूक्ष्मैकाक्षरतामियात् ।
तृतीये परमाधारे पूरके पुण्यभाजने ।
एकाक्षरत्वमाप्नोति स्वभावेनाक्षरद्वयम् ।
अयमाद्यः परो मन्त्रः सुप्रसिद्धः स्वभावतः ।
मननत्राणशूरत्वान्मन्त्र इत्यभिशब्दितः ।
मातृका परमा देवी मन्त्रमाता महेश्वरी ।

अस्मादाद्यान्महामन्त्रादाविर्भूता स्वभावतः ।
अधोमुखी भवेदेकमेकमूर्ध्वमुखीभवेत् ।
तस्माच्छ्रीमातृका शुद्धा चाद्यमन्त्रात्मिका भवेत् ।
आद्योऽयं परमो मन्त्रः सुप्रसिद्धोऽपि सुव्रताः ।
सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
त्रिचतुर्वत्सरं शिष्यं परीक्ष्य सततं पुनः ।
ईश्वरादेशतो देयो मन्त्रोऽयम्मतिमत्तमैः । इति ।

अस्यार्थः—वाचिकयज्ञं प्रतिज्ञाय प्रथमं वाच उत्पत्तिप्रकारमाह—**परात्परेति** । अत्र परशब्देन मायाशक्तिविशिष्टः चैतन्यज्योतीरूपः बिन्दुपदाभिधेयः ईश्वर उच्यते । तस्मात परात्परतरः मायाऽतीतः निष्कलः परशिवः । तस्मात् निष्कलात् परतरात् यथोदीरितरूपात चैतन्यलक्षणात् शिवात् स्वपराशक्तिसहितात् यथोदीरितरूपः बिन्दुशब्दाभिधेयः पर ईश्वरो जातः । [अत्र उत्पत्तिप्रकारः अंबिकापतिनामव्याख्याने प्रपञ्चितः । तथाऽपि प्रकृतोपयोगितया वर्ण्यते—प्राकृतप्रलये ग्रस्तसमस्तव्यस्तप्रपञ्चा माया स्वप्रतिष्ठे निष्कले लीना यावत्प्राणिकर्मपरिपाकं वर्तते । प्राणिकर्मभिश्च तस्यां मायायां विलीनैरेव क्रमेण प्राप्तपरिपाकैः स्वफलदानाय परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जन्यते । सैषा मायावस्था ईक्षणकामतपो विचिकीर्षादिशब्दैरभिधीयते । ईक्षणादिश्रुतिः पूर्वमुदाहृता । सा अवस्था विचिकीर्षाशब्देन प्रपञ्चसारे वर्णितः **विचिकीर्षुर्घनीभूता क्वचिदभ्येति बिन्दुता**मिति । अपरिपक्वकर्माविभागात घनीभावः । तदर्थव्यापारो विचिकीर्षा । परिपक्वकर्माकारपरिणतमायाविशिष्टं बिन्दुः । तदिदमविभागावस्थमव्यक्तमुच्यते । अत एव तस्य उत्पत्तिः स्मर्यते **तस्माद्व्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम** इति । स एव जगदङ्कुराकारः । अध्यात्मञ्चाऽऽधारादानाभि व्यज्यमानः कुण्डल्यादिशब्दैरुच्यते । यदाहुः—**शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां ज्ञात्वेत्थं न पुनः स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः** इति । **कुण्डली सर्वथा ज्ञेया सुषुम्नानुगतैव सा** इति च । तस्य च बिन्दोः कालक्रमेण चिदचिदंशविभागात् त्रैविध्यं तत्रैवोक्तम्—**कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा । स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते ।** इ

**बिन्दुनादबीजत्वभेदेन च निगद्यते** । इति । अचिदंशः स्थूलो बीजं । चिदचिन्मिश्रः सूक्ष्मो नादः । स एव पुरुषः । चिदंशः परो बिन्दुः । स एवेश्वरः । तस्य च त्रिधाविभागसमये शब्दब्रह्मापरनामधेयस्य रवस्य उत्पत्तिरुक्ता—**बिन्दोस्तस्माद्भिद्यमानात् रवोऽव्यक्तात्मको भवेत् । स रवः श्रुतिसंपन्नैः शब्दब्रह्मेति गीयते** । इति । स एव शब्दब्रह्मात्मको रवः जगदुपादानबिन्दुतादात्म्येन सर्वगतोऽपि प्राणिनां मूलाधारे अभिव्यज्यते इत्युक्तम्—**स तु सर्वत्र संस्यूतो जाते भूताकरे पुनः । आविर्भवति देहेषु प्राणिनामर्थविस्तृतः** । इति । **देहेष्विति** । तत्रापि मूलाधारप्रदेशे तस्यानुस्यूतस्य रवस्य संस्कृतपवनबलेन अभिव्यक्तिराविर्भावः । तत्र हि पवनस्योत्पत्तिरुक्ता—**देहेषु मूलाधारेऽस्मिन् समुद्यति समीरणः** इति । ज्ञातमर्थं विवक्षोः पुरुषस्य इच्छया जातेन प्रयत्नेन मूलाधारस्थः पवनः संस्कृतः । तेन पवनेन सर्वत्र स्थितं शब्दब्रह्म तत्राभिव्यज्यते । तदभिव्यक्तं शब्दब्रह्म कारणबिन्द्वात्मकं स्वप्रतिष्ठतया निष्पन्दं सत् परा वागित्युच्यते । तदेव नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तं विमर्शरूपेण मनसा युक्तं सामान्यस्पन्दप्रकाशरूपिणी कार्यबिन्दुतत्वात्मिका अधिदैवमीश्वररूपा पश्यन्ती वागित्युच्यते । तदेव शब्दब्रह्म तेनैव वायुना हृदयपर्यन्तमभिव्यज्यमानं निश्चयात्मिकया बुध्या युक्तं विशेषस्पन्दरूपनादबिन्दुमयी अधिदैवं हिरण्यगर्भरूपा मध्यमा वागित्युच्यते । तदेव आस्यपर्यन्तं तेनैव वायुनाभिव्यज्यमानं कण्ठादिस्थानेषु अकारादिक्षकारान्तवर्णमालारूपं परश्रोत्रग्रहणयोग्यं बीजात्मकमधिदैवतं विराड्रूपा वैखरी वागित्युच्यते । तदुक्तमाचार्यैः—

**मूलाधारान् प्रथममुदितो यस्तु भावः पराख्यः**
**पश्चात्पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः ।**
**वक्त्रे वैखर्यथ रुरुदिषोरस्य जन्तो स्सुषुम्ना**
**बद्धस्तस्माद्भवति पवनप्रेरितो वर्णसंघः** । इति ।

तदिदमुक्तं **शब्दस्सूक्ष्मःस्वभावेन प्रादुरासीदखण्डितः** इत्यादिना । **अखण्डित** इति । मूलकारणस्याभिव्यज्यमानस्य बिन्दोस्सर्वगतत्वात् तदात्मतया सर्वत्रानुस्यूत इत्यर्थः । तथा सर्वगतस्यापि वैखरीरूपशब्दवत् श्रोत्राग्राह्यत्वमेव सूक्ष्मत्वम् । इन्द्रियागोचरत्वे कथं तदवभास इत्यत

आह—**स्वभावेनप्रादुरासीदिति**। स्वप्रकाशबिन्दुकार्यतया तदात्मकत्वेन स्वयमपि स्वप्रकाशत्वस्वभावेन प्रादुर्भूतः। एष च शब्दः अखण्डितः। स्वप्रकाशत्वात् सर्वगतत्वात् जगत्कारणतादात्म्याद्। तच्च शब्दब्रह्मेत्युच्यते। तस्यैव शब्दब्रह्मणः परावाग्रूपलक्षणदशाविशेषमाह—**स शब्द** इति। **पिण्डीभूततयेति**। तस्य सर्वगतस्यापि प्राणिनामर्थविवक्षाहेतुप्रयत्नजनितपवनसंबन्धनिबंधना मूलाधारलक्षणप्रदेशविशेषे या अभिव्यक्तिः सा पिण्डीभावः। तयैवाभिव्यक्त्या स्वप्रकाशस्यापि तस्य यो वैशद्यातिशयः सः स्वप्रकाशरूपतासाम्यात् जडप्रकाशेन प्रसिद्धेन तप्तजांबूनदरूपेणोपमीयते - **तप्तेति**। तत्र पिण्डीभावदशोपहितो मूलाधारस्थः स्वप्रकाशः निष्पन्दश्शब्दः परावागित्युच्यते। स एव मूलाधारादानाभि विमर्शरूपेण मनसाऽभिव्यक्तो वैशद्यातिशयदशापन्नस्सामान्यस्पन्दरूपः पश्यन्तीवागित्युच्यते। एते परापश्यन्त्यौ स्वप्रकाशत्वमनोविषयत्वाभ्यां निष्पन्दत्वसामान्यस्पन्दत्वाभ्यां वा पृथक्त्वेन क्वचिन्निर्दिश्येते। इह तु विशेषस्पन्दनविरहसाम्येनैकीकृत्य पिण्डीभावजांबूनदप्रभाभ्यां विशिष्टैकरूपतया निर्दिश्येते इति मन्तव्यम्। अनेनैवाभिप्रायेण 'मातृका च त्रिधा स्थूले'त्यत्र परापश्यन्त्यौ सूक्ष्मतररूपत्वेन एकीकृत्य त्रैविध्यं वर्णितमिति। तस्यैवेदानीन्नाभेर्हृदयं प्राप्तस्य निश्चयात्मिकया बुद्ध्या विषयीकृतस्य विशेषस्पन्दरूपस्य मध्यमावाग्रूपतामाह—**स पुनर्ब्रह्मेति**। **ब्रह्मनाड्या** सुषुम्नया **विभक्त इति**। तत्तदर्थविशेषविषयशब्दरूपविशेषोल्लेखिन्या बुध्या निश्चित्य विकल्पितो विशेषस्पन्दरूप इत्यर्थः। अनेन मध्यमायाः परापश्यन्तीभ्यां विशेषो वर्णितः। वैखरीतो विशेषमाह—**सूक्ष्मरूपेणेति**। परश्रोत्रग्रहणायोग्यत्वं सूक्ष्मत्वम्। **स्वत इति**। स्वगोचरया निश्चयात्मिकया बुध्येत्यर्थः। आत्मीयवाचकात् स्वशब्दात् टाबन्तात् तृतीयार्थे सार्वविभक्तिकस्तसिः। तसिलादिष्वाकृत्वसुचः इति पुंवद्भावः। **वह्निप्रभ इति** पश्यन्तीवाग्रूपादपि वैशद्यातिशयो मध्यमाया वाच इत्युच्यते। वह्निप्रभा हि बाह्यतमोऽपहरणसमर्था तदसमर्थजांबूनदप्रभामतिशेते। वैखरीं वक्तुमारभते—**ब्रह्मरन्ध्रमिति**। प्रविश्येत्यनुषङ्गः। पुनरिति तुशब्दार्थे। मध्यमास्थानात् हृदयात् वैखरीस्थानस्य ब्रह्मरन्ध्रस्य भेदमाह—**शिवस्येति**। शिवस्य साक्षात् स्थानं आपरोक्ष्यस्थानम्; शिवो हि परमानन्दरूपो जगदुपादानतया सर्वगतोऽपि ब्रह्मरन्ध्रे उपास्यमानोऽचिरादेवापरोक्षीभवति। हृदयभ्रूमध्यादिषु उपासनस्थानान्तरेषु संभवत्स्वपि ब्रह्मरन्ध्रे अचिरादानन्दाभिव्यक्त्यतिशयादुत्तममित्युक्तम्। तथात्वे

। सतामनुभवः श्रुतिस्मृती च प्रमाणम्। श्रूयते हि—सैषा विदृतिर्नाम द्वा स्तदेतन्नान्दन-नेति। स्मर्यते च—

**मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम्।**
**ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः।** इति।

प्रविष्टस्य कृत्यमाह - **तत्रस्थ** इति। द्विविधं ह्यक्षराणां स्वरूपम्, स्थूलं सूक्ष्मञ्च। तत्र स्थूलं परश्रोत्रग्रहणयोग्यं वैखरीरूपतामापन्नं अकारादिक्षकारान्तवर्णतत्समभिव्याहारपदवाक्य-मन्त्राद्यात्मकमनेकम्। सूक्ष्मन्तु मध्यमारूपपरित्यागेन वैखरीरूपप्राप्ताभिमुख्यलक्षणमेकं नादात्मकं प्रणवरूपम्। प्रणवो हि कण्ठोष्ठाद्यभिव्यंग्यो बाह्यः स्थूलः; नादात्मकश्च सकलशब्दोपादानभूतो मूर्ध्न्यभिव्यज्यमानः आन्तरः सूक्ष्ममक्षरम्। तस्य चाक्षररूपप्राप्ताभिमुख्यस्य नादात्मकता शब्द इत्यनेनोक्ता।

तदुक्तं **साम्बेन**—

**ओमित्यन्तर्नदति नियतं यः प्रतिप्राणिशब्दः**
**वाणी यस्मात् (प्रभवति) प्रसरति परा शब्दतन्मात्रगर्भा** इति।

तस्य च मूर्ध्नि प्राणेन अभिव्यज्यमानस्य सकलवर्णोपादानत्वं **शबरस्वामिभिरुक्तम्— नाभेरुत्थितः प्राणः उरसि विस्तीर्णः कण्ठे परिवृतो मूर्धानमाहत्य परावृत्तो विविधान् शब्दान् व्यनक्ती**ति। अत्र च प्राणस्य नादाभिव्यञ्जकत्वम्, तदभिव्यक्तस्य तु नादस्यैव परापश्यन्तीमध्यमारूपस्य वर्णोपादानता, अत एव **प्राणः शब्दान् व्यनक्ती**त्युक्तम्। न पुनः प्रस्थित इति। उक्तो नादः प्रसूते इति उक्तं **साम्बेनैव**—

**या सा मित्रावरुणसदनादुच्चरन्ती त्रिषष्टिं**
**वर्णानन्तः प्रकटकरणैः प्राणसंगात् प्रसूते।**
**तां पश्यन्तीं प्रथममुदितां मध्यमां बुद्धिसंस्थाम्**
**वाचं वक्त्रे करणविशदां वैखरीञ्च प्रपद्ये।** इति।

पश्यन्तीमध्यमयोर्वैखरीकारणे नादात्मके प्रणवे सङ्गति(अनुगति)माह—तृतीय इति। पश्यन्तीमध्यमास्थाननाभिहृदयापेक्षया उक्ताक्षरस्थानस्य ब्रह्मरन्ध्रस्य तृतीयत्वम्, भ्रूमध्याद्यपेक्षया वर्णितादुत्कर्षात् परमाधारत्वम्, वैखरीकारणभावस्य तत्र परिपूर्णत्वात् पूरकत्वम्, सकल-पुण्यफलपरमानन्दाभिव्यक्तिस्थानत्वेन च पुण्यभाजनत्वम्। अक्षरद्वयस्य तत्रैकाकारता नाम पश्यन्तीमध्यमयोः अनुगतिरेव स्वभावेन-तदात्मकतया। अथवा नादात्मकस्य प्रणवस्य प्रभावोऽय-मुपवर्ण्यते। इत्थंनामाय प्रणवो महाप्रभावः यदिहैव उत्तरत्र वर्णयिष्यमाणमहिम्नोऽजपामन्त्र-स्यावयवभूतं हमिति स इति च अक्षरद्वयं अत्र एकाकारतामापन्नम्। तत्रहेतुः **स्वभावेनेति**। स्वस्मात् उक्ताक्षरद्वयात् भावेन उत्पत्त्या इत्यर्थः। तथा हि—लीलयापरिगृहीतार्धनारीश्वरावतारस्य परशिवस्य पुंभागः अहमित्युच्यते। प्रकृतिभागः स इति। सा च प्रकृतिः पुंसा अहमा तादात्म्यमात्मनो यदाऽनुसन्धत्ते तदा अजपातः सोऽहमिति परमात्ममन्त्रो जातः। तत्र सकार-हकारयोः लोपे सन्धौ च कृते प्रणवो जात इति वर्णितं **प्रपञ्चसारे**—

**हकारश्च पुमान् प्रोक्तस्स इति प्रकृतिर्मता।**
**अजपेयम्मता शक्तिः तथा दक्षिणवामतः।**
**बिन्दुर्दक्षिणभागस्थो वामभागो विसर्गकः।**
**तेन दक्षिणवामाख्यौ भागौ स्त्रीपुंससंज्ञकौ।**
**बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिर्मता।**
**पुंस्प्रकृत्यात्मको हंसः तदात्मकमिदञ्जगत्।**
**पुंरूपं सा विदित्वा स्वं सोहंऽभावमुपागता।**
**स एव परमात्माख्यो मनुरस्य महामनोः।**
**सकारश्च हकारश्च लोपयित्वा प्रयोजयेत्।**
**सन्धिं च पूर्वरूपाख्यं ततोऽसौ प्रणवो भवेत्।** इति।

इत उत्पत्त्या मातृकायाः, तत उत्पत्त्या च अन्येषां मन्त्रताऽनुसन्धानार्थमस्य तावदाद्य-मन्त्रतामाह - **अयमाद्य** इति। सर्वकारणत्वात् परः। ताल्वादिव्यञ्जकस्थानानपेक्षत्वात् स्वभावतः

सुप्रसिद्धः। अत्र मन्त्रपदं व्युत्पादयति-**मननेति**। तत्त्वस्य प्रबोधनेनैव संसारभयात् परित्राणे शूरत्वात्-मुख्यत्वात्। उक्तं हि **मननात् तत्त्वपदस्य भयात् त्रायते इति मन्त्रः**। यदर्थमस्य मन्त्रत्वमुक्तं तामिदानीं ततो मातृकाया उत्पत्तिमाह-**मातृकेति**। मातृकातो हि सर्वे मन्त्रा उद्धृयन्ते इति सा मन्त्रमाता, सा कथमस्मादुत्पद्येत यद्येष महामन्त्रो न स्यादित्यर्थः। ननु शाबरे प्राणाभिव्यक्तस्यैव नादस्य वैखरीरूपवर्णोत्पादकता उक्ता। सांबे 'प्राणसंगात् प्रसूते' इति। वैखरीरूपशब्दोत्पत्तिसमये च श्वासात्मकस्य प्राणस्योपरमात् व्यञ्जकप्राणाभावादनभिव्यक्तो नादः कथं वैखरीमुत्पादयेदित्यत आह— **अधोमुखीति**। त्रिविधं हि प्राणस्य स्वरूपम्। एकमधोमुखीभवेत् पूरकरूपमपानवृत्त्यात्मकम्, एकमूर्ध्वमुखीभवेत् रेचकरूपं प्राणवृत्त्यात्मकम्, अनयोः प्राणापानयोस्सन्धिः कुम्भकरूपं व्यानवृत्त्यात्मकं तृतीयम्। तत्र प्रथमयोरभावेऽपि तृतीयेन व्यानवृत्त्यात्मकेन प्राणेनाभिव्यक्तो नादो वैखरीं वाचञ्जनयति। तदुक्तं **छान्दोग्ये— यद्वै प्राणिति स प्राणो यदपानिति सोऽपानोऽथ यः प्राणापानयोस्सन्धि स्स व्यानो यो व्यानस्सा वाक् तस्मादप्राणन्ननपानन् वाचमभिव्याहरती**ति। अक्षरार्थस्तु—एकं रूपमधोमुखीभवेत् एकमूर्ध्वमुखीभवेत्। यत्तु नाधोमुखं नोर्ध्वमुखं व्यानात्मकं प्राणस्य रूपं तत् वैखरीं जनयतो नादस्याभिव्यञ्जकमिति हृदयम्। न मुख्यत्वमुभयोः। तदभिव्यक्तनादात्मकप्रणवस्य मूलमन्त्रस्यातिरहस्यत्वेन गुरुप्रसादैकलभ्यत्वाभिप्रायेण **आद्येति**। तथा चाग्रे स्वयमेव विवरिष्यति।

**आद्यमन्त्रात्मिकीति** च्व्यन्तम्; अस्य च्वावितीकारः। **शुद्धा चेति**। उक्तप्रणवकारणतया तदात्मकत्वेन ज्ञातैव सती मातृका सर्वात्मना ज्ञातत्वेन परिशुद्धा नान्यथेत्यर्थः। उक्तेनातिरहस्यत्वेन वैभवमेवास्य मन्त्रस्य ज्ञेयं इत्याह-**आद्य** इति। न केवलं रहस्य एव किन्तु **सुप्रसिद्धोऽपि- ओमिति ब्रह्म, ओमितीदं सर्वं, सर्वे वेदाः प्रणवादिकाः, ओमिति प्रतिपद्यन्ते** इति **एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वाक्, ओङ्कार एवेदं सर्व**मित्यादिषु सर्वशाखासु असकृत् व्यवहारात् सुप्रसिद्धः। तर्हीत्थं प्रसिद्धस्य कथमतिरहस्यत्वमिति चेत्, यथोदीरितशब्दब्रह्मदशाभूतपरापश्यन्तीमध्यमारूपतयाऽवतीर्य व्यानाभिव्यङ्ग्यतया सकलवर्णपदवाक्यात्मकशब्दोपादानभावेनाविद्वद्भिर्दुरधिगमत्वादिति भ्रमः। श्रूयते हि—**चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये**

**मनीषिणः गुहा त्रीणि निहिता नेंगयन्ति तुरीयं वाचो मनुष्या वदन्तीति** । सुप्रसिद्ध-स्याप्यस्य मन्त्रस्य यत् उक्तरीत्याऽतिरहस्यत्वं तदिदानीमाविष्करोति—**त्रिचतुर्वत्सरमित्यादि-शिवेन चेत्यन्तेन** । अत एव प्रणवस्य सर्वात्मकत्वं सर्वार्थवाचकत्वं ब्रह्मवाचकत्वञ्च युक्तिपुरस्सरं प्रतिपादितं **प्रणवाध्याये**—

**सूतः**—

**प्रणवं संप्रवक्ष्यामि समासेन न विस्तरात् ।**
**परापरविभागेन प्रणवस्तु द्विधा मतः ।**
**परः परतरं ब्रह्म प्रज्ञानन्दादिलक्षणम् ।**
**प्रकर्षेण नवं यस्मात् परं ब्रह्म स्वभावतः ।**
**अपरः प्रणवस्साक्षाच्छब्दरूप स्सुनिर्मलः ।**
**प्रकर्षेण नवत्वस्य हेतुत्वात् प्रणवः स्मृतः ।**
**परमप्रणवप्राप्तिहेतुत्वात् प्रणवोऽथवा ।**
**पुरा प्रजापतिस्साक्षाच्छ्रद्धया परया सह ।**
**भस्मोद्धूलितसर्वाङ्ग स्त्रिपुंड्रांकितमस्तकः ।**
**जितेन्द्रियो जितक्रोधो जटावल्कलसंयुतः ।**
**सदापञ्चाग्निमध्यस्थस्सांबध्यानपरायणः ।**
**ततान परमं घोरं तप स्संवत्सरत्रयम् ।**
**स पुन श्शङ्करस्यास्य प्रसादादंबिकापतेः ।**
**पृथिवीमन्तरिक्षञ्च दिवञ्चासृजदास्तिकाः ।**
**स तानभ्यतपल्लोकान् तेभ्यो वेदविदां वराः ।**
**त्रीणि ज्योतींष्यजायन्त पृथिव्या एव तत्र तु .**
**अजायताग्नि र्वायुश्च ब्राह्मणा अन्तरिक्षतः ।**
**दिवो दिवाकरस्साक्षाज्जगच्चक्षुरजायत ।**
**तानि चाभ्यतपज्ज्योतींष्यजस्तेभ्यो महाद्विजाः ।**
**त्रयो वेदा अजायन्त वेदानां प्रथमोऽनलात् ।**
**यजुर्वेदस्तथा वायोरादित्यात्सामसंज्ञितः ।**

वेदानभ्यतपत्तांश्च ब्रह्मा तेभ्यो महाद्विजाः ।
त्रीणि शुक्राण्यजायन्त तत्र ब्रह्मविदां वराः ।
ऋग्वेदादेव भूस्तद्वत् यजुर्वेदाद्भुवस्तथा ।
सामवेदात् सुवस्तानि शुक्राण्यभ्यतपत् प्रभुः ।
तथा तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा द्विजोत्तमाः ।
अजायन्त क्रमेणैव कोटिसूर्यसमप्रभाः ।
अकारश्च तथोकारो मकारश्चेति सुव्रताः ।
तानेकधा समभरद्ज ओमित्यतिप्रभम् ।
तस्मिन्नेव शिवस्सांबस्सर्ववस्त्ववभासकः ।
प्रतिबिंबितवांस्तेन प्रणवस्तस्य वाचकः ।
तप्तलोहादिवच्छंभोरभेदात् प्रणवो हि सः ।
सर्वावभासको नित्यमभवत् पण्डितोत्तमाः ।
ज्ञातार्थे ज्ञातमित्येवं वक्तव्ये सति तद्विना ।
ओमिति प्राह लोकोऽयं तेन ज्ञातस्य वाचकः ।
अज्ञातार्थे तथाऽज्ञातमिति प्राप्ते तु वाचके ।
ओमिति प्राह लोकोऽयं तेनाज्ञातस्य वाचकः ।
संदिग्धार्थे तु संदिग्धं इति प्राप्ते तु वाचके ।
ओमिति प्राह लोकोऽयं तेन सन्दिग्धवाचकः ।
आकाशादिपदार्थानां ये शब्दा वाचका भुवि ।
विना तानखिलान् शब्दान् यत ओमिति भाषते ।
अतः प्रयोगबाहुल्यात् घटकुड्यादिशब्दवत् ।
आकाशादिपदार्थानां वाचकः प्रणवः स्मृतः ।
सर्वावभासकत्वेन ब्रह्मणा सदृशः स्मृतः ।
सर्वावभासकं मन्त्रमिमं जपति यो द्विजः ।
सर्वमन्त्रजपस्योक्तं फलं स लभतेऽचिरात् ।

अतस्सर्वान् परित्यज्य सदा मन्त्रमिमं जपेत् ।
ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्री छन्द उच्यते ।
परमात्माभिधश्शंभुर्देवता परिकीर्तिता ।
अकारो बिन्दुसंयुक्तश्शक्तिरस्य द्विजोत्तमाः ।
उकारश्च मकारश्च द्वयं बीजं प्रकीर्तितम् ।
मोक्षार्थे विनियोगोऽस्य प्रोक्तो वेदान्तवेदिभिः ।
अग्निर्वायुश्च सूर्यश्च वर्णानाम्मुनयः क्रमात् ।
गायत्री च तथा त्रिष्टुप् जगती च यथाक्रमम् ।
छन्दांसि ब्रह्मविच्छ्रेष्ठाः वर्णानाञ्च यथाक्रमम् ।
ब्रह्मा विष्णुश्च रुद्रश्च वर्णानां देवताः क्रमात् ।
रक्तं शुक्लञ्च कृष्णञ्च क्रमाद्वर्णा उदाहृताः ।
जाग्रत् स्वप्नः सुषुप्तिश्च अवस्थाश्च यथाक्रमम् ।
भूम्यन्तरिक्षस्वर्गाश्च स्थानानि क्रमशो विदुः ।
उदात्तप्रमुखा विप्राः स्वराः प्रोक्ता मनीषिभिः ।
ऋग्यजुस्सामसंज्ञाश्च वेदाः प्रोक्ता यथाक्रमम् ।
अग्नयो गार्हपत्याग्निर्दक्षिणाग्निस्तथैव च ।
प्रोक्तश्चाहवनीयोऽग्नि वर्णानां क्रमशो द्विजाः ।
प्रातर्मध्यन्दिनं सायं काला उक्ता यथाक्रमम् ।
रजस्सत्वं तमश्चैव गुणा उक्ता यथाक्रमम् ।
सृष्टिः स्थितिश्च संहारः क्रियाः प्रोक्ता यथाक्रमम् ।
उत्पत्तौ च स्थितौ नाशे विनियोग उदाहृतः ।
अंगुष्ठादिकनिष्ठान्तमंगुलीनाञ्च सन्धिषु ।
क्रमाद्वर्णत्रयन्यासः कर्तव्यस्सिद्धिमिच्छता ।

अंगुलीषु च सर्वासु प्रणवन्यास ईरितः ।
भूरग्न्यात्मन इत्यादिमन्त्राश्च क्रमशो द्विजाः।
विन्यस्तव्याश्च सिद्ध्यर्थमङ्गुलीषु द्विजन्मना ।
क्रमाद्वर्णत्रयन्यासो नाभौ च हृदि मूर्धनि ।
कर्तव्यस्सर्वयत्नेन प्रणवेन तथैव च ।
हृदयादिप्रदेशेषु क्रमेणैव द्विजोत्तमाः ।
भूरग्न्यात्मन इत्यादिमन्त्राणां न्यास ईरितः ।
एवं न्यस्य विधानेन ध्यात्वा साम्बं त्रियम्बकम् ।
जपेन्मन्त्रवरं भक्त्या लक्षाणां दशकं द्विजाः ।
ततः सिध्यति मन्त्रोऽयं सत्यमेव न संशयः ।
षट्कर्माणि प्रसिद्ध्यन्ति तथैवाष्टविभूतयः ।
अपवर्गः स्वतःसिद्धः पापैस्सर्वैश्च मुच्यते ।
सर्वविद्यालयो भूत्वा यथेष्टं फलमाप्नुयात् ।

अयमर्थः—इत्थं सकलमन्त्रमूलभूतपञ्चाशद्वर्णात्मिकां प्रणवावयवेभ्यश्च अकारोकारमकार-बिन्दुनादेभ्यः पञ्चभ्यः पञ्चाशत्कलारूपेणोत्थापितां मातृकामभिधाय तत्कारणभूतं परापरब्रह्मात्मकं प्रणवं वक्तुमारभते - **प्रणवमिति** । **एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारः** इति श्रुत्या यदुक्तं द्वैविध्यं तदभिप्रेत्याह—**परापरविभागेनेति** । तत्र कोऽसौ परः प्रणव इति, तमाह—**परतरमिति** सत्यज्ञानानन्तानन्दैकरसं मायातत्कार्यासंस्पृष्टं यत् परशिवस्वरूपं स परः प्रणवः । कुतस्तस्य प्रणवशब्दाभिधेयतेत्याशङ्क्य निर्वक्ति - **प्रकर्षेणेति** । यस्मात्परशिवस्वरूपं कारणान्तरमनपेक्ष्य प्रकर्षेण नवं अशेषविक्रियाविरहेण कूटस्थनित्यं सत् परमानन्दप्रकाशनात् सर्वदा अभिनवं अतः तथाविधस्वरूपस्य प्रणवशब्दाभिधेयतेत्यर्थः । अपरं प्रणवमाह—**अपर इति** । अपरस्येदं नाम द्वेधा निर्ब्रूते—**प्रकर्षेणेति** । अनेन मन्त्रेण यथोक्तपरशिवस्वरूपं स्वात्मतया विदुषः पुंसो अभिनवत्वप्राप्तिहेतुत्वात् प्रकर्षेण नवो भवत्यनेनेति व्युत्पत्त्या प्रणवः । यद्वा, यः प्रागुक्तः परमः प्रणवः तद्वाचकत्वेन तत्प्राप्त्युपायत्वात् शब्दात्मकस्यास्य प्रणवाभिधेयता । अथास्य सकल-

वेदात्मकत्वमाविष्कर्तुं **ऐतरेयके—प्रजापतिरकामयत प्रजायेय भूयान् स्यामित्यत्र** पृथिव्यादीनामुत्तरोत्तरसारात्मना या सृष्टिरुक्ता, तामत्र सुखावबोधाय श्लोकैस्संगृह्णाति—**पुरा प्रजापतिरित्यादिना सुव्रता इत्यन्तेन**। पृथिव्यन्तरिक्षद्युलोकानामग्न्यादयः सारात्मकाः, तेषामृग्वेदादयः, तेषाञ्चव्याहृतयः, ताभ्यश्चाकारोकारमकाराः सर्वसारत्वेनालौकिकप्रकाशाः प्रजापतिना निस्सारिता इत्यर्थः। कथमेतावता प्रणवस्य सर्वसारतेत्यत आह-**तानेकधेति**। प्रजापतिस्तानेवाकारादीनेकत्वेन संयोजितवान्, तस्मात् 'आद्गुणः' इति गुणे कृते ओमिति मन्त्ररूपं निष्पद्यते। अथास्य मन्त्रस्य मन्त्रान्तरात् वैशिष्ट्यमाह—**तस्मिन्नेवेति**। य उक्तरीत्या पृथिव्यादिसारत्वेन निर्मलः प्रणवः तस्मिन्नेव प्रणवमन्त्रे आदर्शे मुखमिव स्वप्रकाशचिद्रूपः परशिवः प्रतिबिंबतया भासते। अतस्तस्य स एव प्रणवो वाचको जातः। तथा च पारमर्षं सूत्रं **तस्य वाचकः प्रणवः** इति। तप्तायःपिण्डवत् प्रतिबिंबितस्वप्रकाशपरचैतन्यज्योतिषा सहैकीभावात् प्रणवोऽपि तद्वत् सर्ववस्त्ववभासको जात इत्याह—**तप्तलोहादिवदिति**। इदमेव सर्वावभासकत्वमुपपादयति—**ज्ञातार्थ इत्यादिना ब्रह्मणा सदृशःस्मृतः इत्यन्तेन**। ज्ञाताज्ञातसंदिग्धेषु आकाशादिषु च पृष्टस्सर्वो जनः किमिदं भवता ज्ञातमित्यादिप्रश्नस्य ज्ञातमित्यादिप्रतिवचनपरिहारेण यस्मादोमित्येव प्रतिब्रूते तस्मात् ज्ञाताज्ञातादिपदवदयमपि तत्तदर्थस्य पर्यायतया वाचकः। यथा घटकुड्यादिशब्दानां पृथुबुध्नोदराकारादिलक्षणोऽर्थः प्रातिस्विको वाच्यः एवमस्याप्युक्तरीत्या सर्वेष्वर्थेषु प्रयोगस्य रूढत्वात् सर्वावभासकत्वम्। अत एव छन्दोगाः प्रणवस्यानुज्ञाक्षरत्वमामनन्ति-**तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चिदनुजानाति ओमित्येव तदाह** इति। इत्थं प्रणवस्य सर्वावभासकत्वमुपपाद्य तद्धेतुकं प्रणवजपस्यातिशयं दर्शयति—**सर्वावभासकम्मन्त्रमिति**। एतद्व्यतिरिक्तसकलमन्त्रजपात् यत् फलं तत् प्रणवजपेनैवाप्नोतीत्यर्थः। प्रणवस्य सर्वमन्त्रात्मकत्वात् सर्ववेदसारत्वाच्च। श्रूयते हि-**यः प्रणवमधीते स सर्वमधीते** इति **ओमिति प्रतिपद्यते एतद्वै यजुस्त्रयीं विद्या**मिति। ऋष्यादिज्ञानपुरस्सर एव मन्त्रो जप्तव्य इत्यभिप्रेत्याह—**ऋषिर्ब्रह्मेत्यादि**। अस्य मन्त्रस्य सर्वावभासकत्वात् स्वेतरसकलमन्त्रफलसाधनत्वमुक्तम्। न केवलं तावदेव, मोक्षश्चास्यासाधारणं फलमित्याह-**मोक्षार्थ इति**। अथैतस्यावयवानां अकारोकारमकाराणां जपकाले स्मर्तव्यान् ऋष्यादीनाह—**अग्निरित्यादिना विनियोग उदाहृत इत्यन्तेन। अंगुष्ठादीति**। अकारादीन्यक्षराणि अंगुष्ठाद्यंगुलीनां त्रिषु संधिषु अंगुष्ठादिकनिष्ठान्तं प्रत्येकं न्यस्तव्यानीत्यर्थः। एवं वर्णन्यासं

कृत्वा तास्वेवांगुलीषु तत्समुदायात्मकः प्रणवोऽपि न्यस्तव्य इत्याह-**अंगुलीष्विति । भूरित्यादि ।** भूरग्न्यात्मन इत्यादयोंऽगमन्त्राः। ते ह्यंगुष्ठाद्यंगुलीषु न्यस्तव्या इत्यर्थः। पुनरकारादिवर्णत्रयं विभज्य नाभिहृदयमूर्धसु प्रत्येकं न्यस्तव्यं ततस्तेष्वेव स्थानेषु तत्समुदायस्य प्रणवस्य च न्यासः कर्तव्य इत्याह—**क्रमाद्वर्णेति** । ततो हृदयादिदेशेषु भूरग्न्यात्मन इत्यादिषडंगमन्त्रान् न्यसेदित्याह—**हृदयादीति**। शिष्टं स्पष्टम्। परमहंसस्य प्रणवजप एव कर्तव्य इति तत्रैवोक्तम्-

**कुटीचकाश्च हंसाश्च तथैव च बहूदकाः ।**
**सावित्रीमात्रसंपन्ना भवेयुर्मोक्षकारणात् ।**
**प्रणवाद्यास्त्रयो वेदाः प्रणवे समवस्थिताः ।**
**तस्मात् प्रणवमेवैकं परहंसस्सदा जपेत् ॥**

**स्कान्दे शङ्करसंहितायां** अशीतितमाध्याये—

**ओङ्कारमाद्यं परमात्मरूपं संसारनाशे च समर्थमन्त्रम् ।**
**अचञ्चलं प्राप्यमजिह्मभक्तैः ध्यायेत् सदा देशिकवाक्यमानात् ॥** इति ।
**किमत्र बहुनोक्तेन प्रणवेन तुला न हि ।**
**गायन्ति श्रुतयस्सर्वाः जपन्ति मुनयस्तथा ।**
**वाच्यं ब्रह्म परं वस्तु महिमा केन वर्ण्यते ।**
**शुकादयो हि यं जप्त्वा मोक्षमापुर्निरत्ययम् ।**
**लौकिकी वैदिकी वाक् च व्याप्ता येन पलाशवत् ।**
**इतरे तु महामन्त्रा गायत्र्याद्या द्विजर्षभाः ।**
**यथा नद्यो महत्यब्धावन्तर्धिं ययुरुत्तमाः ।**
**इत्यवोचमहं सर्वं यत् पृष्टं मुनिसत्तमैः ।**
**पठन्तु शृण्वन्तु च वाचयन्तु लिखन्तु गायन्तु च वाचयन्तु ।**
**ओंकारकल्पं यतिबृन्दसेव्यं सूतोक्तमीशोक्तमनिन्दितञ्च ॥** इति ।

**तत्रैव** द्व्यशीतितमाध्याये—

**ओंकारः प्रणवोऽनन्तः सर्वव्यापी च तारकम् ।**
**सूक्ष्मं शुक्लं वैद्युतञ्च (परब्रह्माष्टमादिकम् ?) ।**

एकश्चाप्येकरुद्रश्च ईशानो भगवांस्तथा ।
महेश्वरो महादेवः प्रत्यग्रूपः परात्परः ।
षोडशैतानि नामानि प्रणवब्रह्मणो द्विजाः ।
अष्टोत्तरशताद्दिव्यान्नामभ्यः प्रणवस्य वै ।
तथा सहस्रनामभ्यस्सारमुद्धृत्य सादरम् ।
मुमुक्षोर्मोक्षमाणाय जगादाथर्वणी श्रुतिः ।
एषां नाम्नां सुदिव्यानां व्याख्याञ्चक्रे स्वयं श्रुतिः ।
यः पठेत् त्रिषु कालेषु ज्ञात्वा माहात्म्यमेषु सः ।
अपवर्गं शुभं प्रैति जन्तुस्तेनापि वीक्षितः । इति ।
प्रणवः परमं ब्रह्म प्रणवः परम शिवः ।
प्रणवः परमो विष्णुः प्रणवस्सर्वदेवताः ।
प्रणवस्सर्वतीर्थानि प्रणवस्सर्वविष्टपाः ।
प्रणवस्सर्वकर्माणि ततः प्रणवमभ्यसेत् । इति च ।

तत्रैव—

उत्पत्तिस्थितिभंगानि जायन्ते जगतो यतः ।
कार्यकारणकर्तारमोङ्कारं प्रणमाम्यहम् ।
यो गूढस्सर्वभूतेषु सर्वभूतानि शास्ति यः ।
सर्वभूतस्वरूपी यः ओङ्कारं प्रणमाम्यहम् ।
विश्वं चराचरं सृष्ट्वा तदन्तः प्रविवेश यः ।
तिलेषु तैलवत् सूक्ष्ममोङ्कारं प्रणमाम्यहम् ।
अग्रे सृष्टेः प्रपञ्चस्य य आस्ते वटबीजवत् ।
स्रष्टारञ्च पुनस्तस्य प्रणवं प्रणतोऽस्म्यहम् ।
आब्रह्मस्तम्बपर्यन्तभूतानि व्याप्य जीववत् ।

यस्संसरति भूतात्मा प्रणवं प्रणतोऽस्म्यहम् ।
योऽन्तर्यमयते नित्यं भूतानां सर्ववस्तुनाम् ।
हिताहितेषु कार्येषु प्रणवं प्रणतोऽस्म्यहम् ।
महेशब्रह्मविष्णूनां रजस्सत्वतमोगुणैः ।
जनकं यत् परं वस्तु तारकं पातु नस्सदा ।
नित्यत्वहेतुर्नित्यानां मंगलानाञ्च मंगलम् ।
शुभ्रवस्तुषु यच्छुभ्रं तारकं पातु नस्सदा ।
सर्वभूतहृदाकाशे काशते निर्मलं परम् ।
आकाशगं सर्वगं यत् तारकं पातु न स्सदा ।
दृश्यते श्रूयते वस्तु स्मर्यते क्रियते च यत् ।
पठ्यते बोध्यते सर्वं तारकं पातु नस्सदा ।
वेदा यस्य शिरः प्रोक्तं शास्त्राण्यङ्गानि यस्य च ।
अंगानि यस्य रोमाणि प्रणवो राजते हि सः ।
पुराणं वाचकं यस्य ज्ञापकं धर्मशास्त्रयोः ।
इतिहासा यस्य हासाः प्रणवो राजते हि सः ।
वेदान्ता यस्य सर्वेऽपि शरीरं श्रुतिमस्तकाः ।
वाग्जालं येन संव्याप्तं प्रणवो राजते हि सः ।
वेदादौ यः पुरा प्रोक्तो मध्ये तेषां य उच्यते ।
तेषामन्ते य आस्ते च प्रणवो राजते हि सः ।
नित्यो निरत्ययस्सत्यस्सर्वाधारविवर्जितः ।
निष्कलो निर्विकारो यः तारं दिशतु नः फलम् ।
यज्जप्त्वा परमात्मानं विश्वामित्रादयो द्विजाः ।
ब्राह्मण्यं लेभिरे ब्रह्म तारकं तदुपैम्यहम् ।

यं मत्वा विभुमीशानं दुःखं नो वेत्ति किञ्चन ।
निर्दुःखं दुःखहन्तारं तारकं तदुपैम्यहम् ।
सर्वदर्शनमालोच्य निश्चिन्वन्ति मुनीश्वराः ।
ध्येयं तारकमित्येव तारकं तदुपैम्यहम् ।
निर्मलाय स्वरूपाय नानाकारस्वरूपिणे ।
सर्वलोकविकाराय प्रणवाय नमो नमः ।
वेदान्ताम्भोजसंघानां भास्कराय प्रकाशिने ।
भास्करस्यापि रवये प्रणवाय नमो नमः ।
जीवा जीवन्ति येनैव सप्राणापानचेष्टया ।
.... .... उभौ तस्मै प्रणवाय नमो नमः ।
इतरस्य महामन्त्रजालस्य फलदोऽपि यः ;
सर्वमन्त्रादिरूपाय प्रणवाय नमो नमः ।
प्रत्यग्रूपाय दिव्याय रविमण्डलवासिने ।
पुरुषेषु निवासाय तारकाय नमो नमः ।
यं जप्त्वा सकृदुच्चार्य तुच्छीकुर्वन्ति सागरम् ।
भवरूपं नमस्तस्मै तारकाय नमो नमः ।
यं मुक्त्वा नेह चामुत्र लभन्ते फलमव्ययम् ।
लब्ध्वा च यं कृतार्थाः स्युः ध्यायाम्येतद्धि तारकम् ।
यदज्ञानेन सर्वस्य प्रकाशो नास्ति प्रत्ययात् ।
चिदानन्दस्वरूपाय तारकाय नमो नमः ।
रज्जु र्यथा सर्परूपा भ्रान्त्या भाति तथा भ्रमात् ।
तारकं विश्वरूपेण भाति नास्त्यत्र संशयः ।
ओङ्काराय नमस्तस्मै ओङ्काराय नमो नमः ।
श्रद्धित्वा यं हि गायत्रीं त्यजन्ति यतिपुङ्गवाः ।
ओङ्काराय नमस्तस्मै ओङ्काराय नमो नमः ।

आरोपयन्ति वाचाऽग्नौ गायत्रीं यद्दिदृक्षया ।
ओङ्काराय नमस्तस्मै ओङ्काराय नमो नमः ।

सूतः—

स्तवराजं स्तवश्रेष्ठं शृण्वन्ति च पठन्ति च ।
ये मानवा विपापास्ते यान्ति मुक्तिं सुदुर्लभाम् ।
तस्मात् पठन्तु सर्वेऽपि मोक्षवाञ्छाऽस्ति वो यदि ।
उपायोऽस्ति पुनर्नान्यः मुक्त्वैतं भवनाशकम् ।
स्वजायायै महादेव्यै इत्येवं शंभुरब्रवीत् ।
इत्यवोचमहं दिव्यं प्रणवस्तवराजकम् । इति ।
अथातस्संप्रवक्ष्यामि प्रणवब्रह्मणो द्विजाः ।
अनुस्मृतिम्मोक्षदात्रीं यत् स्मृत्वा नेह जायते ।
अग्रे सृष्टेः प्रपञ्चस्य य आस्ते निर्विकारतः ।
सर्वभूतमयो दिव्यः प्रणवं संस्मरेद्यतिः ।
मायातत्कार्यहीनो यः पुनस्सृजति मायिकम् ।
अद्भुतं हि विचित्रं तं प्रणवं संस्मरेद्यतिः ।
यथा रज्जुरहेर्विप्रा विश्वस्यासीत्तथाऽद्वयः ।
आधारोऽतो विभिन्नस्तं प्रणवं संस्मरेद्यतिः ।
यद्विवर्तः प्रपञ्चोऽयं येन जीवति सर्वतः ।
यज्ज्ञानान्नाशमायाति प्रणवं संस्मरेद्यतिः ।
उपादानं महद्गुह्यं यमाहुर्मुग्धमानसाः ।
निष्कलं विभुमात्मानं प्रणवं संस्मरेद्यतिः ।
गायत्रीं सम्परित्यज्य यं पठन्ति यतीश्वराः ।
साक्षान्मोक्षस्वरूपं तं प्रणवं संस्मरेद्यतिः ।
गायत्र्याद्याः सर्वमन्त्राः कलां नार्हन्ति षोडशीम् ।

भवप्रदा यज्जीवस्य प्रणवं संस्मरेद्यतिः ।
वेदवेदांगसारो यो गायत्री यस्य सारिणी ।
यज्जपोऽज्ञाननाशी तं प्रणवं संस्मरेद्यतिः ।
यस्माहते न हीदं स्याद्विना रज्जुं यथा ह्यहिः ।
यत्सत्तातो जगत्सत्ता प्रणवं संस्मरेद्यतिः ।
साक्षात्कृत्य यमात्मानं न पश्यन्ति यतीश्वराः ।
जीवभेदं विश्वभेदं प्रणवं संस्मरेद्यतिः ।
अनादिप्राप्तकर्माणि शिखासूत्रादिकान्यपि ।
यस्मै त्यजन्ति सावित्रीं प्रणवं संस्मरेद्यतिः ।
नेदं सत्यञ्च यस्सत्यो नेदं सौख्यञ्च यस्सुखम् ।
गायत्र्यादिमन्त्रहेतुं प्रणवं संस्मरेद्यतिः ।
यत्र प्रतिष्ठितो विप्रास्सर्ववेदसमन्वयः ।
तात्पर्येण न चान्यत्र प्रणवं संस्मरेद्यतिः ।
स्वस्वाभिमतरीत्या यमाहुर्वादिविचक्षणाः ।
जगदादिमनादिं तं प्रणवं संस्मरेद्यतिः ।
जीवो यो यः परं ब्रह्म यस्य जीवस्य नो भिदा ।
वेदा वदन्ति येनैक्यं प्रणवं संस्मरेद्यतिः ।
श्रुतिस्मृतिभ्यां विहितो यदैक्यज्ञानसिद्धये ।
गायत्र्यादिपरित्यागः प्रणवं संस्मरेद्यतिः ।
ब्रह्मविष्ण्वादिभेदेन यो भाति जगतां प्रभुः ।
ब्रह्मादयो यं जपन्ति प्रणवं संस्मरेद्यतिः ।
य इमामनुसन्धत्ते यतिर्नित्यमनुस्मृतिम् ।
ऐन्द्रं सारस्वतं प्राप्य पदं सुखमुपाश्नुते ।
पृथुस्तनायै पार्वत्यै इत्येवं शंभुरब्रवीत् । इति ।

प्रणवस्य सर्वमन्त्रोज्जीवकत्वं शारदातिलकेऽप्युक्तम्—

मन्त्राणां दश कथ्यन्ते संस्कारास्सिद्धिदायिनः।
निर्दोषतां प्रयान्त्याशु ते मन्त्रास्साधुसंस्कृताः।
जननं जीवनञ्चैव ताडनं बोधनं तथा।
अभिषेकोऽथ विमलीकरणाप्यायने पुनः।
तर्पणं दीपनं गुप्तिः दशैता मन्त्रसंस्क्रियाः।
मन्त्राणाम्मातृकामन्त्रादुद्धारो जननं स्मृतम्।
प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः।
मन्त्रार्णसंख्यया तद्धि जीवनं संप्रचक्षते। इति।

ननु उदाहृतश्रुतिस्मृतीतिहासपुराणागमैः यद्यपि प्रणवस्य माहात्म्यं प्रतिपादितम्। यद्यपि च प्रणवस्य नामरूपप्रपञ्चात्मकत्वं नामरूपप्रपञ्चात्मकसर्वेश्वरत्वञ्च प्रतिपादितम्। यद्यपि यतीनां प्रणवालंबनबलेनैव गायत्र्यादिश्रुतिस्मृतिकर्मत्यागः। तथापि न प्रणवजपेनैव पुरुषार्थसिद्धिः— **तमेव विदित्वाऽतिमृत्युमेति। तरति शोकमात्मवित्। निचाय्य तं मृत्युमुखात्प्रमुच्यते। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे। ब्रह्म वेद ब्रह्मैव भवति। ज्ञानाग्निस्सर्व-कर्माणि भस्मसात्कुरुतेऽर्जुन। नहि ज्ञानेन सदृशं पवित्रमिह विद्यते। परोक्षं ब्रह्मविज्ञानं शाब्दं देशिकपूर्वकम्। बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत्। अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम्। संसारकारणाज्ञानतमसश्चण्डभास्करः। सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि। संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति** इत्यादिश्रुतिस्मृतीतिहास-पुराणविरोधादिति चेत्—

न—प्रणवस्यैवात्मज्ञानोपायत्वात्।

तथाहि—आदौ तावदखण्डाकारेण स्वरूपानुसन्धानप्रकारः प्रदर्श्यते। ओङ्कारस्य हि स्वाज्ञानपरिकल्पितभूतभौतिकात्मकप्रपञ्चविशिष्टः प्रत्यगात्मा वाच्यार्थः। सर्वदृश्यविनिर्मुक्त-स्स एव सच्चिदानन्दरूपो लक्ष्यार्थः। एवञ्चाधिकारी एकान्ते स्थित्वा निगृहीतबाह्यान्तःकरण-ग्रामस्संक्षालितकामक्रोधादिमलः ओङ्कारमनुसन्धाय तस्य वाच्यार्थं प्रपञ्चविशिष्टमात्मानमप्यनु—

चिन्त्य तस्यैव ओङ्कारस्य लक्ष्यार्थं दृश्यप्रपञ्चविनिर्मुक्तं दृग्रूपं केवलप्रत्यगात्मानमप्यनुचिन्त्य तस्मिन् परमात्मनि भूतभौतिकप्रपञ्चं सर्वं दृश्यं प्रविलाप्य सच्चिदानन्दमात्रात्मनाऽवतिष्ठेत ।

तत्र प्रविलापनन्नाम-यथा भोजनात् पूर्वं स्वशरीरात्पृथक्भूतस्यान्नस्य भोजनोत्तरकालं स्वात्मत्वेन दर्शनं एवं पूर्वमविद्यादशायां स्वस्मात्पृथक्भासमानस्य प्रपञ्चस्य विद्योदयानन्तरं स्वात्ममात्रतया दर्शनम् । तदुक्तं **वार्तिककारैः—भुक्तं यथाऽन्नं कुक्षिस्थं स्वात्मत्वेनैव पश्यति । पूर्णाहन्ताकबलितं विश्वं योगीश्वरस्तथा ।** इति । इदञ्च सर्वात्मकत्वानुसन्धानं ब्रह्मविदनुसन्धानप्रकारप्रदर्शनपरया **तैत्तरीयश्रुत्या** प्रदर्शितम्—**अहमन्नमहमन्नमहन्नम् अहमन्नादोऽहमन्नादोऽहमन्नादः अहं श्लोककृदहं श्लोककृदहं श्लोककृ**दित्यादिना । **बृहदारण्यकेऽपि—तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदे अहम्मनुरभवं सूर्यश्च** इति । **स एवाधस्तात् अहमेवाधस्ता**दिति च **छान्दोग्ये ।**

**सर्वभूतात्मके तात जगन्नाथे जगन्मये ।**
**परमात्मनि गोविन्दे मित्रामित्रकथा कुतः ।**
**प्रमाता च प्रमाणञ्च प्रमेयं प्रमितिस्तथा ।**
**सर्वात्मकतया भाति प्रसादात् पारमेश्वरात् ।**
**चिदाकाशमिदं सर्वं जगदित्येव भावयन् ।**
**यस्तिष्ठत्युपशान्तेच्छः स्स ब्रह्मकवच स्सुखी ।**
**भूरम्भांस्यनलोऽनिलोऽम्बरमहर्नाथो हिमांशुः पुमान्**
**इत्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।**
**नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्माद्विभो-**
**स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ।**

इत्यादिवचनानि द्रष्टव्यानि ।

अथवा प्रलयकाले एकार्णवे पृथिवी मग्ना तिष्ठति एवं चिद्रूपामृतार्णवे सर्वस्य दृश्यप्रपञ्चस्य मग्नत्वेन चिन्तनं प्रविलापनम् । अयमनुभवप्रकारस्समाधिव्युत्थानानन्तरं **कचेन** प्रदर्शितः—

**किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।**
**आत्मना पूरितं विश्वं महाकल्पाम्बुना यथा ।** इति ।

अथवा प्रविलापनन्नाम तप्ताय:पिण्डप्रक्षिप्तस्य जलस्य तत्रैव तिरोभाववत् सर्वस्यापि दृश्यप्रपञ्चस्य आत्मनि तिरोभावः । अयमर्थः **श्रुत्या** प्रदर्शितः—**अथात आदेशो नेति नेति अतोऽन्यदार्तम् नेह नानास्ति किञ्चन ईशावास्यमिदं सर्वं** इत्यादिना ।

अयमर्थो **भाष्यकारै**र्दर्शितः—

**न भूमिर्न तोयं न तेजो न वायुः ।**
**न खं नेन्द्रियं वा न तेषां समूहः ।**
**अनैकान्तिकत्वात् सुषुप्तैकसिद्धः ।**
**स एकोऽ[तदेकोऽ]वशिष्टः शिवः केवलोऽहम् ।** इति ।

**भगवता**ऽप्युक्तम्—

**नासतो विद्यते भावो नाभावो विद्यते सतः ।** इति ।

**वासिष्ठेऽपि**—

**दिक्कालाद्यनवच्छिन्नमदृष्टोभयकोटिकम् ।**
**चिन्मात्रमक्षयं शान्तमेकं ब्रह्मास्ति नेतरत् ।**
**नित्योदितं विमलमेकमनन्तमाद्यं**
**ब्रह्मास्ति नेतरकलाकलनं हि किञ्चित् ।**
**इत्येव भावय निरञ्जनतामुपेतो**
**निर्वाणमेहि सकलामलशान्तवृत्तिः ।** इति ।

**ओङ्कारस्य** ब्रह्मात्मत्वप्रतिपादनपुरस्सरं सगुणनिर्गुणप्रतिपादनपरत्वं ब्रह्मज्ञानोपायत्वञ्च **कठवल्लीश्रुत्या** प्रतिपादितम्—

**सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि ओमित्येतत्। एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।**

एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् । एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते । इति ।

ओमित्येवं ध्यायथ आत्मानमिति—मुण्डके ।

ओमित्यात्मानं युञ्जीत इति—तैत्तरीयके ।

भगवद्गीतायामपि—

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् । इति ।

ब्रह्मण अभिधानभूतं ओङ्कारं व्याहरन् उच्चारयम् तदर्थभूतं मामीश्वरमनुस्मरन् अनुचिन्तयन्नित्यर्थः ।

अन्यत्रापि—

ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः । इति ।

अस्यार्थः— ओंतत्सदिति निर्देशः—निर्दिश्यते अनेनेति निर्देशः त्रिविधो नामनिर्देशः ब्रह्मणः स्मृतः —चिन्तितः वेदान्तेषु ब्रह्मविद्भिरिति । उक्तश्चाचार्यैः—

प्राणानायम्योमिति चित्तं हृदि रुद्ध्वा नान्यत्स्मृत्वा तत्पुनरत्रैव विलाप्य ।
क्षीणे चित्ते भाद्दशिरस्मीति विदुर्यं तं संसारध्वान्तविनाशं हरिमीडे । इति ।

अस्यार्थ :—प्राणान् वागादीनि इन्द्रियाणि आयम्य संहृत्य ओमिति--ओमित्युच्यमाने ओंकारवाच्ये हृदि-हृदयाकाशे ब्रह्मणि चित्तं रुद्ध्वा अन्यत्--रूपरसादीन् न स्मृत्वा प्राप्तामपि विषयस्मृतिं विषयदोषदर्शनेन हित्वा---

संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ।
शनैः शनैरुपरमेत् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ।
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ।

इतीश्वरस्मृतेः । पुनः - पश्चात् तत् - ब्रह्मास्मीत्यभ्यासव्यग्रश्चित्तं अत्रैव - ब्रह्मात्मन्येव विलाप्य - लयं प्रापय्य चित्ते क्षीणे - लीने सति ध्यानव्यापाराद्युपरते सति मादृशीरस्मीति - स्वयंप्रकाशचिद्रूपः परमात्माऽस्मीति यं विष्णुं विदुः तमित्यन्वयः ।

इतः परं प्रणवावयवैस्स्वरूपानुसन्धानप्रकारो निरूप्यते । **माण्डूक्योपनिषदि—**

अहमनुभवे प्रकाशमानस्य आत्मनः दृश्यप्रपञ्चनिरासद्वारा केवलानन्दस्वरूपप्रतिपत्त्यर्थं विश्वतैजसप्राज्ञतुरीयावस्थाभेदरूपं **सोयमात्माचतुष्पाद्**इत्युपक्षिप्य पूर्वपूर्वपादप्रविलापनेन निष्प्रपञ्चब्रह्मात्मकतुरीयपादप्रतिपत्तिसौकर्याय स्थूलसूक्ष्मसूक्ष्मतरोपाधिसाम्यात् विराडादीन् विश्वादिष्वन्तर्भाव्य **जागरितस्थानो बहिःप्रज्ञः** इत्यादिना **नान्तःप्रज्ञ**मित्यतः प्राक्तनेन ग्रन्थेन प्रणवावयवरूपाकारोकारमकारात्मकं विश्वतैजसप्राज्ञरूपं पादत्रयं निरूपितम् ।

ननु जागरितस्थान इत्यादिना विश्वादीनां अकाराद्यात्मकत्वं न निरूपितम् । न । उत्तरत्र पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति निरूपणात् । एवञ्च अकारोकारमकारात्मकं ओंकारमनुसन्दधानः अकारात्मकं विश्वं अकारोच्चारणानन्तरं उकारोच्चारणसमये उकारात्मकतैजसरूपेण प्रविलाप्य उकारोच्चारणानन्तरं मकारोच्चारणसमये उकारात्मकतैजसं मकारात्मकप्राज्ञरूपेण प्रविलाप्य मकारात्मकमपि प्राज्ञं सर्वदा अहमिति प्रकाशमाने साक्षिणि प्रविलाप्य केवलानन्दरूपेण अवतिष्ठेत ।

ननु पादत्रयस्य अकारोकारमकारेति ओङ्कारावयवघटितत्वात् तुरीयपादस्य किमित्योंकारावयवघटनाभाव इति चेत्-न-तुरीयस्यैव प्राप्यत्वेन तत्प्रतिपत्त्युपायत्वेन ओंकारप्रवृत्तेः । अत एव **भाष्यम्—**

**तत्र तावदोंकारनिर्णयाय प्रथमं प्रकरणमागमप्रधानमात्मतत्त्वप्रतिपत्त्युपायभूतम्, यस्य द्वैतस्य प्रपञ्चस्य उपशमे अद्वैतप्रतिपत्तिः रज्वामिव सर्पादिविकल्पोपशमे रज्जुतत्त्वप्रतिपत्तिः तस्य द्वैतस्य हेतुतो वैतथ्यप्रतिपादनाय द्वितीयं प्रकरणम्,** इत्यादि । **कथं पुनरोंकारनिर्णयः आत्मतत्त्वप्रतिपत्त्युपायत्वं प्रतिपद्यते** इत्यादि-त्रयाणां **विश्वादीनां पूर्वपूर्वप्रविलापनेन तुरीयस्य प्रतिपत्तिरिति करणसाधनः पादशब्दः, तुरीयस्य 'पद्यते' इति कर्मसाधनः पादशब्दः** इति च ।

अथवा अकारः स्थूलोपाधिविशिष्टत्वंपदार्थवाचकः । उकारस्सूक्ष्मोपाधिविशिष्टत्वंपदार्थवाचकः । उभावपि साक्षिणं लक्षयतः । मकारः कारणोपाधिविशिष्टवाचकस्सन् परमात्मानं लक्षयति । त्रयाणां सामानाधिकरण्यात् जीवब्रह्मैक्यप्रतिपत्तिः ।

अथवा ओ इति परमात्मवाचकः। मिति प्रत्यगात्मवाचकः। सामानाधिकरण्येन च तयोरैक्यप्रतिपत्तिरिति। अयमर्थः **तापनीये-सर्वं ह्येतत् ब्रह्म अयमात्मा ब्रह्म तमेतमात्मानं ओमिति ब्रह्मणैकीकृत्य ब्रह्मचात्मनोमित्येकीकृत्ये**ति श्रुत्या दर्शितः। तस्य चेदं **भाष्यम्**— एवमात्मप्रतिपत्त्यर्थमोङ्कारस्योपव्याख्यानमेकेन प्रकारेण कृत्वा व्याख्यातं वाक्चतुष्टयं प्रणवरूपं सार्थं क्रमेण तत्साक्षिणि ब्रह्मणि प्रणवे प्रविलापितं तावन्मात्रं भवतीत्याह-**सर्वं ह्येतदिति**। हि शब्देन तत्राध्यस्तत्वलक्षणो हेतुस्सूचितः। एवं त्वंपदार्थं तत्पदार्थपर्यन्तं उपव्याख्यानेन संशोध्य शुद्धस्य प्रत्यगात्मनः ब्रह्मणैकत्वमाह-**अयमात्मा ब्रह्मेति**। उक्तञ्च ब्रह्मात्मैक्यं प्रणवेन व्यतिहारेण प्रतिपत्तव्यमित्याह - **तमेतमात्मानमोमिति ब्रह्मणैकीकृत्य ब्रह्मचात्मनोमित्येकीकृत्य इति**। तमेतं ब्रह्मस्वरूपं प्रत्यगात्मानमिति तदेतच्छब्दयोरर्थः। तत्र प्रथमाप्रतिपत्तिः अहं स इति वाक्यरूपेण प्रणवेन कार्या। तत्राहंशब्दः स्थूलसूक्ष्मप्रधानत्वंपदार्थवाचकस्सन् अवस्थात्रयसाक्षिणं प्रत्यगात्मानं लक्षयति। अकारोकारावपि तद्वाचकत्वेन तमेव लक्षयत इति तदात्मकौ। स इति कारणोपाधिप्रधानतत्पदार्थवाचकस्सन् तत्साक्षिणं परमात्मानं लक्षयति। मकारोऽपि तद्वाचकत्वेन तमेव लक्षयति। सामानाधिकरण्येन प्रत्यगात्मनो ब्रह्मणैक्यं प्रतिपत्तव्यम्। द्वितीया तु प्रतिपत्तिः सोऽहं-वाक्यरूपेण प्रणवेन कर्तव्या। सोहमित्यस्मात् वाक्यात् सकारहकारयोरुद्धारे कृते पूर्वरूपे च ओमिति प्रणवस्संपद्यते। तस्मादो इति परमात्मवाचकः, स इति हि तस्यार्थः। तच्छब्दश्च कारणोपाधिप्रधानब्रह्मवाचकः। मिति प्रत्यगात्मवाचकः। अहंशब्दात्मकोऽसौ। सामानाधिकरण्येन च ब्रह्मणः प्रत्यगात्मनैक्यं प्रतिपत्तव्यमिति।

ननु **ओङ्कारस्य महावाक्यविधया आत्मप्रतिपत्त्यर्थत्वे** कथमुपासनार्थत्वम्? अस्या उपनिषदः उपासनार्थत्वञ्च भाष्यकारैः वर्णितम्। इह पूर्वस्मिन् ग्रन्थे नृसिंहाकारब्रह्मविषया विद्या निरुपाधिकपरब्रह्मविद्याफला अधिगता। तथाह्युक्तं **वार्तिककृद्भिः—नृसिंहब्रह्मविद्यैषा व्याख्याता ज्ञानसिद्धये** इति। प्रणवस्य तु अनुष्टुबगत्वेनैव तत्र प्रवेशः। तथा चोक्तम्— **सर्वे वेदाः प्रणवादिकाः तं प्रणवं तत्साङ्गोऽङ्गं वेद स त्रीन् लोकान् जयति** इति। इह तु पूर्वोक्तोपासनादिभिरीषच्छुद्धान्तःकरणस्य परब्रह्मविद्याप्रवेशमात्रयोग्यस्य नृसिंहाकारमेव ब्रह्म प्रणवप्रधानमादाय तद्द्वारेण तुरीयपर्यवसायिनीमुपासनां कर्तव्यत्वेन विधाय तदनुष्ठानेन अतीवशुद्धान्तःकरणस्य साक्षात् तुरीयविद्यैव स्वरूपावस्थानफला उच्यते। तदप्युक्तम्— **तुरीयावसिता विद्या साक्षादत्र प्रदर्श्यते** इति। तुरीयावसिता उपासना साक्षात्तुरीयविद्या

चात्र प्रदर्श्यते इत्यर्थः। अत्र अनुष्टुप्प्रवेशस्तु प्रणवाङ्गत्वेनैव। **अनुष्टुभा अन्विष्य प्रणवेनैव तस्मिन्नवस्थिताः-ओङ्कारे परे ब्रह्मणि पर्यवसितोभवेदि**त्यनुष्टुबंगत्वस्य प्रणवप्रधानत्वस्य च श्रवणात्, अनुष्टुवर्थस्य प्रणवे एव प्रक्षेपदर्शनाच्चोत्तरत्रेति। नवमखण्डादौ च अथेदानीमुक्तया तुरीयतुरीयपर्यन्तया उपासनया अतीवशुद्धान्तःकरणस्य साक्षात् तुरीयतुरीयस्वरूपोपदेशप्रकारं शिष्यस्योपदिष्टार्थप्रतिपत्तिप्रकारं तया च प्रतिपत्त्या निरस्तनिखिलाविद्यस्य स्वरूपावस्थानं च दर्शयितुं खण्डान्तरमारभते इत्यप्युक्तम्। तथा च खण्डाष्टकमध्ये कथं ब्रह्मप्रतिपत्त्यर्थत्वमिति चेत्—

न—मुख्याधिकारिणः प्रतिपत्त्यर्थत्वं मन्दस्य पुनरुपासनार्थत्वमिति तैरेव तत्रैवोक्तत्वात्। तथा हि—तेषा मुत्तरवाक्यम्—एवं व्यतिहारेण एकत्वं प्रतिपद्य अनुज्ञाप्रणवेन परिपूर्णत्वावद्योतकेन परिपूर्णवाक्यार्थमात्रे पदपदार्थद्वयैकत्वप्रतिपत्तिविकल्परहिते स्थितिः कार्या मन्दस्य सम्यग्ज्ञानोदयायेति।

किञ्च, **तापनीयोपनिषदि** पञ्चमखण्डे त्रिमात्रप्रणवेनैव प्रत्यग्ब्रह्मणोरैक्यं प्रतिपादितम् **अथैषो एवाकार आप्ततमार्थः** इत्यादिना। अत्र अथशब्दो भाष्यकारैरेवं व्याख्यातः—अनुष्टुप्पाद चतुष्टयेन चतुर्मात्रेण प्रणवेन उपासनमभिधाय अनन्तरं केवलत्रिमात्रेण प्रणवेन आत्मप्रतिपत्तिरभिधीयते इत्यथशब्दार्थ इति। **अथैषो एवाकार आप्ततमार्थ आत्मन्येव नृसिंहे ब्रह्मणि वर्तते अथैषो एवोकार उत्कृष्टतमार्थ आत्मन्येव नृसिंहे देवे ब्रह्मणि वर्तते अथैषो एव मकारो महाविभूत्यर्थ आत्मन्येव नृसिंहे देवे परे ब्रह्मणि वर्तते** इति पर्यायत्रयेण उग्रं वीरं महाविष्णुमिति नृसिंहानुष्टुब्रूपमन्त्रराजार्थं अकारोकारमकारेष्वन्तर्भाव्य तत्त्वंपदार्थशोधनञ्च कृत्वा **तस्मादकारोकाराभ्यामिममात्मानमाप्ततममुत्कृष्टतमञ्चिन्मात्रं सर्वद्रष्टारं सर्वसाक्षिणं सर्वग्रासं सर्वप्रेमास्पदं सच्चिदानन्दमात्रमेकरसं पुरतोऽस्मात् सर्वस्मात् सुविभातमन्विष्य आप्ततममुत्कृष्टतमं महाविभूतिं महामायं सच्चिदानन्दमात्रमेकरसं परमेव ब्रह्म मकारेण जानीयात् आत्मैव नृसिंहो देवः परमेव ब्रह्म भवती**त्येतदन्तेन ग्रन्थेन महावाक्यार्थो वर्णितः।

अत्रै**तद्भाष्यम्**—एवं पदार्थद्वयमितरेतरपर्यवसितं परिशोध्य उक्तमेवार्थमनुवदन् सामानाधिकरण्यसिद्धमेकत्वलक्षणं वाक्यार्थमाह-तस्मादित्यादिना। यस्मादेवं प्रत्यग्ब्रह्मणोरेकत्वमविरुद्धं तस्मादकारोकाराभ्यामिमं प्रत्यगात्मानमन्विष्य—प्रतिपद्य मकारेण ब्रह्म जानीयादित्युत्तरत्रान्वयः। इममित्युक्तमात्मानं विशिनष्टि तस्य ब्रह्मत्वयोग्यताप्रदर्शनार्थं—आप्ततममुत्कृष्टतममिति। आप्ततमत्वोत्कृष्टतमत्वयोः सर्वाधिष्ठानचिन्मात्रत्वं हेतुमाह—चिन्मात्रमिति। द्रष्टृदृश्यान्वयव्यतिरेकेण

चिद्रूपत्वं साधयति—सर्वद्रष्टारमिति। द्रष्टृत्वं नाम दर्शनकर्तृत्वं, अतः कथं चिन्मात्रत्वमित्याशङ्क्य साक्षिसाक्ष्य,न्वयव्यतिरेकेण सर्वविक्रियानिरासेन चिन्मात्ररूपत्वमाह—सर्वसाक्षिणमिति। साक्षात्क्रियाव्यवधानमन्तरेण स्वात्मन्येव सर्वं समीक्षत इति साक्षी, ततश्चिन्मात्ररूपत्वं सिद्धम्। अथ साक्षिणस्साक्ष्यसद्भावेन प्राप्तं सद्वितीयत्वं परिहरन् सद्रूपत्वमानन्त्यञ्चागमापायितदवध्यन्वयव्यतिरेकेणाह—सर्वग्रासमिति। आगमापायवतां कल्पितानां जाग्रदादीनां साक्ष्यरूपाणां सर्वकल्पनाधिष्ठानादिरूपसच्चिन्मात्रव्यतिरेकेणासत्त्वात् सर्वसंहर्तारमित्यर्थः। अथास्य पुरुषार्थरूपत्वाय दुःखिप्रेमास्पदान्वयव्यतिरेकमाश्रित्य परमानन्दरूपत्वमाह—सर्वप्रेमास्पदमिति। परमप्रेमास्पदत्वात् परमानन्दरूपमित्यर्थः। अथान्वयव्यतिरेकचतुष्टयसिद्धं फलं स्वयमेवाह—सच्चिदानन्दमात्रमेकरसमिति। मात्रपदं प्रत्येकं अभिसंबन्धनीयं सदादिषु स्वगतभेदनिरासाय। सदादीनां परस्परभेदाभावादैकरस्यं उक्तम्। ऐकरस्यं युक्तितस्साधयति सदादीनां—पुरतोऽस्मादिति। अर्थस्त्वस्य मात्राखण्डोक्तप्रकारेण द्रष्टव्यः। एवं ब्रह्मलक्षणलक्षितमात्मानमन्विष्य प्रतिपद्य किं कार्यमिति-आह-आप्ततममित्यादिना। आप्ततममित्यादिकं ब्रह्मणो विशेषणम्, प्रत्यगात्मनो(ऽपि) ब्रह्मरूपत्वेन आप्ततमत्वादिकमुक्तम्। अतः प्रत्यगात्मन्युक्तमेवाप्ततमत्वादिकं ब्रह्मणो विशेषणत्वेनोच्यते तयोरत्यन्तैक्यप्रदर्शनाय। पूर्वमेवाकारोकाराभ्यामुक्तलक्षणमात्मानमन्विष्य मकारेण चोक्तरूपं ब्रह्मान्विष्य सामानाधिकरण्येन तयोरेकत्वमोमिति जानीयादित्यर्थः। एवं ब्रह्मात्मैक्यविदः फलमाह—आत्मैवेत्यादिना।

एवं व्यतिहारखण्डेऽपि पूर्वभागे अकारोकारमकारात्मकप्रणवेनैव जीवब्रह्मैक्यप्रतिपत्तिर्व्यतिहारेणाभिहिता। तत्र प्रणवेन व्यतिहारेण ब्रह्मैक्यानुसन्धानसमये उकारं किञ्चिद्दीर्घतया उच्चार्य भागद्वयं संपाद्य भागद्वयस्यापि ब्रह्मार्थत्वमनुचिन्त्य अकारमकारयोरपि प्रत्यगर्थत्वमनुचिन्त्य ओमित्युच्चारणसमये उकारपूर्वार्धेन अकारेण च एका जीवब्रह्मैक्यप्रतिपत्तिः। उकारोत्तरार्धेन मकारेण च अपरा ब्रह्मात्मैक्यप्रतिपत्तिः। अयं प्रकारः तत्रैव **अजरत्वादमरत्वादित्यादि अद्वैतत्वाच्च अकारेणेममात्मानमन्विष्य उदुत्कृष्टत्वादुदुत्तीर्णविकृतित्वाच्च उकारेण परमं सिंहमन्विष्य अकारमिममात्मानमुकारपूर्वार्धमाकृष्य सिंहीकृत्य उत्तरार्धेन तं सिंहमाकृष्य महत्त्वादित्यादि महाप्रभुत्वाच्च मकारार्थेनानेन चात्मनैकीकुर्या**दिति श्रुत्या वर्णितः।

एवमेकेन प्रणवेन व्यतिहारमभिधाय प्रणवद्वयेन व्यतिहारविवक्षया व्यतिहारखण्ड एव **कस्त्वमिति अहमिति होवाच एवमेवेदं सर्वं तस्मादहमिति सर्वाभिधानं तस्या-**

**दिरयमकारः स एव भवती**ति प्रकृत्य **तस्मात् सर्वात्मकेन अकारेण सर्वात्मकमात्मानमन्विच्छे**दिति प्रत्यगात्मानमकारवाच्यमभिधाय **ब्रह्मैवेदं सर्वं सच्चिदानन्दरूप**मिति प्रकृत्य **तस्य ब्रह्मणो नाम ब्रह्मेति तस्यान्त्योऽयं मकारस्स एव भवति तस्मात् मकारेण परमं ब्रह्मान्विच्छे**दिति ब्रह्म मकारवाच्यमभिधाय **किमिदमेवमिति उ इत्येवाहाविचिकित्सन्नि**त्यवधारणमुकारवाच्यभिधाय **तस्मादकारेणेममात्मानमन्विष्य मकारेण ब्रह्मणा सन्दध्यात् उकारेणाविचिकित्सन्नि**त्यन्तेन **अहमेवब्रह्मे**त्यनुसन्दध्यादिति प्रणवेन वाक्यार्थानुसंधानमभिधाय **ब्रह्म वा इदं सर्वमत्तृत्वा**दिति प्रकृत्य **सततं ह्येतत् ब्रह्मेति** चोक्त्वा **तस्मादकारेण परमं ब्रह्मान्विष्य मकारेण मनआद्यवितारं मनआदिसाक्षिणमन्विच्छे**दित्यकारमकारार्थावभिधाय **तस्मादेनमकारार्थेन परेण ब्रह्मणैकीकुर्यादुकारेणाविचिकित्सन्नि**त्यन्तेन ग्रन्थेन ब्रह्मैवाहमित्यनुसन्दध्यादिति व्यतिहारेण वाक्यार्थानुसन्धानमभिहितम्। अयमर्थो **वार्तिककारैः** स्फुटीकृतः। तथा च **वार्तिककाराः**—

**अजाद्यात्मकमात्मानमकारार्थं परेश्वरम्।**
**उवर्णपूर्वभागार्थमुत्कृष्टाद्यात्मकं विदुः।**
**उवर्णोत्तरभागार्थं तं विदुर्व्यतिहारतः।**
**मार्थमुक्तमहानन्दाद्यात्मप्रत्यक्तयोमिति।**
**इत्यजोत्कृष्टमुक्तादिशब्दैकांशाक्षरात्मना।**
**एकेन प्रणवेनैक्यं जानीयाद्व्यतिहारतः।**
**अथवाऽकारमात्मानं मकारश्च जगद्गुरुम्।**
**अवधारणसंयुक्तमेकीकुर्याद्थोमिति।**
**अहंशब्दैकदेशत्वाद्ब्रह्मशब्दैकदेशतः।**
**अतत्याद्येकदेशत्वाद्ब्रह्माकारेण च स्मरेत्।**
**साक्षित्वान्मनआदीनां मकारेण तु साक्षिणम्।**
**सावधारणमैकात्म्यमेवमोमिति पश्यति।** इति।

एवं **ओमित्यात्मानं युञ्जीते**ति तैत्तरीयवाक्यमपि अकारोकारमकाराणां पूर्वोक्तप्रकारेण प्रत्यगात्मनि लयद्वारेण ब्रह्मत्वानुसन्धानपरमिति **माण्डूक्यभाष्यव्याख्याने आनन्दगिर्याचार्यै**-

विवृतम् । माण्डूक्ये **ओमित्येतदक्षरमिदं सर्व**मित्यादिना ओंकारनिरूपणं क्रियते । तस्य किं प्रयोजनमित्याशंक्य ओंकारनिरूपणमात्मधीहेतुरिति परिहृत्य तत्र प्रमाणत्वेन ओमित्यात्मानं युञ्जीतेति तैत्तरीयशाखागतं वाक्यमुदाहृतं **भाष्यकृता** । तद्विवृतमा**नन्दगिर्याचार्यैः**-समाधिनिष्ठो यदा ओमित्युच्चार्य आत्मानमनुसन्धत्ते तदा स्थूलमकारमुकारे सूक्ष्मे तं च कारणे मकारे तमपि कार्यकरणातीतप्रत्यगात्मन्युपसंहृत्य तन्निष्ठो भवतीत्यनेन प्रकारेण ओंकारस्य तत्प्रतिपत्त्युपायतेति ।

एवं **बृहदारण्यकेऽपि ओं खं ब्रह्मे**त्यत्र ओंकारस्य मात्रात्रयात्मकत्वं व्याख्यातृवचनैः अगतम् । तत्र वार्तिककारैर्ब्रह्मसामानाधिकरण्यमोंकारस्य ब्रह्मप्रतीकत्वाद्वा तदभिधायकत्वाद्वा इत्युक्त्वा प्रतीकपक्षमभिधाय अभिधायकत्वप्रकार उक्तः—**यद्वाऽभिधानमों विद्यात् तस्यैव परमात्मनः । तस्मिन् प्रविष्टचित्तस्य तद्ब्रह्माशु प्रसीदति ।** इति । तद्व्याख्यातमानन्दगिर्याचार्यैः— प्रतीकपक्षं प्रतिपाद्य वाचकत्वपक्षं प्रतिपादयितुमारभते—यद्वेति । अत्र विशेषमाह—तस्मिन्निति । अस्यार्थः—सोऽहमितिमहावाक्यमोङ्कारः, सकारहकारयोर्लोपे तदुत्पत्तेः, तस्य च अकारादयस्त्रयोऽवयवाः अंशाः । तत्र विराट्जागरितविश्वाख्यत्रयमकारः । सूत्रात्मा स्वप्नः तैजसश्चेति त्रयमुकारः । अव्याकृतं सुषुप्तं प्राज्ञश्चेति त्रयं मकारः । तेषां पूर्वपूर्वस्य उत्तरोत्तरस्मिन्नुपसंहारे मकारस्य प्रतीच्यवसानम् । स च नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म इति ओङ्कारवाच्यत्वेन ध्यातं फलतीति ।

एवं **पञ्चीकरणवार्तिक**पर्यालोचनयाऽपि मात्रात्रयात्मकप्रणवस्य चिदात्मप्रतिपत्तिसाधनत्वमवगम्यते ।

**ओंकारः सर्ववेदानां सारस्तत्त्वप्रकाशकः** इत्युपक्रम्य—

**अकारं पुरुषं विश्वमुकारे प्रविलापयेत् ।**
**उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत् ।**
**मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत् ।** इति ।

ओंकारस्य मात्रात्रयात्मकत्वे प्रमाणानि ।

**बह्वृचब्राह्मणे—**

**प्रजापतिरकामयत प्रजायेय भूयान् स्यामिति, स तपोऽतप्यत, स तपस्तप्त्वा, इमान् लोकानसृजत, पृथिवीमन्तरिक्षं दिवं, तान् लोकानभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त, तान् वेदानभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त, भूर्भुवस्सुव-**

रिति, तानि शुक्राण्यभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त अकार उकारो मकार इतितानेकधा समभरत्, तदेतदोमिति—

प्रजापतिर्लोकानभ्यतपत्, तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्, तामभ्यतपत्, तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त, भूर्भुवस्सुवरिति, तान्यभ्यतपत् तेभ्योऽभितप्तेभ्य ओंकारस्संप्रास्रवत् इति छान्दोग्ये।

तिस्रो मात्राः यः पुनरेतं त्रिमात्रेण इति च—प्रश्नोपनिषदि।

अकार उकारो मकार इति—माण्डूक्ये।

ओमिति तिस्रो मात्राः एताभिस्सर्वमिदमोतञ्च प्रोतञ्च इति—मैत्रायणीयश्रुतौ।

कालाग्निरुद्रोपनिषदि—त्रिपुण्ड्रधारणविधिं प्रस्तुत्य याऽस्य प्रथमा रेखा सा गार्हपत्याग्निरकारः याऽस्य द्वितीया रेखा सा दक्षिणाग्निरुकारः याऽस्य तृतीया रेखा साऽऽहवनीयो मकार इति। स्मृतावपि—

अकारश्च उकारश्च मकारश्चेति सुव्रताः।
तानेकधा समभरद्ज ओमित्ययं प्रभुः। इति।

आद्यं त्र्यक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता।
सुगुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद सवेदवित्। इति च।

एवं मात्राचतुष्टयात्मक ओंकारः अथर्वशिखायां दृश्यते—तत्र ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यं इत्यादिना ओंकारस्य उपासनार्थत्वं निरूपितम्। न तु ब्रह्मप्रतिपत्त्यर्थत्वम्।

ब्रह्मप्रतिपत्त्यर्थत्वञ्च शौनकस्मृतौ निरूपितम्—

अकारः पीडयमानस्सन् उकारं प्रतिपद्यते।
उकारः पीडयमानस्सन् मकारं प्रतिपद्यते।
मकारः पीडयमानस्सन्नर्धमात्रां प्रतिपद्यते।
अर्धमात्राऽपि विलयं यात्यमात्रे निराश्रयः। इति।

अत्र हि स्मृतावेतावान् विशेषः—मायोपाधिकं चैतन्यं उपाधिप्राधान्येन बहिर्मुखं कारणशरीरं चैतन्यप्राधान्येन अन्तर्मुखं साक्षिरूपं सामान्यशरीरमित्येवं द्विधा कृत्वा ओंकारञ्चाकारोकारमकारार्धमात्राभेदेन चतुर्धा विभज्य मकारवाच्यकारणशरीरं मायोपाधिके साक्षिण्यन्तर्मुखे अर्धमात्रार्थे प्रविलाप्य तमपि अमात्रे निराश्रये केवलचैतन्यरूपे प्रविलापयेदिति । अर्धमात्रा नाम मकारोपरिभागो बिन्दुनादशक्तिशान्तरूपः क्वचित्क्वचित् पृथक्कृत्य निर्दिश्यते । तत्र बिन्दुर्नाम अनुस्वारात्मकः पञ्चदशः स्वरः नादः तद्व्यञ्जकध्वनिः शक्तिर्ध्वनेरुपरमोन्मुखावस्था शान्तः ध्वनेरुपरतावस्थेति भेदः ।

बिन्दुनादशक्तिशान्तसद्भावे प्रमाणं **प्रपञ्चसारे**—

**आद्यः स्वरः समेतोऽमरेण सधसप्तमोऽथ बिन्दुयुतः ।**
**प्रोक्तःस्यात् प्रणवमनुस्त्रिमात्रकः सर्वमन्त्रसमवायात् ।**

अत्र आद्यः स्वरोऽकारः, अमरः उकारः, मातृकायां धकारात् सप्तमो मकारः तेन सहितः । सधसप्तमः, बिन्दुना अनुस्वारेण पञ्चदशस्वरेण युतः प्रणवमन्त्रः प्रोक्त इत्यर्थः । तथा—**अकारोकारयोरूर्ध्वं मकारो बिन्दुरेव च ।**

**निर्वाणपरमातीत तदतीत नमोऽस्तु ते** इति ।

तथा अन्यत्र नादोऽप्याश्रितः **प्रपञ्चसारे** एव **कलासर्गप्रस्तावे**—

**अकारप्रभवा ब्रह्मजातास्स्युः सृष्टये कलाः ।**
**उकारप्रभवा विष्णुजाताः स्युः स्थितये कलाः ।**
**मकारप्रभवा रुद्रजातास्संहृतये कलाः ।**
**बिन्दोरपि चतस्रस्स्युः पीतश्वेतारुणास्सिताः ।**
**नादजाः षोडश प्रोक्ता भुक्तिमुक्तिप्रदायकाः ।** इति ।

**सौरसंहितायाम्**—

**आकाराद्यास्त्रयो वर्णा अकारात् प्रणवस्य तु ।**
**ऊकाराद्या उकारात्तु स्वराश्शिष्टा मकारतः ।**
**व्यञ्जनानि समस्तानि प्रकाशन्ते यथा पुरा ।**
**सर्वं बिन्दोर्विभात्येवं बिन्दुर्नादात् प्रकाशते ।**
**नादस्साक्षात् परं ज्योतिः स्वभावात् परमात्मनः ।** इति ।

एवं शक्तिशान्तावपि क्वचिदुक्तौ । यथा—

**अकारश्चाप्युकारश्च मकारो बिन्दुरेव च ।**
**नादश्शक्तिश्च शान्तश्च तारभेदास्समीरिताः ।** इति ।

अकारोकारमकाररूपादोंकारादुपरितनावयवबिन्द्वादिरूपार्धमात्राया अर्थः परमात्मेति **वासिष्ठे** निरूपितम्—

**इति सञ्चिन्तयन्नेव बलिः परमकोविदः ।**
**ओंकारादर्धमात्रार्थं भावयन् ध्यानमास्थितः ।** इति ।

प्रणवान्निष्कृष्य अर्धमात्रार्थमेव परब्रह्मरूपं भावयन् ध्यानमास्थित इत्यर्थः ।

एवं **शिवधर्मोत्तरेपि**—

**ब्रह्मा हरिश्च रुद्रश्च मात्रास्तिस्रः प्रकीर्तिताः ।**
**त्रिभिरेतैर्जगद्व्याप्तं कारणैरात्मसंभवैः ।**
**तिस्रो मात्राश्शिवस्योक्तास्सर्वलोकप्रपूजिताः ।**
**एता एव त्रयो वेदाः त्रयो लोकास्त्रयोऽग्नयः ।**
**त्रयो गुणास्त्रिवर्गाश्च यच्चान्यज्जगति स्थितम् ।**
**अर्धमात्रा परो रुद्र श्शिवः परमकारणम् ।**
**तस्मादेतत्समुत्पन्नं जगतः कारणत्रयम् ।** इति ।

बिन्द्वादिरूपार्धमात्राया वाच्यवाचकाभेदविवक्षया परुरुद्रात्मकत्वम्—

एवं **तापनीयेऽपि--तमेतमात्मानमोमिति ब्रह्मणैकीकृत्य ब्रह्मचात्मनोमित्येकीकृत्ये-**त्यनेन ब्रह्मात्मैक्यं प्रणवेन मात्रात्रयात्मकेन व्यतीहारेणोक्त्वा मन्दस्य सम्यज्ज्ञानोदयाय अनुज्ञाप्रणवेन परिपूर्णत्वावद्योतकेन परिपूर्णवाक्यार्थमात्रे पदपदार्थद्वयतदेकत्वप्रतिपत्तिविकल्परहिते स्थितिः कार्येत्याह—**तदेकमजरममृतमभयमोमित्यनुभूयेति** । तदेकं वस्तु एकत्वेन जराहेत्वभावात् अजरं ततः अमृतं ततोऽभयमिति । ओमिति शास्त्राचार्ययुक्तिसिद्धैक्यस्य स्वानुभवसिद्धतया सत्यमेवं परमात्मतत्त्वमिति स्वस्य परिपूर्णत्वावद्योतकेन अनुज्ञाप्रणवेन अनुभूयेत्यर्थः ।

यदि एवं स्वात्मन्यवस्थितस्य कदाचित् केन चिन्निमित्तेन जगत्प्रतिभासः स्यात् तदा तत्सर्वं स्वशरीरत्वेन स्थूलसूक्ष्मकारणरूपेण स्वात्मनि कल्पयित्वा ओमित्यात्मानं प्रतिपद्य सर्वं स्वात्ममात्रतया संहरेदित्याह—**तस्मिन्निदं सर्वं त्रिशरीरमारोप्य तन्मयं हि तदेवेति संहरेदोमिति**। ओमिति तुरीय प्रतिपत्त्या तत्राध्यस्तं सर्वं तावन्मात्रतया विलापयेन्मन्द इति भावः। ननु अस्य सर्वस्य कथं त्रिशरीरत्वं कथं वा तुरीये आरोपितत्वेन तावन्मात्रत्वं कथं वा अस्य ओंकारोच्चारणमात्रेण तुरीय प्रतिपत्त्या लयः इत्याकाङ्क्षायां तत्प्रतिपादनाय **तं वा** एतमित्यारभ्य **एषवीरोनृसिंह एवे**त्यन्तो ग्रन्थः प्रवृत्तः।

अत्र संग्रह :—

**ओमित्युच्चारयन् ध्याता स्वात्मानं ब्रह्मणा सह।**
**एकीकृत्य पुनर्ब्रह्माप्येकीकुर्यात्तथाऽऽत्मना।**
**विचिन्त्यान्योन्यतादात्म्यं तथैवानुभवेदिदम्।**
**बुद्धिं तदाकृतिं कृत्वा यावन्नैश्चल्यमाप्नुयात्।**
**तावद्भवेदनुभवो जरामरणवर्जिते।** इति।

बुद्धेः बहिःप्रावण्ये सति तन्निवृत्तये अध्यारोपापवादौ कार्यावित्याह—

**चलितानुभवा बुद्धिर्बहिश्चेत् गन्तुमुद्यता।**
**तदा बाह्यनिवृत्त्यर्थं कुर्यादारोपसंहृती।**

**स्थूलं सूक्ष्मं कारणञ्च शरीरत्रयमात्मनि।**
**माययाऽऽरोपितं ध्यात्वा बोधाल्लीनमिति स्मरेत्।**
**तदाऽप्योंकारमुच्चार्य नादान्ते निर्विकल्पकम्।**
**चित्तं कृत्वा यथाशक्ति स्वात्मतत्त्वे स्थिरीभवेत्।** इति।

पुनरपि चित्तचलने अध्यात्माधिदैवाभेदचिन्तनं कार्यमित्याह श्रुतिः—**तं वा एतं त्रिशरीरमात्मानं त्रिशरीरं परं ब्रह्मानुसन्दध्यात् स्थूलत्वात् स्थूलभुक्त्वाच्च सूक्ष्मत्वात् सूक्ष्मभुक्त्वाच्च ऐक्यादानन्दभोगाच्च** इति। अत्र संग्रह :—

निर्गते तु पुनश्चित्तेऽधिदैवाध्यात्मभेदतः ।
यद्देहत्रयमस्त्येतदभेदेनैव चिन्तयेत् ।
अण्डसूत्राव्याकृताख्या देहाः स्युरधिदैवतम् ।
पिण्डलिंगाज्ञानरूपमध्यात्मं वपुषां त्रयम् ।
स्थूलसूक्ष्मैक्यरूपत्वमुभयत्र क्रमात् त्रिषु ।
अस्तिसाम्यमभेदोऽत उभयोरपि चिन्त्यताम् ।
विराड्हिरण्यगर्भेशा अधिदैवं हि देहिनः ।
विश्वश्च तैजसः प्राज्ञो ह्यध्यात्ममपि देहिनः ।
स्थूलसूक्ष्मानन्दभुजः क्रमात्ते देहिनस्त्रयः । इति ।

अस्य स्फुटीकरणम्—सोयमात्मा चतुष्पात्-जागरितस्थानः स्थूलप्रज्ञः सप्तांग एकोनविंशतिमुखः स्थूलभुक् चतुरात्मा विश्वो वैश्वानरः प्रथमः पादः इति श्रुतिः ।

अत्र संग्रहः—

एतत्सर्वं स्फुटीकर्तुं चतुष्पात् प्रविविच्यते ।
इन्द्रियैर्विषयज्ञानं यत् तत् जागरितं भवेत् ।
तत्र स्थित्वा जगत् स्थूलं वेत्त्यात्मा बहिरिन्द्रियैः ।
शिरश्चक्षुर्मुखं प्राणो मध्यं वस्तिस्ततोऽप्यधः ।
इत्यंगसप्तकं वैश्वानरोपास्तिश्रुतौ श्रुतम् ।
ज्ञानकर्मेन्द्रियप्राणभेदाः पञ्चदशेरिताः ।
चतुर्विधान्तःकरणं मुख्यान्येकोनविंशतिः ।
स्थूलमिन्द्रियगम्यं यत्तद्भुङ्क्तेऽसौ चतुर्विधे ।
जागरे जागरस्वप्नसुप्तितुर्याख्यभेदतः ।
जागरो व्यवहारोऽक्षैः स्वप्नो मानसचिन्तनम् ।
तूष्णींस्थितिः सुषुप्तिः स्यात् तृप्तत्वं तुर्यमुच्यते ।
अध्यात्ममधिदैवश्च विश्ववैश्वानराभिधः ।
ईदृशः प्रथमः पाद आत्मनः स्याच्चतुष्पदः । इति ।

स्वप्नस्थानः सूक्ष्मप्रज्ञः सप्तांग एकोनविंशतिमुखः सूक्ष्मभुक् चतुरात्मा तैजसो हिरण्यगर्भो द्वितीयः पादः इति श्रुतिः ।

संग्रहश्च—

इन्द्रियाणामुपरमे धिया जागरवासनाम् ।
सूक्ष्मां जानन् वासनात्मा सप्तांगादियुतो भवेत् ।
स्पष्टस्मृतिरथास्पष्टस्मृतिरस्मृतिरित्यपि ।
स्वप्नभेदाः स्वप्नमध्ये जाग्रत्स्वप्नसुषुप्तयः ।
स्वप्नेऽपि तुर्यं तृप्तत्वं जाग्रतीवानुभूयते ।
हिरण्यगर्भोऽधिदैवमध्यात्मंतैजसाभिधः ।
द्वितीयः पाद एष स्यादात्मनोऽस्य चतुष्पदः । इति ।

यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तं सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखश्चतुरात्मा प्राज्ञ ईश्वरस्तृतीयः पादः इति श्रुतिः ।

संग्रहश्च—

धियो लये सुषुप्तिस्थ एकोऽभूत् द्वैतलोपनात् ।
धीवृत्तिरूपाः प्रज्ञास्ता एकीभावमुपागताः ।
दुःखहान्याऽऽनन्दमयो भुङ्क्ते ब्रह्मसुखं तदा ।
अविद्यावृत्त्यवच्छिन्नचैतन्यं भोगसाधनम् ।
सुषुप्तौ चतुरात्मत्वं जागरादिविभेदतः ।
तन्द्र्या मिथ्या लपेद्वाचा तदा स्यात् सुप्तिजागरम् ।
ध्यानाभासस्तु यस्तन्द्र्या सुप्तिस्वप्नस्स उच्यते ।
गाढनिद्रा सुप्तिसुप्तिः सुप्तितुर्यं सुखोद्भवः ।
अध्यात्मं प्राज्ञ एव स्यादधिदैवं तथेश्वरः ।
तृतीयः पाद इत्युक्त आत्मनोऽस्य चतुष्पदः । इति ।

सर्वेश्वरत्वादिकमपि धर्मजातं सापेक्षत्वात् सबीजस्यैव प्राज्ञस्य संभवति न तु निर्बीजस्य तुरीयस्येत्याह—**एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येषयोनिस्सर्वस्येति।** सर्वयोनित्वे हेतुमाह—**प्रभवाप्ययौ हि भूतानामिति।** एवं पादत्रयमात्मन्यारोप्य तस्यावस्तुत्वमाह—**त्रयमप्येतत् सुषुप्तं स्वप्नं मायामात्रमिति।** तत्र हेतुश्चिदेकरसो ह्ययमात्मेति।

अत्र संग्रहः—

**पादत्रयमिदं मायामात्रं स्यान्नतु तात्त्विकम्।**
**सुषुप्तस्वप्ननामभ्यां तत्त्वविद्वक्ति तत् त्रयम्॥**
**तत्त्वावृतेः सुषुप्तत्वं स्वप्नता त्वन्यथेक्षणात्।**
**पादत्रयेणावृतोऽसौ चिदेकरसताऽऽत्मनः।** इति।

निरुपाधिकचैतन्यप्रतिपत्त्यर्थचतुर्थपादं विभजते श्रुतिः—**अथ चतुर्थश्चतुरात्मा तुर्यावसितत्वादेकैकस्य ओतानुज्ञात्रनुज्ञाऽविकल्पैस्त्रयमत्रापि सुषुप्तं स्वप्नं मायामात्रं चिदेकरसो ह्यथायमादेशः न स्थूलप्रज्ञमि**त्यादिना।

अत्र संग्रहः—

**अथ पादश्चतुर्थो यश्चतुरात्मा स पूर्ववत्।**
**तुरीयावसितत्वं तु भवेत् पादचतुष्टये।**
**ओतानुज्ञात्रनुज्ञाऽविकल्पशब्दैरुदीरिताः।**
**चतुर्थपादगा भेदाः तत्स्वरूपं विविच्यते।**
**ब्रह्मणो गुरुशास्त्राभ्यां बुद्ध्वा सर्वात्मतां ततः।**
**सर्ववस्तुष्वनुस्यूतं पश्यन्नोता भवेदयम्।**
**इन्द्रियाणि निरुध्याहंब्रह्मेति ब्रह्मताऽऽत्मनि।**
**येनानुज्ञायते सोऽयमनुज्ञातेति कथ्यते।**
**ज्ञातृत्वञ्च तिरस्कृत्य चिदेकरसशेषता।**
**अनुज्ञेत्युच्यते मुक्तिरविकल्प इतीर्यते।**
**विद्वज्जागरणस्वप्नसुप्तितुर्याभिधा इमाः।**

**अवस्थास्तिस्र एतास्तु मायालेशेन संयुताः ।**
**निश्शेषमायाहीनोऽयमविकल्पो भवत्यथ ।**
**अतद्व्यावृत्तिरूपेण तस्यादेशोऽत्र वर्ण्यते ।**
**जाग्रत्स्वप्नान्तरालानि विद्याविद्ये सुषुप्तकम् ।**
**न स्थूलप्रज्ञमित्याद्यैः क्रमात् षड्भिर्निवार्यते ।**
**न चक्षुरादिभिर्दृश्यं न प्राणैर्व्यवहारभाक् ।**
**नापि कर्मेन्द्रियैर्ग्राह्यं नानुमेयञ्च लक्षणात् ।**
**न चिन्त्यं मनसा नैव शब्दैश्च व्यपदिश्यते ।**
**स्वप्रकाशात्मसारत्वान्नापि शंक्याऽस्य शून्यता** इत्यादि ।

ओतादीनाञ्च स्वरूपं भाष्यकारैरुक्तम्—सच्चिदानन्दरूपस्य कारणसाक्षिणः सदादिरूपैः कारणव्याप्तिरूपमोतो नाम । तेन व्याप्तस्य कारणस्य स्वतस्सत्ताद्यभावात् तदधीनसत्ताप्रकाशत्वेन तदध्यस्तं तत् इति प्रतीयमानसाक्षिरूपमनुज्ञातृ । तस्मिन्नध्यस्तत्वात् तावन्मात्रं तत् इत्येवंप्रतीयमानकारणसाक्षिरूपमनुज्ञा । कारणस्य सर्वात्मना निषेधेन निर्विशेषतया स्थितं साक्षिरूपमविकल्पो नामेति ।

अत्र उक्तपादचतुष्टयरूपस्यात्मनः **अजयैनंचतुष्पादं मात्राभिरोंकारेण चैकीकुर्यादि**त्यादिना प्रणवमात्राचतुष्टयेन ऐक्यचिन्तनमुक्तं सप्रपञ्चस्यात्मनस्त्रेधाविभागसमये कारणसामान्यशरीरयोरेकत्वं विवक्षित्वा । चतुर्धाविभागपक्षे तु ईक्षणावस्थं प्रलयावस्थञ्च बहिर्मुखं सर्वात्मकञ्च कारणं मकारशब्दवाच्यं कारणशरीरमुच्यते । तदेव सन्मात्रमन्तर्मुखं साक्ष्याकारब्रह्मज्ञानरूपं बिन्दुनादशक्तिशान्तरूपार्धमात्राशब्दवाच्यं सामान्यशरीरमित्युच्यते । अत्र सामान्यशरीरस्यापि चतुर्धा विभागः । ओतानुज्ञात्रनुज्ञाऽविकल्परूपेण । एवमकारादि उक्तविराडादिकञ्च ऐक्येन परिचिन्त्य ओतादिप्रणवेन उक्तं ओतादियोगञ्च कृत्वा प्रणवोच्चारणपूर्वकं पूर्वपूर्वस्य उत्तरोत्तरस्मिन् लयं कृत्वा अविकल्पे आत्मनि निश्चलतयाऽवतिष्ठेत । अत्र भाष्यम्—अकारस्य उक्तरूपविराड्वाचकत्वेन तदुच्चारणकाले तज्जन्यवृत्त्यारूढं विराजं सञ्चिन्त्य उकारोच्चारणसमये तद्वृत्त्यारूढं हिरण्यगर्भं विराजोऽपि कारणभूतं चिन्तयन् विराजं तावन्मात्रतया विलाप्य मकारोच्चारणकाले तद्वृत्त्यारूढं कारणात्मानमीश्वरं चिन्तयन् हिरण्यगर्भं तावन्मात्रतया संहृत्य स्वयमीश्वरात्मा भवेदित्याह—**मात्र मात्राः प्रतिमात्राः कुर्यादिति ।**

मात्राः—अकाराद्याः, प्रतिमात्राः—उकाराद्याः, अकारस्य प्रतिमात्रा उकारः। तत्प्रातिलोम्येन तत्संहारकत्वेन स्थितत्वात्। उकारस्य मकारः प्रतिमात्रा। मकारस्य तुर्यः प्रणवः प्रतिमात्रेति।

ओतादिरूपेण क्रमेण अविकल्पे विलापनीयानीति च भाष्यम्। तस्यायमर्थः—बहिर्मुखस्य कारणस्य अन्तर्मुखे साक्षिणि लयः, तत्रापि ओतस्य स्थूलस्य तत ईषत्सूक्ष्मे अनुज्ञातरि लयः, तस्यापि ततः सूक्ष्मेऽनुज्ञात्मनि, तस्य निर्विशेषे अविकल्पे लयः, इति। अयं भावः—अकारमुकारे उकारं मकारे तञ्चार्धमात्रायां लीनं कृत्वा तदर्थमोतानुज्ञात्रनुज्ञाऽविकल्परूपं चिन्तयन् तेषु पूर्वं पूर्वमुत्तरोत्तरात्मना ग्रसेदिति।

एवमुत्तरत्र तृतीये खण्डे मात्राचतुष्टयमनुष्टुप्पादचतुष्टयञ्च मिश्रीकृत्य विराडादिचतुष्टयस्य उपासनपूर्वकं स्वरूपनिष्ठाप्रकारः प्रतिपादितः।

एवमुपासनान्तराण्यपि तापनीयभाष्योक्तानि द्रष्टव्यानि।

**भाष्यकारैश्च** ओंकारेण स्वरूपप्रतिपत्यर्थं पञ्चीकरणं नाम प्रकरणं कृतम्।

तद्व्याख्यात**मस्मद्गुरुचरणैः पञ्चीकरणभावप्रकाशिकायाम्**।

तदेवात्र विलिख्यते—

**श्रीमच्छङ्करभगवत्पादाचार्याः**—इह जन्मनि जन्मान्तरे वा कृतसुकृतपरिपाकासादितसत्वशुद्धिवशादुत्पन्ननित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसंपत्त्या ब्रह्म जिज्ञासूनां श्रवणमनननिदिध्यासननिष्ठानां परमहंसपरिव्राजकानां आरुण्युपनिषदा **सन्ध्यादौ स्नानमाचरेत् सन्धि समाधावात्मन्याचरे**दिति समाधिरुपदिष्टः, तत्प्रकारं दर्शयितुं पञ्चीकरणं नाम अनुष्ठानपद्धतिरूपं प्रकरणमुपादिशन्—**पञ्चीकृतपञ्चमहाभूतानी**त्यादिना। तत्र आत्मव्यतिरिक्तं सर्वं स्थूलसूक्ष्मकारणशरीररूपेण त्रिधाकृत्वा विराट्जागरितयोस्तदभिमानिनोर्वैश्वानरविश्वयोश्च एकीभावं विवक्षित्वा **पञ्चीकृतपञ्चमहाभूतानी**त्यारभ्य **एतत्त्रयमकार** इत्यन्तेन ग्रन्थेन स्थूलराशिरात्मन्यारोपितः प्रदर्शितः। तथा सूक्ष्मप्रपञ्चं समष्टिव्यष्टिरूपं लिंगशरीरं स्वप्नं तदभिमानिनौ हिरण्यगर्भतैजसौ चैकीकृत्य **अपञ्चीकृते**त्यारभ्य **एतत्त्रयमुकारः** इत्यन्तेन ग्रन्थेन द्वितीयो राशिर्दर्शितः।

मायाऽज्ञानादिशब्दवाच्यं कारणं सुषुप्तं तदभिमानिनौ चेश्वरप्राज्ञावेकीकृत्य **शरीरद्वयकारणमात्माज्ञानमि**त्यारभ्य **एतत्त्रयम्मकार** इत्यन्तेन तृतीयो राशिर्दर्शितः। तत्प्रदर्शनञ्च स्थूलसूक्ष्मकारणक्रमेण पूर्वपूर्वस्योत्तरोत्तरस्मिन् प्रविलापनेन स्थूलादित्रितयसाक्षिणः तुरीयस्य प्रत्यगात्मनः ब्रह्मत्वं दर्शयितुं। तत्रापि वाच्यवाचकयोः पृथक् प्रविलापने यत्नगौरवं स्यादिति एकेनैव यत्नेन उभयप्रविलापनार्थं वाच्यवाचकाभेद उक्तः **एतत्त्रयमकार** इत्यादिना। उक्तञ्चैतत् **माण्डूक्यभाष्ये** अभिधानाभिधेययोरेकत्वप्रतिपत्तेश्च प्रयोजनमेकेनैव प्रयत्नेन युगपत् प्रविलापयत् तद्विलक्षणं ब्रह्मप्रतिपद्येतेति। न चैवमप्यकारोकारमकाराणामेव प्रविलयो न सर्वस्य वाचकस्येति वाच्यम्। **तद्यथा शंकुना सर्वाणि पर्णानि सन्तृण्णान्येवमोंकारेण सर्वा वाक् सन्तृण्णा ओंकार एवेदं सर्व**मिति श्रुत्या शंकुशब्दवाच्यस्य पर्णानालस्य सर्वपर्णावयवव्याप्तिवत् ओङ्कारस्य सर्व वाग्व्याप्त्यभिधानेन सर्ववागात्मत्वावगमात्। तत्रापि योग्यतया तदंशस्य अकारस्य स्थूलप्रपञ्चवाचकसर्ववागात्मत्वं उकारस्य सूक्ष्मवाचकवागात्मत्वं मकारस्य कारणवाचकवागात्मत्वं श्रुतिप्रामाण्याद्विवक्षितम्। ततश्चाकारादिलये सर्ववाचकलयस्सिद्धो भवत्येव। वाचकानामप्यकारादिवाच्यप्रपञ्चान्तःपाताद्वा सर्वलयसिद्धिः। तदिदमुक्त**माचार्यैः—अकार उकार एव उकारो मकार एव मकारोऽहमेवे**ति। तस्यार्थः—ओंकारोच्चारणात् पूर्वमेव अकारादिवाच्यस्थूलादिराशित्रयं परिभाव्य पश्चादोंकारमुच्चार्य तदवयवाकारोच्चारणकाले तदर्थं स्थूलराशिं तद्वाचकराशिं च स्मृत्वा उकारोच्चारणकाले तदर्थं सवाचकं सूक्ष्मं स्मृत्वा तस्मिन् स्थूलराशिं विलापयेत्। एवं मकारोच्चारणकाले तदर्थं कारणात्मानं तद्वाचकराशिञ्च स्मृत्वा तस्मिन्नुकारार्थं सूक्ष्मं विलापयेत्। तथा तदनन्तरं तत्साक्षितया प्रकाशमाने स्वप्रकाशे तेनैव ओंकारेण लक्षिते प्रत्यगात्मनि कारणात्मानं विलापयेदिति।

अयञ्च प्रकारस्तापनीयोपनिषद्भाष्ये प्रदर्शितः—अकारस्योक्तरूपविराड्वाचकत्वेन तदुच्चारणकाले तज्जन्यवृत्त्यारूढं विराजं सञ्चिन्त्य उकारोच्चारणसमये तद्वृत्त्यारूढं हिरण्यगर्भं विराजोऽपि कारणभूतं सञ्चिन्त्य विराजं तावन्मात्रतया संहृत्य मकारोच्चारणसमये तद्वृत्त्यारूढमीश्वरं हिरण्यगर्भविराजोरपि कारणं सञ्चिन्त्य हिरण्यगर्भञ्च तावन्मात्रतया संहृत्य स्वयमीश्वरात्मा भवेत् **अथ तुरीय ईश्वरग्रासः**—इति। तुरीयेण चिदात्मना ईश्वरो ग्रसनीय इति तदर्थः।

तथा पञ्चीकरणवार्तिकेऽप्युक्तम्—

**अकारमात्रं विश्वः स्यादुकारस्तैजसः स्मृतः।**
**प्राज्ञो मकार इत्येवं परिपश्येत् क्रमेण तु।**
**समाधिकालात् प्रागेवं विचिन्त्यातिप्रयत्नतः।**
**स्थूलसूक्ष्मक्रमात् सर्वं चिदात्मनि विलापयेत्।**
**अकारं पुरुषं विश्वमुकारे प्रविलापयेत्।**
**उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत्।**
**मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत्।** इति।

स च प्रत्यगात्मा केषाञ्चिन्मते अणुः, नैयायिकानां मते जडः, दिगंबराणां सावयवः, वार्तिककाराणां द्रव्यबोधात्मकः, केषांचित् देहादिरूपः, इति अणुत्वादिभ्रमव्युदासार्थं व्याप्तिरूपमात्मत्वं साक्षित्वं कूटस्थत्वं चिन्मात्रत्वमज्ञानकार्यदेहादिभिन्नत्वञ्चानुसन्धातव्यमिति वक्तुमाह— **अहमात्मा साक्षी केवलः कूटस्थः चिन्मात्रस्वरूपः नाज्ञानतत्कार्यं** इति।

एवं शोधितस्य त्वम्पदार्थस्य ब्रह्मत्वज्ञानादेव पुरुषार्थः 'ब्रह्मविदाप्नोति परं' 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिश्रुतेः इत्यभिप्रेत्य तस्य ब्रह्मत्वमनुसन्धातव्यमित्याहुः—**किन्तु नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयब्रह्मैवाहमस्मीति**। एवमपि पटैकदेशस्य पटतावन्मात्रत्वेपि पटस्य एकदेशात् भेदवत् ब्रह्मांशस्यात्मनो ब्रह्मतावन्मात्रत्वेपि ब्रह्मणस्ततोऽतिरेकः स्यादित्याशंकानिराकरणार्थं ब्रह्मणोऽपि प्रत्यगात्मतावन्मात्रत्वमखण्डैकरसत्वमनुसन्धातव्यम्, आत्मनो ब्रह्मांशत्वस्य उपाधिकल्पितत्वे वस्तुतो ब्रह्ममात्रत्वात् इत्युपदिशन्त आहुः—**अहं ब्रह्मास्मीति**। एवं ब्रह्ममात्रतया अवस्थानं 'सन्धिं समाधावात्मन्याचरेदि'ति श्रुत्युक्तसमाधिशब्दार्थः इत्युपसंहृतम्—**इत्यभेदेनावस्थानं समाधिरि**ति। अभेदज्ञानं समाधिरित्यर्थः। **समाधिस्संविदुत्पत्तिः परजीवैकतां प्रती**ति **स्कान्दो**क्तेः। तदनन्तरमुक्ते ब्रह्मात्मत्वे प्रमाणान्युपन्यस्तानि महावाक्यानि। **इति**।

अत्र मुमुक्षूणां परमहंसानां सन्ध्याकालेषु अवश्यं ब्रह्मानुसन्धानलक्षणसमाधिः कर्तव्य इत्यत्र प्रमाणं **सन्धिं समाधावात्मन्याचरेदि**ति श्रुतिः। अस्य अयमर्थः— आत्मनि विषये यः समाधिः तस्मिन् सन्धिं-सन्धौ भवं अवश्यकरणीयं यत् कर्म तदाचरेत्—प्रत्यगात्मनो ब्रह्म-

त्वानुसन्धानेनैव तत् कुर्यात् न तु बाह्यं गायत्रीजपादि कुर्यादिति। "संधिं सन्धौ भवं सन्ध्यावन्दनादिकर्म यदवश्यकरणीयं तत् समाधौ अहंब्रह्मास्मीत्येतद्बुद्धिसमाधानरूपे आत्मनि आनन्दात्मनि स्वयंप्रकाशे सर्वकर्मशून्ये नैष्कर्म्यमार्गेणाचरेत् सर्वतः कुर्यात्। यद्वा सन्धिः छिद्रं जीवब्रह्मणोर्भेदरूपं समाधौ भेदशून्ये आत्मनि स्वरूपे आचरेत् सर्वतो भक्षयेत् भेदगन्धं वारयेत्। सर्वथा ब्राह्मणस्य सन्ध्यावन्दनादेः कर्मणः परित्यागः सन्धिमित्यादिवाक्येनाभिधीयते" इति **दीपिकाया**मुक्तम्। सन्ध्याकालेषु ब्रह्मात्मत्वमनुसन्दध्यादित्येतावदत्र विवक्षितम्। तच्च ब्रह्मात्मत्वानुसन्धान ओंकारेणैव कुर्यादित्युक्तं **तैत्तरीये-न्यास इति ब्रह्मे**त्यारभ्य **तस्मान्न्यासमेषां तपसामतिरिक्तमाहु**रित्यन्तेन। सन्न्यासस्तुतिद्वारा सन्न्यासं विधाय तस्य सन्न्यासिनः ओंकारेण ब्रह्मात्मत्वानुसन्धानं विहितम्—**ओमित्यात्मानं युञ्जीते**ति। तदर्थो दीपिकायामुक्तः—युजिर् योगे। युज समाधौ। आत्मानं त्वंपदार्थभूतं प्रत्यगात्मानं तत्पदार्थभूतपरमात्मना एकत्वेन ओमित्यनेन सोऽहमस्मीति युञ्जीत-समादधीत, एकत्वलक्षणे योगे सदा मनस्समाधानं कुर्यात् शुद्धसत्वो मुमुक्षुस्सन्न्यासी विद्वानिति। इदञ्च ओङ्कारेण समाधानकरणं अकारोकारमकाराणां पूर्वोक्तप्रकारेण प्रत्यगात्मनि लयद्वारेणेति **माण्डूक्यभाष्यव्याख्याने आनन्दगिर्याचार्यैः** विवृतम्। **माण्डूक्ये—ओमित्येतदक्षरमिदंसर्व**मित्यादिना ओंकारनिरूपणं क्रियते। तस्य किं प्रयोजनमित्याशंक्य ओंकारनिरूपणमात्मधीहेतुरिति परिहृत्य तत्र प्रमाणत्वेन ओमित्यात्मानं युञ्जीतेति तैत्तरीयशाखागतं वाक्यमुदाहृतं **भाष्यकृता**। तद्विवृत**मानन्दगिर्याचार्यैः**। समाधिनिष्ठो यदा ओमित्युच्चार्य आत्मानमनुसन्धत्ते तदा स्थूलमकारमुकारे सूक्ष्मे तं च कारणे मकारे तमपि कार्यकारणातीते प्रत्यगात्मनि उपसंहृत्य तन्निष्ठो भवतीत्यनेन प्रकारेण ओंकारस्य प्रतिपत्त्युपायतेति।

प्रकृतश्रुतिस्तु—**एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोंकारः** इति॥

**तापनीये**—

**ओतः**—व्यापकः। **ओतो ह्ययमात्मेति** श्रुतिः।

**ओंकाराग्रविद्योतः**—ओंकाराग्रे तत्साक्षितया विद्योतमानः-प्रकाशमान इत्यर्थः। **त एतमेवोंकाराग्रविद्योतं तुर्यतुर्य**मिति श्रुतिः।

॥ **ओंकारादिनामव्याख्या समाप्ता** ॥

**औपनिषदः**—उपनिषदेकसमधिगम्यः ।

ननु आत्मनः कथमुपनिषदेकसमधिगम्यत्वं प्रत्यक्षादिना अहमित्याद्यनुभवरूपेण अवगमात् मतान्तरेऽपि प्रतिपादनादिति चेन्मैवम् । अहमिति अहङ्कारविशिष्टस्यैव आत्मनः अवगमात् । न तु सम एकः कूटस्थः नित्यशुद्धबुद्धमुक्तस्वभावः परिपूर्णः प्रत्यक्षादिना अवगम्यते मतान्तरे वा प्रतिपाद्यते । अयमर्थः शंकापरिहाराभ्यां भाष्यकारैर्निरूपितः । नन्वात्मा अहंप्रत्ययविषयत्वात् उपनिषत्स्वेव विज्ञायत इत्यनुपपन्नम् । तन्न - तत्साक्षित्वेन प्रत्युक्तत्वात् । नह्यहंप्रत्ययविषयकर्तृव्यतिरेकेण तत्साक्षी सर्वभूतस्थः सम एकः कूटस्थनित्यः पुरुषो विधिकाण्डे तर्कसमये वा केनचिदधिगत इति । तंत्वौपनिषदं पृच्छामीति च औपनिषदत्वविशेषणं पुरुषस्य उपनिषत्सु प्राधान्येन प्रकाश्यमानत्वात् इति च निरूपितम् । अत एव सर्वेषु वेदेषु उपनिषदमावर्तयेदिति श्रुतिः। उपनिषदमर्थतोऽनुसन्दध्यादित्यर्थः । तथा च तत्तदुपनिषदि तेन तेन प्रकारेण प्रतिपादितमात्मानं सदा भावयेदिति । निरुपाधिकस्यात्मनः स्वरूपेण वक्तुमशक्यत्वादेहेन्द्रियाद्युपाधिनिरासद्वारा प्रतिपादयितुं देहेन्द्रियमनआदिषु आत्मनस्संबन्धः श्रुत्या दर्शितः—तत्सृष्ट्वा तदेवानुप्राविशदिति तैत्तरीये । स एष इह प्रविष्ट आनखाग्रेभ्य इति बृहदारण्यके । स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यतेत्यैतरेयके । इहैवान्तश्शरीरे सोम्य पुरुष इति प्रश्नोपनिषदि । गुहां प्रविष्टौ परमे परार्धे इति काठके । समानं वृक्षं परिषस्वजाते इति एतद्यो वेद निहितं गुहायामिति च मुण्डके । चक्षुः श्रोत्रं क उ देवो युनक्ति इति केनोपनिषदि । अत्र चक्षुःश्रोत्रादिप्रेरकत्वादेव तत्संबन्धोऽर्थाद्दर्शितः । अनेजदेकं मनसो जवीय इति ईशावास्ये । एवमवस्थात्रयसाक्षित्वेन वक्तुं जाग्रदादिसंबन्धो दर्शितः—सोयमात्माचतुष्पाज्जागरितेत्यादि माण्डूक्यादिषु ।

**स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।**
**स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्ति[तृप्ति]मेति ।**

इत्यादिना शरीरसंबन्धोऽवस्थासंबन्धश्च दर्शितः कैवल्योपनिषदि । एवं महाभूतादिसंबन्धोऽतिस्फुट एव दर्शितः ।

तथा क्वचिदेकहेलया उपाधिनिरासद्वारा आत्मा निरूप्यते **ईशावास्यमिदं सर्वं-यत्किञ्च जगत्याञ्जगदिति** । अस्यायमर्थः—

यत्किञ्च जगत्यां पृथिव्यां जगत् द्वैतरूपं पृथिव्यामित्युपलक्षणं नामरूपकर्मात्मकं सर्वं जगदात्मन्यध्यस्तं भूतभौतिकं कर्तृत्वभोक्तृत्वादिलक्षणञ्च, इदं सर्वं ईशा परमात्मना वास्यं वसनीयमाच्छादनीयं यथा स्वेनात्मना कल्पितस्य स्वप्नस्य स्वात्मना तिरोभावेन स्वात्ममात्रावशेषः एवं सर्वस्यापि प्रपञ्चस्य स्वात्मनि कल्पितत्वेन स्वात्मतत्त्वसाक्षात्कारात् स्वात्मतावन्मात्रेण तिरोभावः कर्तव्य इति। अयमर्थो मन्त्रद्वयेन उत्तरत्र दृढीकृतः—

**यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति।**
**सर्वभूतेषु चात्मानं ततो न विजुगुप्सते।**
**यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।**
**तत्र को मोहः कश्शोक एकत्वमनुपश्यतः।**

यस्तु विद्वान् सर्वाणि भूतानि अव्यक्तादीनि स्थावरान्तानि आत्मन्येवानुपश्यति आत्मव्यतिरिक्तानि न पश्यति न जानातीत्यर्थः, सर्वभूतेषुतेष्वेव च आत्मानं तेषामपि च भूतानां स्वात्मानं आत्मत्वेन, यथा अस्य कार्यकरणसंघातस्य आत्मा अहं एवं सर्वभूतेषु च आत्मानं यस्तु पश्यति स ततः तस्मादेव दर्शनात् न विजुगुप्सते जुगुप्सां न करोतीति, प्राप्तस्यायमनुवादः, सर्वस्यापि अत्यन्तविशुद्धात्मस्वरूपत्वात्। यस्मिन् काले यथोक्तात्मनि वा सर्वाणि भूतानि परमार्थदर्शनात् आत्मैवाभूत् आत्मैव संवृत्तः परमार्थवस्तु विजानतः तत्र तस्मिन् काले तत्र वा आत्मनि को मोहः कः शोकः, शोकश्च कामबीजं अजानतो भवति न तु आत्मैकत्वं विशुद्धं गगनोपमं पश्यतः। को मोहः कश्शोकः इति च शोकमोहयोरविद्याकार्ययोराक्षेपेणासंभवप्रदर्शनात् सकारणस्य संसारस्य अत्यन्तमेवोच्छेदः प्रदर्शितो भवति।

एवं **केनोपनिषदि**—

अत्र हि **केनेषित**मित्यारभ्य **चक्षुःश्रोत्रं क उ देवो युनक्ति** इत्यन्तस्य प्रश्नस्य उत्तरम्—**श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः। चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्तीति।** श्रोत्रस्य शब्दरूपविषयव्यञ्जनसमर्थस्य श्रोत्रम्। स्वविषयव्यञ्जनसामर्थ्यं श्रोत्रस्य चैतन्ये सति भवति। अतश्चैतन्यमेव श्रोत्रेन्द्रियनिष्ठ-

विषयव्यञ्जनसामर्थ्यकारणमिति श्रोत्रस्यश्रोत्रमित्युच्यते। अनेन श्रोत्राद्येव सर्वस्य आत्मभूतं चेतनमिति प्रसिद्धं तदिह निवर्त्यते। अस्ति किमपि विद्वद्बुद्धिगम्यं सर्वान्तरतमं कूटस्थमजरममरममृतमभयं श्रोत्रादेरपि श्रवणादिसामर्थ्यनिमित्तमिति। तथा मनसोऽन्तःकरणस्य मनः, नह्यन्तःकरणं अन्तरेण चैतन्यज्योतिषो दीधितिं स्वविषयसंकल्पाध्यवसायादिसमर्थं स्यात् तस्मात् मनसोऽपि मनः। इह बुद्धिमनसी एकीकृत्य निर्देशो मनस इति। यद्वाचो ह वाचम्, यच्छब्दो यस्मादर्थे, यस्मात् श्रोत्रस्य श्रोत्रं यस्मान्मनसो मनः इत्येवं। वाचो ह वाचमिति। द्वितीया प्रथमात्वेन विपरिणम्यते। स उ प्राणस्य प्राण इति दर्शनात्। प्राणस्य प्राणाख्यवृत्तिविशेषस्य स उ प्राणः तत्कृतं हि प्राणस्य प्राणनसामर्थ्यं, तथा चक्षुषश्चक्षुः रूपप्रकाशकस्य चक्षुषो यत् रूपग्रहणसामर्थ्यं तदात्मचैतन्याधिष्ठितस्यैव। अतः चक्षुषश्चक्षुःस पृष्टः। पृष्टस्यार्थस्य ज्ञातुमिष्टत्वात् श्रोत्रादेः श्रोत्रादिलक्षणं यथोक्तं ब्रह्म ज्ञात्वेत्यध्याह्रियते। अमृताभवन्तीति फलश्रुतेश्च। ज्ञानाद्धि अमृतत्वं प्राप्यते। ज्ञात्वा अतिमुच्य सामर्थ्यात् श्रोत्रादिकरणकलापमुज्झित्वा, श्रोत्रादौ ह्यात्मभावं कृत्वा तदुपाधिस्सन् तदात्मना जायते म्रियते संसरति च, अतः श्रोत्रादेः श्रोत्रादिलक्षणं ब्रह्म आत्मेति विदित्वा अतिमुच्य श्रोत्राद्यात्मभावं परित्यज्य। ये श्रोत्राद्यात्मभावं परित्यजन्ति ते धीराः धीमन्तः, न हि विशिष्टधीमत्त्वमन्तरेण श्रोत्राद्यात्मभावः परित्यक्तुं शक्यः, प्रेत्य व्यावृत्य, अस्माल्लोकात् पुत्रमित्रकलत्रबन्धुषु ममाहंभावलक्षणात्, त्यक्तसर्वैषणा भूत्वेत्यर्थः, अमृता अमरणधर्माणः भवन्ति। **न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः** इति श्रुतेः। अथवा अतिमुच्येत्यनेनैव एषणात्यागस्य सिद्धत्वात् अस्माल्लोकात् प्रेत्य अस्मात् शरीरात् प्रेत्य-मृत्वेत्यर्थः।

एवं **काठकेऽपि**—

**अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्।**

**महान्तं विभुमात्मानं मत्वा धीरो न शोचति।**

अस्यार्थः—अशरीरं — स्वेनरूपेण आकाशकल्प आत्मा अशरीरः तं अशरीरं शरीरेषु देवपितृमनुष्यादिशरीरेषु अनवस्थेषु - अवस्थितिरहितेषु अवस्थितं - नित्यम-

विकृतमित्येतत्, महान्तं - महत्त्वस्य आपेक्षिकत्वशंकायामाह—विभुं - व्यापिनं आत्मानं आत्मग्रहणं स्वतोऽनन्यत्वप्रदर्शनार्थम्, आत्मशब्दः प्रत्यगात्मविषय एव मुख्यः, तमीदृशमात्मानं मत्वा अहमिति धीरः धीमान् न शोचति। न ह्येवंविधस्यात्मविदश्शोकोपपत्तिः।

एवं **अस्यामेवोपनिषदि**—

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।**
**मनसस्तु परा बुद्धि र्बुद्धेरात्मा महान् परः।**
**महतः परमव्यक्तमव्यक्तात् पुरुषः परः।**
**पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः** इति।

अस्यार्थः—इन्द्रियादीनामुत्तरोत्तरं सूक्ष्मत्वव्यापकत्वप्रत्यक्त्वतारतम्यक्रमेण पदनीयस्य परब्रह्मस्वरूपस्य निरतिशयसूक्ष्मत्वादिकं प्रतिपादयति—**इन्द्रियेभ्य** इत्यादिना। भूतकार्याणि तावदिन्द्रियाणि स्थूलानि। तानि च यैरर्थैः शब्दादिविषयैः स्वात्मप्रकाशनायारब्धानि तेऽर्थाः इन्द्रियेभ्यः स्वकार्येभ्यः पराः-सूक्ष्माः, महान्तश्च प्रत्यगात्मभूताश्च। तेभ्योऽप्यर्थेभ्यो मनश्शब्दवाच्यं मनस आरंभकं भूतसूक्ष्मं परम्। तस्मान्मनसोऽपि परा सूक्ष्मतरा महत्तरा प्रत्यगात्मभूता च बुद्धिः, अध्यवसायाद्यारंभकं भूतसूक्ष्मं बुद्धिशब्दवाच्यं, तस्यापि बुद्धेर्महानात्मा परः, तत्समष्टिरूपा हैरण्यगर्भी बुद्धिः महानात्मेत्युच्यते, सा सर्वासां बुद्धीनां कारणत्वात् सूक्ष्मतरा व्यापिनी प्रत्यग्भूता च, तस्मादपि महतः परं सूक्ष्मतरं प्रत्यगात्मभूतं सर्वमहत्तरमव्यक्तं अव्याकृतनामरूपात्मकं सर्वस्य जगतो बीजभूतं मायाप्रकृत्याद्यपरपर्यायं, तस्मादप्यव्यक्तात् परः सूक्ष्मतरः सर्वकारणभूतः प्रत्यगात्मा, अत एव पुरुषः, सर्वकार्यप्रपञ्चस्य स्वस्वरूपेण पूरयिता, यद्वा सर्वासु पूर्षु शेते इति पुरुषः, सर्वान्तरत्वात्, ततोऽन्यस्य सूक्ष्मस्य प्रसंगं वारयन्नाह-पुरुषादिति। पुरुषात् सर्वान्तरात् चिद्घनरूपात् प्रत्यगात्मनः परं किञ्चिदपि वस्तु नास्ति। एवं सूक्ष्मत्वमहत्त्वप्रत्यगात्मत्वानां तत्रैव परिसमापनात् सैव परमा काष्ठा-पर्यवसानभूमिः। सैव गन्तृणां संसारिणां परा प्रकृष्टा गतिः—गन्तव्यं प्राप्तव्यं वस्तु। अन्यास्तु गतयः अपराः

इयं तु पुनरावृत्तिराहित्येन परा । अत एव भगवतोक्तम्—**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम** इति । एषा च प्रत्यगात्मत्वेन प्राप्तप्राप्तिरूपत्वात् ज्ञानमात्रप्राप्या, अतो गत्यन्तरवत् क्रियासाध्यत्वादनित्यत्वमस्याः नाशङ्कनीयमिति ।

एवं **प्रश्नोपनिषदि**—

**स ईक्षाञ्चक्रे स प्राणमसृजत**इत्यादिना नामान्तसृष्टिमुक्त्वा स्वप्नदशासृष्टस्वाप्निकपदार्थानामिव प्राणादिनामान्तषोडशकलानां तत्रैव लयं ब्रवीति श्रुतिः दृष्टान्तपुरस्सरम्। तथा हि—
**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे समुद्र इत्येवं प्रोच्यते एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवतीति ।**

अस्यार्थः—सः दृष्टान्तः, यथा लोके इमा नद्यः स्यन्दमानाः-स्रवन्त्यः समुद्रायणाः-समुद्रः अयनं यासां ताः समुद्रं प्राप्य - उपगम्य अस्तं - अदर्शनं - नामरूपतिरस्कारं गच्छन्ति तासाञ्च अस्तं गतानां भिद्येते - विनश्येते नामरूपे गंगा यमुना इत्यादिलक्षणे तदभेदेन समुद्र इत्येवं प्रोच्यते तद्वस्तु उदकलक्षणम् , एवं - यथाऽयं दृष्टान्तः, उक्तलक्षणस्य प्रकृतस्य पुरुषस्य परिद्रष्टुः परि - समन्तात् द्रष्टुः - दर्शनस्य कर्तुः स्वरूपभूतस्य, यथा अर्कः स्वात्मप्रकाशस्य कर्ता । तथा च यः स्वरूपप्रकाशेनैव अहमस्मि पुरुष इति पुरुषं अभेदेनैव अनुभवति तस्य विदुषः इमाष्षोडश कलाः प्राणाद्या उक्ताः पुरुषायणाः नदीनामिव समुद्रः पुरुषः अयनं गतिः आत्मभावो यासां ताः पुरुषायणाः पुरुषं प्राप्य पुरुषात्मभावमुपगम्य तथैवास्तं गच्छन्ति । भिद्येते चासां नामरूपे कलानाम् । नामरूपयोर्भेदे च यदनष्टं तत्त्वं तत् पुरुष इत्येवं प्रोच्यते ब्रह्मविद्भिः, एवं विद्वान् गुरुणा प्रदर्शितकलाप्रलयमार्गः स एषः विद्यया प्रविलापितासु अविद्याकामकर्मजनितासु प्राणादिकलासु अकलः, अविद्याकृतकलानिमित्तो हि मृत्युः तदपगमे अकलत्वादेव अमृतो भवतीति ।

अथ **मुण्डकोपनिषदि**—नित्यानित्यवस्तुविवेकपुरस्सरं वैराग्यं प्राप्तस्य आत्मज्ञानार्थं ब्रह्मनिष्ठं सद्गुरुं प्रति परिचरणशीलस्य तन्मुखात् कृतवेदान्तश्रमणस्य निरस्तसमस्तरागादिदोषस्य सत्यतपोब्रह्मचर्यादिसाधनसंपन्नस्य आत्मध्याननिष्ठस्य अत्ममात्रपरस्य वेदान्तशास्त्रव्यतिरिक्तवाग्विमोचनं कृतवतो विषयपराङ्मुखस्य सन्न्यासिनः ज्ञातस्वात्मरतेः आत्मक्रीडस्य ज्ञानप्रसादेन विशुद्धसत्वस्यैव नामरूपसकलोपाधिविनिर्मोकपुरस्सरं परिपूर्णब्रह्मरूपेणावस्थानं नान्यस्येत्येवमर्थोऽवगम्यते ।

तथा हि—

**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ।**
**तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ।**

यदेतदात्मज्ञानमितरवाग्विमोचनञ्च उभयमपि अमृतस्य अमृतत्वस्य मोक्षस्य कारणमित्यर्थः ।

**आत्मक्रीड आत्मरतिः क्रियावान्**—आत्मन्येव क्रीडा क्रीडनं यस्य नान्यत्र पुत्रदारादिषु स आत्मक्रीडः । तथा आत्मरतिः । क्रीडा बाह्यसाधनापेक्षा, रतिः बाह्यसाधननिरपेक्षा विषयप्रीतिमात्रमिति विशेषः । क्रियावान् - ज्ञानध्यानवैराग्यादिक्रिया यस्य सोऽयं क्रियावान् ।

**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।**
**अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ।**

तपसा - इन्द्रियमनएकाग्रतया । मनसश्चेन्द्रियाणाञ्चैकाग्र्यं परमं तपः इति स्मरणात् । सम्यग्ज्ञानेन - यथाभूतात्मदर्शनेन ब्रह्मचर्येण - मैथुनासमाचारेण । नित्यं सर्वदा, नित्यं सत्येन नित्यं तपसा नित्यं सम्यग्ज्ञानेन नित्यं ब्रह्मचर्येण आत्मा लभ्यः, अन्तश्शरीरे - अन्तः मध्ये शरीरस्य पुण्डरीकाकाशे ज्योतिर्मयः - स्वयंप्रकाशः । शुभ्रः -शुद्धः । यं - आत्मानं पश्यन्ति -

उपलभन्ते। यतयः - यतनशीलाः सन्न्यासिनः क्षीणदोषाः - क्षीणक्रोधादिचित्तमलाः। स आत्मा नित्यसत्यादिसाधनैर्लभ्यः न कादाचित्कैर्लभ्यः।

**ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः।**

चक्षुरादिना आत्मा न गृह्यत इत्युक्तम्। **ज्ञानप्रसादेन** - आत्मावबोधनसमर्थमपि स्वभावेन सर्वप्राणिनां ज्ञानं बाह्यविषयरागादिदोषकलुषितमप्रसन्नमशुद्धं सत् न बोधयति नित्य-सन्निहितमप्यात्मतत्वं मलापनद्धमिवादर्शतलं विलुलितमिव वा सलिलम्। तत् यदा इन्द्रियविषयसं-सर्गजनितरागादिमलकालुष्यापनयनात् आदर्शसलिलादिवत् प्रसादितं स्वच्छं शान्तमवतिष्ठते तदा ज्ञानस्य प्रसादः स्यात्, तेन ज्ञानप्रसादेन। विशुद्धसत्वः—विशुद्धान्तःकरणो योग्यो ब्रह्म द्रष्टुं यस्मात् ततः—तस्मात्तु तं आत्मानं, पश्यते—पश्यति उपलभते, निष्कलं—सर्वावय-वादिभेदवर्जितं, ध्यायमानः—सत्यादिसाधनवानुपसंहृतकरणः एकाग्रेण मनसा ध्यायमानः चिन्तयन्।

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।**
**यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम्।**

अयमात्मा प्रवचनेन - वेदशास्त्राध्ययनबाहुल्येन न लभ्यः, तथा न मेधया—ग्रन्थार्थ-धारणशक्त्या, न बहुना श्रुतेन - नापि भूयसा श्रवणेन, केन तर्हि लभ्यत इति? उच्यते—यमेव - परमात्मानमेव एषः—विद्वान् वृणुते - प्राप्तुमिच्छति, तेन - वरणेन परमात्मा लभ्यः नान्येन साधनान्तरेण। नित्यलब्धस्वभावत्वात्। कीदृशोऽसौ विदुष आत्मलाभ इति? उच्यते—तस्यैष आत्मा अविद्यासञ्छन्नां स्वां परां तनुं-स्वात्मतत्वं स्वरूपं विवृणुते प्रकाशयति। प्रकाशे इव घटादिर्विद्यायां सत्यामाविर्भवतीत्यर्थः। तस्मादन्यत्यागेन आत्मलाभप्रार्थनैव आत्मलाभसाधन-मित्यर्थः।

आत्मप्रार्थनासहायभूतानि साधनान्याह—

**नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाऽप्यलिंगात्।**
**एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्म धाम।** इति।

अयमात्मा बलहीनेन - आत्मनिष्ठाजनितवीर्यहीनेन न लभ्यः। नापि लौकिकपुत्रपश्वादिविषयासंगनिमित्तात् प्रमादात् तथा तपसो वाऽप्यलिंगात् - लिंगरहितात्। तपोऽत्र ज्ञानं लिंगं सन्यासः, सन्यासरहितात् ज्ञानान्न लभ्यत इत्यर्थः। एतैरुपायैः—बलाप्रमादसन्यासज्ञानैर्यतते - तत्परस्सन् प्रयतते यस्तु विद्वान् विवेकी - आत्मवित् तस्य विदुषः आत्मा एषः विशते—प्रविशति ब्रह्म धाम।

कथं ब्रह्मप्रवेशः इति ? उच्यते—

**संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः।**
**ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानस्सर्वमेवाविशन्ति।**

संप्राप्य - समवगम्य एनं - आत्मानं ऋषयः—दर्शनवन्तः तेनैव ज्ञानेन तृप्ताः न बाह्येन तृप्तिसाधनेन शरीरोपचयकारणेन, कृतात्मानः—परमात्मस्वरूपेणैव निष्पन्नात्मानस्सन्तः, वीतरागाः—विगतरागादिदोषाः, प्रशान्ताः—उपरतेन्द्रियाः ते - एवंभूताः सर्वगं-सर्वव्यापिनं आकाशवत्, सर्वतःप्राप्य-नोपाधिपरिच्छिन्नेन एकदेशेन, किन्तर्हि ? ब्रह्मैवाद्वयमात्मत्वेन प्रतिपद्य, धीराः—अत्यन्तविवेकिनः, युक्तात्मानः—नित्यसमाहितस्वभावाः सर्वमेव - समस्तं शरीरपातकालेऽपि आविशन्ति - भिन्नघटाकाशादिवत् अविद्याकृतोपाधिपरिच्छेदं जहति। एवं ब्रह्मविदो ब्रह्मधाम प्रविशन्ति।

**वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयश्शुद्धसत्वाः।**
**ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे।**

वेदान्तजनितं ज्ञानं वेदान्तविज्ञानं, तस्यार्थः पर आत्मा विज्ञेयः, सोऽर्थः सुनिश्चितो येषां ते वेदान्तविज्ञानसुनिश्चितार्थाः। ते च सन्न्यासयोगात् - सर्वकर्मपरित्यागलक्षणात् योगात् केवलब्रह्मनिष्ठारूपात् योगात् यतयः - यतनशीलाः शुद्धसत्वाः - शुद्धं सत्वं येषां सन्न्यासयोगात् ते शुद्धसत्वाः, ते ब्रह्मलोकेषु, संसारिणां ये मरणकालाः ते अपरान्ताः, तानपेक्ष्य मुमुक्षूणां संसारावसाने देहपरित्यागकालः परान्तकालः, तस्मिन् परान्तकाले, साधकानां बहुत्वा-

ब्रह्मैव लोकः एकोऽपि अनेकवत् दृश्यते प्राप्यते च, अतो बहुवचनं ब्रह्मलोकेष्विति, ब्रह्मणीत्यर्थः, परामृताः-परममृतं अमरणधर्मकं ब्रह्म आत्मभूतं येषां ते परामृताः-जीवन्त एव ब्रह्मभूताः, परामृतास्संतः परिमुच्यन्ति-परि-समन्तात् प्रदीपनिर्वाणवत् भिन्नघटाकाशवच्च निर्वृतिमुपयान्ति परि समन्तात् मुच्यन्ते सर्वे ; न देशान्तरं गन्तव्यमपेक्षन्ते ।

**शकुनीनामिवाकाशे जले वारिचरस्य वा ।**
**पदं यथा न दृश्येत तथा ज्ञानवतां गतिः ।**
**अनध्वगा अध्वसु पारयिष्णवः** इति श्रुतिस्मृतिभ्याम् ।

एवं **गताः कलाः पञ्चदश प्रतिष्ठाः** इत्यारभ्य **परेऽव्यये सर्व एकीभवन्ति** इत्यन्तेन प्राणादिकलानां स्वरूपे लयमुक्त्वा **यथा नद्यःस्यन्दमाना** इत्यादिना **परात् परं पुरुषमुपैति दिव्यम्** इत्यन्तेन नदीनां नामरूपविमोकपूर्वकं समुद्रे एकीभाववत् विद्वानपि नामरूपे विहाय परमात्मन्येकीभवतीत्युपपादितम् ।

एवं **माण्डूक्येऽपि** अवस्थात्रयप्रतिषेधेन तुरीयनिरूपणं कृतम्—**नान्तः प्रज्ञं नबहिःप्रज्ञं नोभयतः प्रज्ञं नप्रज्ञानघनं नप्रज्ञं नाप्रज्ञं अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः** इति । नान्तःप्रज्ञमिति तैजसप्रतिषेधः । नबहिःप्रज्ञमिति विश्वप्रतिषेधः । नोभयतः प्रज्ञमिति जाग्रत्स्वप्नयोरन्तरालावस्थाप्रतिषेधः । नप्रज्ञानघनमिति सुषुप्त्यवस्थाप्रतिषेधः । नप्रज्ञमिति युगपत्सर्वविषयप्रज्ञातृत्वप्रतिषेधः । नाप्रज्ञमित्यचैतन्यप्रतिषेधः । कथंपुनरन्तःप्रज्ञत्वादीनां आत्मनि गम्यमानानां रज्ज्वादौ सर्पादिवत् प्रतिषेधादसत्त्वं गम्यत इति ? उच्यते-ज्ञस्वरूपाविशेषेऽपि इतरेतरव्यभिचारात् । सर्वत्राव्यभिचारात् ज्ञस्वरूपस्य सत्यत्वम् । सुषुप्ते व्यभिचरतीति चेत्-न-सुषुप्तस्यानुभूयमानत्वात् । 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति श्रुतेः । अत एवादृश्यम् । यस्माददृश्यं तस्मादव्यवहार्यम् । अग्राह्यं कर्मेन्द्रियैः । अलक्षणं-अननुमेयं अतएवाचिन्त्यं अतएवाव्यपदेश्यं शब्दैः । एकात्मप्रत्ययसारं - जाग्रदादिस्थानेष्वेकएवायमात्मेत्यव्यभिचारी यः प्रत्ययः तेनानुसरणीयम् । अथवा एकः आत्मप्रत्ययः सारं-प्रमाणं यस्य तुरीयस्याधिगमे तत् तुरीयमेकात्मप्रत्ययसारं'आत्मेत्येवोपासीते'ति श्रुतेः । अन्तःप्रज्ञत्वादिस्थानिधर्मप्रतिषेधः कृतः । प्रपञ्चोपशममिति

जाग्रदादिस्थानधर्माभाव उच्यते। अत एव शान्तं शिवं यतोऽद्वैतं - भेदविकल्परहितं चतुर्थं तुरीयं मन्यन्ते, प्रतीयमानपादत्रयरूपवैलक्षण्यात्। 'स आत्मा स विज्ञेयः' इति। प्रतीयमान-सर्पदण्डभूच्छिद्रादिव्यतिरिक्ता यथा रज्जुः तथा तत्त्वमस्यादिवाक्यार्थ आत्मा 'अदृष्टो द्रष्टा' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्यादिभिरुक्तो यः स विज्ञेयः इति।

**तैत्तरीयकेऽपि ब्रह्मविदाप्नोतिपरमिति** सूत्रभूतब्राह्मणवाक्येन ब्रह्मविदः परप्राप्तिमुक्त्वा पुनः **सत्यं ज्ञानमनन्तं ब्रह्मे**त्यादिमन्त्रेण संग्रहेण व्याख्याय तस्यैव विस्तारार्थं वल्लीद्वयं प्रवृत्तम्।

तथाहि—

**ब्रह्मविदाप्नोति परम्।** ब्रह्मेति वक्ष्यमाणलक्षणं बृहत्तमत्वात् ब्रह्म, तद्वेत्ति विजानातीति ब्रह्मवित् आप्नोति - प्राप्नोति परं - निरतिशयं तदेव ब्रह्म। ननु सर्वगतं सर्वस्यात्मभूतं ब्रह्म वक्ष्यति। अतो नाप्यम्। आप्तिश्च अन्यस्य अन्येन परिच्छिन्नस्य परिच्छिन्नेन दृष्टा। अपरिच्छिन्नं सर्वात्मकञ्च ब्रह्म, इत्यतः परिच्छिन्नवत् अनात्मवच्च तस्य आप्तिरनुपपन्ना। नायं दोषः। कथं? दर्शनापेक्षत्वादाप्त्यनाप्त्योः। परमार्थतो ब्रह्मस्वरूपस्यापि सतोऽस्य जीवस्य भूतमात्राकृतबाह्यपरि-च्छिन्नान्नमयाद्यात्मदर्शिनः तदासक्तचेतसः परमार्थब्रह्मस्वरूपाभावदर्शनलक्षणया अविद्यया अन्नमयादीन् बाह्याननात्मनः आत्मत्वेन प्रतिपन्नत्वात् स अन्नमयाद्यात्मभ्यो नान्योहमस्मीत्यभि-मन्यते। एवमविद्यया आत्मभूतमपि ब्रह्म अनाप्तं स्यात्। तस्यैवमविद्यया अनाप्तब्रह्मस्वरूपस्य श्रुत्युपदिष्टसर्वात्मब्रह्मण आत्मत्वदर्शनेन विद्यया तदाप्तिरुपपद्यत एव।

एवं ब्रह्मविदाप्नोतिपरमित्यनेन वाक्येन वेद्यतया सूत्रितस्य ब्रह्मणोऽनिर्धारितस्वरूपविशेषस्य सर्वतोव्यावृत्तस्वरूपविशेषसमर्पणसमर्थस्य लक्षणस्याभिधानेन स्वरूपनिर्धारणाय, अविशेषेणोक्त-वेदनस्य ब्रह्मणो वक्ष्यमाणलक्षणस्य विशेषेण प्रत्यगात्मतयाऽनन्यरूपेण विज्ञेयत्वाय, ब्रह्मविद्याफलं च ब्रह्मविदो यत् परप्राप्तिलक्षणमुक्तं तत् सर्वात्मभावः सर्वसंसारधर्मातीतब्रह्मस्वरूपत्वमेव नान्यत् इत्येतत्प्रदर्शनाय च, एषा ऋगुदाहियते—

**सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चितेति।**

अत्र सत्यादीनि विशेषणानि लक्षणार्थप्रधानानि न विशेषणप्रधानान्येव। कः पुनर्लक्षणलक्ष्ययोर्विशेषणविशेष्ययो र्वा विशेष इति ? उच्यते—समानजातीयेभ्य एव निवर्तकानि विशेषणानि। यथा नीलमुत्पलमिति। लक्षणं तु सर्वतो व्यावर्तकम्। यथा अवकाशदात्राकाशमिति। अत्र सत्यादिशब्दाः न परस्परं संबध्यन्ते। परार्थत्वात्। अतः एकैको विशेषणशब्दः परस्परनिरपेक्षो ब्रह्मशब्देन संबध्यते। सत्यं ब्रह्म, ज्ञानं ब्रह्म, अनन्तं ब्रह्मेति। अत्र ब्रह्मणोऽनन्यशेषतया वेद्यत्वप्रतिपादनात् अनानन्दरूपस्य तथात्वानुपपत्तेर्निरतिशयसुखात्मकत्वमपि तस्य सिद्ध्यति।अत एवोत्तरत्राम्नायते-**यदेष आकाश आनन्दो न स्यात्, आनन्दो ब्रह्मेति व्यजानात्** इति च। ननु एकेनैव पदेन लक्ष्यस्वरूपस्य विज्ञातत्वात् पदान्तरवैयर्थ्यमिति चेत्-न दोषः। तत्र सत्यशब्दः सत्स्वरूपं ब्रह्म लक्षयित्वा स्वरूपस्यानृतत्वं निषेधति। ज्ञानशब्दः ज्ञप्तिस्वरूपं ब्रह्म लक्षयित्वा जडत्वं निषेधति। आनन्दशब्दः सुखस्वरूपं ब्रह्म लक्षयित्वा दुःखात्मकत्वं निषेधति। तदुक्तम्—

**मिथ्यात्वादि यदध्यस्तं ब्रह्मण्येतस्य बाधनम्।**
**नानापदै विंना नेति ब्रह्म तैरुपलक्ष्यते।** इति।

अनन्तशब्दस्तु देशकालवस्तुकृतपरिच्छेदत्रयं निषेधति। न तु स्वार्थे कश्चिद्रूपं समर्पयति। तदप्युक्तम्—

**तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम्।**
**स्वार्थार्पणप्रणाड्या तु परिशिष्टौ विशेषणम्।** इति।

सत्यादिशब्दानामेवमर्थकत्वं परस्परसामानाधिकरण्यवशात् लभ्यते। तत् यथोक्तलक्षणं ब्रह्म यो वेद विजानाति निहितं स्थितं गुहायां बुद्धौ, गूहतेः संवरणार्थत्वात्, निगूढः ज्ञानज्ञातृज्ञेयपदार्थाः अस्यामिति गुहा बुद्धिः। निगूढावस्यां भोगापवर्गाविति वा। परमे-प्रकृष्टे व्योमन्-व्योम्नि आकाशे हार्दे, प्रसिद्धं हि हार्दाकाशस्य परमत्वम्, तस्मिन् हार्दे व्योम्नि या बुद्धिः गुहा तस्यां निहितं ब्रह्म तद्वृत्त्या विविक्ततया उपलभ्यत इति। न ह्यन्यथा विशिष्टदेशकालसंबन्धोऽस्ति ब्रह्मणः सर्वगतत्वान्निर्विशेषत्वाच्च। स एवं ब्रह्म प्रत्यगात्मत्वेन विजानन् किं ? इति, आह—अश्नुते—भुङ्क्ते सर्वान्—निरवशिष्टान् कामान् काम्यान्। किमस्मदादिवत् पुत्रस्वर्गादीन्

पर्यायेण, नेत्याह—सह—युगपत्—एकक्षणोपारूढान् एकया उपलब्ध्या सवितृप्रकाशवन्नित्यया ब्रह्मस्वरूपाव्यतिरिक्तया, यदवोचं ज्ञानमिति तदुच्यते । **ब्रह्मणा सहेति**—ब्रह्मभूतो विद्वान् ब्रह्मस्वरूपेणैव सर्वान् कामान् सहाश्नुते । न तथा यथा उपाधिकृतेन स्वरूपेण जलसूर्याकाशवत् प्रतिबिंबभूतेन सांसारिकेण धर्मादिनिमित्तापेक्षान् चक्षुरादिकरणापेक्षांश्च सर्वान् कामान् पर्यायेणाश्नुते लोकः । कथं तर्हि? यथोक्तेन प्रकारेण सर्वज्ञेन सर्वगतेन ह्यात्मना नित्यब्रह्मस्वरूपेण धर्मादिनिमित्तानपेक्षांश्चक्षुरादिकरणनिरपेक्षांश्च सर्वान् कामान् सहाश्नुते इत्यर्थः । विपश्चिता मेधाविना सर्वज्ञेन । तद्धि वैपश्चित्यं यत्सर्वज्ञत्वं, सर्वज्ञस्वरूपेण ब्रह्मणा अश्नुते । अयं भावः—विदितब्रह्मरूपेण स्वात्मतया साक्षात्कृतेन निरावरणतया सर्वदा सर्वत्र सवितृप्रकाशवत् सर्ववस्त्ववभासकेन स्वयंप्रकाशमानेन चिद्रूपेण ब्रह्मवित् एवंभूतसर्वज्ञब्रह्मात्मकस्सन् तत्त्वज्ञानेन भेदभ्रमहेतोरविद्यायास्समूलमुन्मूलितत्वात् स्वात्मनो निरतिशयानन्दभावेन तल्लेशभूतान् सर्वान् सुखविशेषानपि स्वरूपप्रकाशेन धर्मादिनिरपेक्षेण युगपत् व्याप्नोतीति । इतिशब्दो मन्त्रपरिसमाप्त्यर्थः । अयमेवार्थो अवशिष्टब्रह्मवल्ल्या भृगुवल्ल्या च प्रपञ्चितः ।

### ऐतरेयोपनिषदि—

**आत्मा वा इदमेक एवाग्र आसीद्**इत्यादिना परमेश्वरस्सर्वज्ञस्सर्वशक्तिस्सर्ववित् स्वतोऽन्यद्वस्त्वन्तरमनुपादायैव आकाशादिक्रमेण अण्डमुत्पाद्य अम्भःप्रभृतीन् लोकान् लोकपालादींश्च सृष्ट्वा लोकान्तर्वर्ति चतुर्विधभूतग्रामञ्च सृष्ट्वा स्वात्मप्रबोधनार्थं सर्वाणि च प्राणादिमच्छरीराणि, मूर्धानं विदार्य शरीरेषु प्रविष्टवान् इति **स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यते**त्यन्तेन वर्णितम् । अनन्तरञ्च तस्यैवं सृष्ट्वा प्रविष्टस्य जीवेन आत्मना त्रय आवसथाः स्थानानि जागरितकाले इन्द्रियं स्थानं दक्षिणं चक्षुः स्वप्नकालेऽन्तर्मनः सुषुप्तिकाले हृदयाकाश इति । अथवा त्रय आवसथाः पितृशरीरं मातुर्गर्भाशयः स्वञ्च शरीरमिति । त्रयः स्वप्नाः जाग्रत्स्वप्नसुषुप्त्याख्याः । ननु जागरितं प्रबोधरूपत्वात् न स्वप्नः-नैवम्-स्वप्न एव । कथं परमार्थप्रबोधाभावात् स्वप्नवदसद्वस्तुदर्शनाच्च । अयमावसथः-चक्षुर्दक्षिणं प्रथमः, मनः आन्तरं यत् स द्वितीयः, हृदयाकाशस्तृतीयः । तेषु हि आवसथेषु पर्यायेण अयमात्मभावेन वर्तमानः अविद्यया स्वाभाविक्या दीर्घकालं गाढं प्रसुप्तो न प्रबुध्यते अनेकशतसहस्रानर्थसन्निपातज-

दु:खमुद्गराभिघातानुभवैरपि । **स जातः** शरीरे प्रविष्ट: जीवेनात्मना **भूतान्यभिव्यैख्यत्** व्याकरोत् । अनन्तरञ्च **स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिति** । स जीवेनात्मना प्रविष्ट: कदाचित् परमकारुणिकेन आचार्येण आत्मज्ञानप्रबोधकृच्छब्दिकायां वेदान्तमहाभेर्यां तत्कर्णमूले ताडयमानायां एतमेव सृष्ट्यादिकर्तृत्वेन प्रकृतं पुरुषं पुरिशयानमात्मानं ब्रह्म बृहत्तमं ततमं तकारेणैकेन लुप्तेन तततमं परिपूर्णं आकाशवत् प्रत्यबुध्यत अपश्यत् । कथम् ? इदं—ब्रह्म मम आत्मन: स्वरूपं अदर्शं - दृष्टवानस्मीति ।

**छान्दोग्ये**—आत्मा सच्चिदानन्दस्वरूपत्वेन प्रतिपादित: ।

तथाहि—**षष्ठाध्याये—सदेवसोम्येदमग्र आसीदिति** सत्त्वेन निरूपित: । **सप्तमाध्याये—यो वै भूमा तत्सुखमिति** सुखत्वेन । **अष्टमाध्याये—परञ्ज्योतिरूपसंपद्येति** चिद्रूपत्वेन निरूपित: अवस्थात्रयसाक्षित्वनिरूपणपुरस्सरम् ।

षष्ठाध्यायस्थतत्त्वमस्यादिवाक्यार्थो निरूप्यते-सत्यज्ञानानन्तानन्दात्मकमखण्डमद्वितीयमेकमनाद्यन्तं परमार्थभूतं वस्तु । सत्वरजस्तमोलक्षणगुणत्रयात्मिका च प्रकृति: अनादिरनन्तवती तत्त्वज्ञानैकनिवर्त्या मिथ्यैव परिकल्पितत्वात् अवस्तुभूता । सा च द्विविधा । रजस्तमसी अभिभूय विशुद्धसत्वा एका । सा मायेत्युच्यते । रजस्तमोभ्यामभिभवेन मलिनसत्वा अपरा । सा अविद्येत्युच्यते । तत्र मायासत्वांशे प्रतिबिंबितस्स एक: परमात्मा तम:प्रधानप्रकृत्युपाधिकस्सन् भूतभौतिकप्रपञ्चलक्षणभोग्यात्मना विवर्तते । तत्र एक एव परमात्मा तम:प्रधानप्रकृत्युपाधिकतया जगदुपादानं विशुद्धसत्वप्रधानप्रकृत्युपाधिकतया च जगतो निमित्तमित्यभिन्ननिमित्तोपादानं **सदेवसोम्येद**मित्यत्र **सच्छब्देनो**क्त: । तत्र हि तदैक्षतेति चेतनत्वेन निमित्तत्वं बहुस्यामिति बहुभवनेन विवर्तमानतयाउपादानत्वमित्यभिधानात् अभिन्ननिमित्तोपादानत्वं विशदम् । तदिह प्रकृतं तत्त्वमसीतिवाक्ये प्रकृतपरामर्शनात् तच्छब्देनोच्यते । अविद्योपाधिकस्तु जीव: सकलोऽपि पुरोवार्तिनं श्वेतकेतुं निमित्तमात्रं कृत्वा उद्दालकेन पित्रा त्वंशब्देनोच्यते । तयोश्च तत्त्वंशब्दवाच्यार्थयोर्मायाविद्योपाधिकचैतन्ययोस्सर्वज्ञत्वसर्वशक्तिकर्तृत्वभोक्तृत्वविशिष्टयो: परस्परमत्यन्तविलक्षणतया तादात्म्यविरोधात् तत्त्वंशब्दौ विरुद्धांशं परित्यज्य उभयानुगतमेकं चैतन्यमात्रं लक्षयत: ।

ननु तत्त्वमर्थयोः तादात्म्यसिद्धवत्कारेण वाच्यार्थत्यागे किं प्रमाणमिति चेत्—

तत्त्वंपदयोस्सामानाधिकरण्यमिति ब्रूमः । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिर्हि सामानाधिकरण्यम्। तथा च पदयोरेकार्थत्वं वक्तव्यं। तच्च सर्वज्ञत्वादिविरुद्धांशत्यागपूर्वकं चैतन्य-मात्रलक्षकत्वे घटते । नान्यथा ।

परमार्थतः भिन्नस्यैव सतः संसारिणो जीवस्य उपासनावशात् कालान्तरे ईश्वरत्वं भविष्यति रससंपर्कवशेन ताम्रस्य स्वर्णत्वापत्तिवदिति चेत्—

न-असिशब्दविरोधात् । तथा च सोऽयं देवदत्तः इतिवत् सिद्धवन्निर्देशात् तत्त्वमसीति वाक्यस्य पूर्वोक्त एवार्थः स्वीकर्तव्यः।

ननु तत्त्वमसीति तत्त्वमसीति नवकृत्वोऽभ्यासस्य किं प्रयोजनमिति चेत्—

संसारलक्षणं महायासं प्राप्य दुःखितानां नृणां बहुभिः प्रकारैस्तत्तदाशंकानिराकरणं प्रयोजनमिति गृहाण । तथाहि-सुषुप्त्युत्क्रान्त्याद्यवस्थासु येन रूपेण जीवस्संपद्यते तत् सद्रूपं ब्रह्म त्वमसीति पित्रा बोधितः श्वेतुकेतुराशंकते-सुषुप्तौ सत्संपन्नाः प्रजाः तद्ब्रह्मात्मत्वं किमिति न विदुरिति । मधुकरैर्मधुत्वेनसमाहृतनानावृक्षरससमुदायवद्विवेक्तुमशक्यत्वेन सुषुप्त्यादौ प्राप्तमपि ब्रह्म न ज्ञायत इति तामाशंकां निरस्य स य एषोणिमैतदात्म्यमिति प्रागुक्तमेवार्थं पुनरेवादिदेश ।

ननु युक्तं सुषुप्त्यादौ करणाभावादविज्ञानं उत्थितस्तु ब्रह्मणोऽहमुत्थित इति कस्मान्नजानी-यादित्याशंकायामुक्तम् - यथा जलधरैरंभोधितः आकृष्य वृष्टानां पुनस्समुद्रं प्राप्तानां नदीनां रसान्यत्वेन समुद्रादागमनं समुद्रात्मत्वञ्च दुर्ज्ञानं एवं ब्रह्मण उत्थितानां संसारिणां तद्वैलक्षण्यात् तदात्मनाऽवस्थायोत्थिता वयमिति न ज्ञानमिति परिहारेण प्रागुक्तं वाक्यमेवोपदिष्टम् ।

तथा सुषुप्तौ जीवस्य कारणभावापत्तौ समुद्रवीच्यादिवन्नाशमाशंक्य, यथा वृक्षस्य परश्वादिना उच्छेदे रसस्रावित्वात् सजीवत्वम्, एवं सुषुप्तदेहे लोहितप्राणदर्शनात् न जीवनाशः इति परि-हारेण प्रागुक्तएवार्थे स्थापिते सति, पुनः श्वेतकेतुराशंकते, कथं सूक्ष्मात् ब्रह्मणः स्थूलजगदुत्प-त्तिरिति । वटधानान्तर्गतसूक्ष्मरूपात् वटोत्पत्तिवत् जगदुत्पत्तिसंभवेन तन्निराकृत्य तमेवार्थमुप-दिदेश ।

जगन्मूलकारणं ब्रह्म किमिति नोपलभ्यत इत्याशंक्य, उदकप्रक्षिप्तलवणसद्भावस्य दर्शन-स्पर्शनाभ्यामनुपलंभेऽपि रसनया लवणसद्भावनिश्चयवत् चक्षुराद्यदृश्यमपि ब्रह्म कार्यलिंगात् अस्तीत्युक्तम् ।

ब्रह्मसाक्षात्कारे क उपाय इत्याशंक्य गन्धारदेशादागतस्यारण्ये चोरैर्निक्षिप्तस्य बद्धचक्षुषः पुरुषस्य नेत्रबन्धविनिर्मोकेण गन्धारोपदेशनवत् आचार्यकृतादुपदेशात् ब्रह्मसाक्षात्कारो अविद्या-निवृत्तिश्चेत्युक्तम् ।

स विद्वान् केन प्रकारेण ब्रह्म संपद्यत इत्यपेक्षायामाह-विद्वान् मनआदेर्लये सति ज्ञानदीपप्रकाशितं ब्रह्मैव प्रतिपद्यते नार्चिरादिकमपेक्षते, अविद्वांस्तु देहान्तरं गृह्णातीत्युक्तम् ।

यदि मरिष्यमाणो मोक्ष्यमाणश्च मरणावस्थायां ब्रह्मैव संपद्यते तर्हि विद्वानप्यविद्वानिव किमिति पुनर्नावर्तत इत्याशंकायामुत्तरम्-तप्तपरशुं गृह्णतोः स्तेनास्तेनयोः तप्तपरशुकरतलसंयोगा-विशेषेऽपि सत्यव्यवहितहस्ततलत्वादस्तेनो न दह्यते एवमन्तकाले अविद्वद्विदुषोस्समानायामपि सत्संपत्तौ सत्यब्रह्माभिसन्धिः पुनर्न देहं गृह्णाति, अनृतदेहाद्यात्मबुद्धिस्तु पुनश्शरीरमु-पादत्ते इति ।

**बृहदारण्यके पञ्चमाध्याये उषस्तकहोलब्राह्मणयोः** प्रत्यगात्मस्वरूपं निर्धारितम् ।

तत्र **उषस्तब्राह्मणे-यत्साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्वेति** याज्ञवल्क्यं प्रति चाक्रायणेन पृष्टमात्मतत्त्वम् । यत् ब्रह्म ह्मसाक्षात्—अव्यवधानेन अपरोक्षात्—अपरोक्षं । ननु ब्रह्मणः कथमपरोक्षत्वमत आह-य आत्मा-प्रत्यगात्मा सर्वान्तरः-सर्वस्मात् कार्यक-रणसंघातादभ्यन्तरः। याज्ञवल्क्येन प्रत्युत्तरं दत्तं-**यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः** इत्यादिना-यः प्राणादिना प्राणनादिचेष्टां करोति स ते कार्यकारणसंघातस्य आत्मा, तस्मात् सोऽस्ति कार्यकारणसंघातात् विलक्षणः यश्चेष्टयति । पुनरपि शृंगग्राहिकया आत्मा वक्तव्य इति पृष्टस्सन् उत्तरमाह-**न दृष्टेर्द्रष्टारं पश्येः न श्रुतेः श्रोतारं शृणुयाः** इत्यादिना । अत्र रूपशब्दादिविषयसंप्रयुक्तचक्षुःश्रोत्रादिद्वारा रूपाद्युपरागेण जायमाना स्वरूपचिच्छायाव्याप्तबुद्धि-वृत्तिः दृष्टिश्रुत्यादिषष्ठ्यन्तपदैर्विवक्षिता । दृष्टिश्रुत्यादयो हि अनात्मभूतरूपादिविषयमेव प्रकाश-यन्ति, न तु स्वात्मचैतन्यप्रकाशेन व्याप्तारं रूपादिरहितं प्रत्यगात्मानम् । स खलु लौकिक्या दृष्टेः

द्रष्टा-चैतन्यस्वरूपया स्वभावभूतया दृष्टया व्याप्ता कथं कर्मीभूतया लौकिक्या दृष्ट्या व्याप्येत। एवं न श्रुतेः श्रोतारं शृणुयाः इत्यादावपि योजना। एवं बुद्धिवृत्तेः प्रकाशकः स्वप्रकाश चिदात्मा एषः ते-तव आत्मा सर्वान्तरः। परमात्मेत्यर्थः।

एवं **कहोलप्रश्नेऽपि-यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तर स्तं मे व्याचक्ष्वेति एष त आत्मा सर्वान्तरः। कतमो याज्ञवल्क्य सर्वान्तरः?।** प्रत्याह-**योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति, एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्चे**त्यादिना।

पूर्वब्राह्मणे कार्यकरणसंघातव्यतिरिक्त आत्मा अस्तीत्येवं प्रतिपादितम्। अस्मिन् ब्राह्मणे तस्यैवात्मनो विशेषः प्रतिपाद्यते। यज्ज्ञानात् ससंन्यासात् मोक्षो भवतीत्येवमर्थं विशेषमेवाह श्रुतिः। अशनाया-अशितुमिच्छा, पिपासा-पातुमिच्छा, अशनायापिपासे यः अत्येतीति वक्ष्यमाणेन संबन्धः। मूढैरशनायापिपासादिमत् ब्रह्म गम्यमानमपि ते अत्येत्येव, परमार्थतस्ताभ्यामसंस्पृष्टस्वभावत्वात्, प्राणैकधर्मत्वादशनायापिपासयोः। शोकं मोहं-शोक इति कामः इष्टं वस्तु उद्दिश्य चिन्तयतो यदरमणं तत् तृष्णाऽभिभूतस्य कामबीजं, तेन हि कामो दीप्यते। मोहस्तु विपरीतप्रत्ययप्रभवोऽविवेको भ्रमः। स च अविद्या सर्वस्यानर्थस्य प्रसवबीजं, तौ मनोऽधिकरणौ। जरांमृत्युमिति-जरेति कार्यकरणसंघातविपरिणामो वलीपलितादिलिंगः, मृत्युरिति तद्विच्छेदः विपरिणामावसानं, तौ जरामृत्यू शरीराधिकरणौ अत्येति। एते अशनायादयः प्राणमनश्शरीराधिकरणाः प्राणिषु अनवरतमावर्तमानाः अहोरात्रादिवत् समुद्रोर्मिवच्च प्राणिषु संसार इत्युच्यन्ते। योऽसौ दृष्टेर्द्रष्टेत्यादिलक्षणः साक्षात्-अव्यवहितः अपरोक्षात्-अगौणः सर्वान्तरः ब्रह्मादिस्तम्बपर्यन्तानां भूतानां अशनायापिपासादिभिः संसारधर्मैःसदा न स्पृश्यते आकाश इव घनादिमलैः **तमेतं वै आत्मानं** स्वं तत्त्वं विदित्वा-ज्ञात्वा अयमहमस्मि परं ब्रह्म सदा अद्वयं संसारविनिर्मुक्तं नित्यतृप्तमिति, ब्राह्मणाः-ब्राह्मणानामेवाधिकारो व्युत्थाने, अतो ब्राह्मणग्रहणं, व्युत्थाय-वैपरीत्येन उत्थानं कृत्वा। कुत इति? आह-**पुत्रैषणायाश्च**-पुत्राय एषणा-पुत्रैषणा 'पुत्रेण इमं लोकं जयेय'मिति लोकजयसाधनं पुत्रं प्रति इच्छा एषणा दारसंग्रहः। दारसंग्रहमकृत्वेत्यर्थः। वित्तैषणायाश्च-कर्मसाधनस्य गवादेरुपादानं 'अनेन कर्म कृत्वा पितृलोकं जेष्यामी'ति विद्यासंयुक्तेन वा देवलोकं, केवलया वा हिरण्यगर्भविद्यया दैवेन वित्तेन देवलोकं एतास्मिन् त्रिविधे अनात्मलोकप्राप्तिसाधने तृष्णामकृ-

त्वेत्यर्थः । तस्मात् पूर्वे ब्राह्मणाः-ब्रह्मविदः, व्युत्थाय-कर्मभ्यः कर्मसाधनेभ्यश्च यज्ञोपवीतादिभ्यः परमहंसपारिव्राज्यं प्रतिपद्य, भिक्षाचर्यं चरन्ति-भिक्षार्थञ्चरणं भिक्षाचर्यं चरन्ति त्यक्त्वा स्मार्तं लिंगं केवलमाश्रममात्रशरणानां जीवनसाधनं पारिव्राज्यव्यञ्जकं विद्वान् लिंगवर्जितः । **तस्माद्-लिंगो धर्मज्ञोऽव्यक्तलिंगोऽव्यक्ताचारः** इत्यादिस्मृतिभ्यः । **अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः** इत्यादिश्रुतेः । **सशिखान् केशान् निकृत्य विसृज्य यज्ञोपवीत**मिति च । यस्मात् पूर्वे ब्राह्मणाः एतमात्मानमसाधनफलस्वभावं विदित्वा एषणाभ्यो व्युत्थाय भिक्षाचर्यं चरन्ति स्म दृष्टादृष्टार्थं कर्म तत्साधनञ्च हित्वा, तस्मादद्यत्वेऽपि ब्राह्मणः—ब्रह्मवित् पाण्डित्यं-पण्डित-भावं यदेतदात्मज्ञानं तन्निर्विद्य—निश्शेषं विदित्वा आत्मज्ञानं निश्शेषं कृत्वा आचार्यत आगमतश्चेत्यर्थः । एषणाभ्यो व्युत्थाय—एषणाव्युत्थानावसानमेव हि तत् पाण्डित्यं एषणातिरस्कारोद्भवत्वात् पाण्डित्यस्य तस्मात् एषणाभ्यो व्युत्थाय, ज्ञानफलभावेन बाल्येन तिष्ठासेत्—स्थातुमिच्छेत्, साधनफलाश्रयणं हि बलमितरेषामनात्मविदां तद्बलं हित्वा विद्वान् असाधनफलस्वरूपात्मज्ञानमेव बलं तद्भावमेव केवलमाश्रयेत्, तदाश्रयणे हि करणानि एषणाविषये एनं हृत्वा स्थापयितुं नोत्सहन्ते, ज्ञानबलहीनं हि मूढं दृष्टादृष्टविषयायामेषणायामेवैनं करणानि योजयन्ति । बलं नाम आत्मविद्यया सर्वान्यदृष्टितिरस्करणं, अतस्तद्भावेन बाल्येन तिष्ठासेत् । **नायमात्मा बलहीनेन लभ्यः** इति श्रुत्यन्तरात् । बाल्यञ्च पाण्डित्यञ्च निर्विद्य—निश्शेषं कृत्वा अथ मननात् मुनिः-योगी भवति । **अमौनञ्च**-आत्मज्ञानानात्मप्रत्ययतिरस्कारौ **मौनञ्च**-अनात्मप्रत्य-यतिरस्कारस्य पर्यवसानं फलञ्च निर्विद्य अथ ब्राह्मणः-कृतकृत्यो भवति, ब्रह्मैव सर्वमिति प्रत्यय उपजायते । ब्रह्मात्मप्रत्यये हि कृतकृत्यः अतो ब्राह्मणः । **स ब्राह्मणः केन स्यात्**-केन चरणेन भवेत् **तेन ईदृश एव**-येन केनचिच्चरणेन स्यात् तेन ईदृश एव-उक्तलक्षण एव ब्राह्मणो भवति । येनकेनचिच्चरणेनेति स्तुत्यर्थं, येयं ब्राह्मण्यावस्था सेयं स्तूयते । न तु चरणेऽनादरः । **अतोऽन्य-दार्तं**-अतः-एतस्माद्ब्राह्मण्यावस्थानात् अशनायाद्यतीतात्मस्वरूपात् । नित्यतृप्तादन्यत् अविद्याविषयमे-षणालक्षणं वस्त्वन्तरं आर्तं-विनाशि आर्तिपरिगृहीतं स्वप्नमायामरीच्युदकसमं असारं, आत्मैवैकः केवलो नित्यमुक्तः इति ।

एवं षष्ठाध्यायेऽपि—

**मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन ।**

**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥**

एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् ।
विरजः पर आकाशादज आत्मा महान् ध्रुवः ।
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्च्छब्दान् वाचो विग्लापनं हि तत् । इति ।

अस्यार्थः—ब्रह्मदर्शने साधनमुच्यते—मनसैव परमार्थज्ञानसंस्कृतेन आचार्योपदेशपूर्वकञ्च अनु द्रष्टव्यं, तत्र च दर्शनविषये ब्रह्मणि न इह नाना अस्ति किञ्चन, नकिञ्चिदप्यस्ति, अनानात्वे नानात्वमध्यारोपयत्यविद्यया, स मृत्योः मरणात् मृत्युं मरणं आप्नोति, कोऽसौ, यः इह नानेव पश्यति-अविद्यया मिथ्यारोपणव्यतिरेकेण नास्ति परमार्थतो द्वैतमित्यर्थः । यस्मादेवं तस्मादेकधैव-एकेनैव प्रकारेण विज्ञानघनैकरसप्रकारेण अकाशवन्निरन्तरेण अनुद्रष्टव्यम्, यस्मादेतत्-ब्रह्म अप्रमयं-अप्रमेयं सर्वैकत्वात्, अन्येन ह्यन्यत् प्रमीयते, इदञ्चैकमेव, अतोऽप्रमेयं ध्रुवं-नित्यं कूटस्थं अविचलितमित्यर्थः। ननु विरुद्धमिदमुच्यते अप्रमेयं ज्ञायते इति च । ज्ञायते इति प्रमाणैर्मीयत इत्यर्थः, अप्रमेयमिति च तत्प्रतिषेधः । नैष दोषः-अन्यवस्तुवत् अनागमप्रमाणप्रमेयत्वप्रतिषेधार्थत्वात् । यथा अन्यानि वस्तून्यागमनिरपेक्षैः प्रमाणैः विषयीक्रियन्ते न तथेदमात्मतत्त्वं प्रमाणान्तरैर्विषयीकर्तुं शक्यते। सर्वस्यात्मत्वे केन कं पश्येत् विजानीयादिति प्रमातृप्रमाणादिव्यापारप्रतिषेधेनैव आगमोऽपि विज्ञापयति, न त्वभिधानाभिधेयलक्षणवाक्यार्थधर्मांगीकरणेन। तस्मान्नागमेनापि स्वर्गादिवत् तत् प्रतिपाद्यते। प्रतिपादयित्रात्मभूतं हि तत्। प्रतिपादयितुः प्रतिपादनस्य प्रतिपाद्यविषयत्वात्। भेदे हि तद्भवति । ज्ञानञ्च तस्मिन् परात्मभावनिवृत्तिरेव, न तस्मिन् साक्षादात्मभावः कर्तव्यः, विद्यमानत्वादात्मभावस्य, नित्यो ह्यात्मभावः सर्वस्यातद्विषय इव प्रत्यवभासते। तस्मात् अतद्विषयावभासनिवृत्तिव्यतिरेकेण न तस्मिन् आत्मभावो विधीयते। अन्यात्मभावनिवृत्तौ त्वात्मभावः स्वात्मनि स्वाभाविको यः स केवलो भवतीति आत्मा ज्ञायत इत्युच्यते, स्वतश्चाप्रमेयो न प्रमाणान्तरेण विषयीक्रियते, इति उभयमप्यविरुद्धमेव। विरजः-विगतरजाः रजो नाम धर्माधर्मादिमलं तद्रहित इत्येतत्, परः—व्यतिरिक्तः सूक्ष्मो व्यापी वा आकाशात्—अव्याकृताख्यात् अजः—न जायते, जन्मप्रतिषेधात् उत्तरेऽपि भावविकाराः प्रतिषिद्धाः, सर्वेषां जन्मादित्वात्, आत्मा महान् - परिमाणतो महत्तरः सर्वस्मात् । ध्रुवः—अविनाशी । तमीदृशमात्मानमेव धीरः—धीमान् विज्ञाय उपदेशतः शास्त्रतश्च प्रज्ञां—शास्त्राचार्योपदिष्टविषयां जिज्ञासापरिसमाप्तिकरीं कुर्वीत ब्राह्मणः । एवं

प्रज्ञाकरणसाधनानि संन्यासशमदमोपरतितितिक्षासमाधानानि कुर्यादित्यर्थः। नानुध्यायात्—नानुचिन्तयेत् बहून्—प्रभूतान् शब्दान् तत्र बहुत्वप्रतिषेधात् केवलात्मैकत्वप्रतिपादकाः स्वल्पाः शब्दा अनुज्ञायन्ते "ओमित्येवं ध्यायथ आत्मानमन्या वाचो विमुञ्चथ" इति चाथर्वणे। वाचो विग्लापनं—विशेषेण ग्लानिकरं श्रमकरं हि-यस्मात् तत्—बहुशब्दाभिध्यानमिति।

**ब्रह्मोपनिषदि**—अत्याश्रमस्थस्य परमहंसस्य बहिस्सूत्रं शिखाञ्च हित्वा ब्रह्मैव सूत्रत्वेन शिखात्वेन धारणीयमित्याम्नातम्। **सशिखं वपनं कृत्वा बहिस्सूत्रं त्यजेद्बुधः** इत्यादिना स यज्ञः स च यज्ञवित् **स यज्ञस्तं यज्ञनं विदुः** इत्यन्तेन।

तथा हि—

**यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत्।**

ननु ब्रह्म सूत्रमिति कथं धारणीयमित्यत आह—

**सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम्।**

सूचनात् सर्वजगत्पटारंभकत्वात् सूत्रम्।

**तत् सूत्रं विदितं येन स विप्रो वेदपारगः।** तत् सूत्रं सूत्रशब्दाभिधेयं परं ब्रह्म विदितं अहमस्मीति साक्षात्कृतं येन अधिकारिणा सः वेदपारगः सर्वज्ञः।

**येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव।** येन सूत्रेण ब्रह्मणा सर्वं निखिलमिदं भूतभौतिकप्रपञ्चजातं प्रोतं प्रकर्षेणोतं अनुविद्धं वर्तते इत्यर्थः।

**तत्सूत्रं धारयेद्योगी योगवित्तत्वद [र्शिवान्] र्शनात्।**
**बहिस्सूत्रं त्यजेद्विद्वान् योगमुत्तममास्थितः।**

योगी—जीवब्रह्माभेदज्ञानवान् योगं—जीवब्रह्माभेदं उत्तमं उत्कृष्टमास्थितः तद्भावेन तत्त्वे सर्वदा वर्तमानः।

इदानीमस्य धारणे सर्वदा पवित्रतामाह—

**ब्रह्मभावमिदं सूत्रं धारयेद्यः स चेतनः।**
**धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत्।**

ब्रह्मभावं—ब्रह्मस्वभावं इदं—बुद्धेः द्रष्टृ प्रत्यग्रूपं

इदानीं बाह्यशिखायज्ञोपवीतरहिता अपि परमहंसाः शिखिनो यज्ञोपवीतिनश्चेत्याह—

**सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।**
**ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।**

अन्तर्गतं—बुद्ध्याद्यन्तर्गतं ज्ञानयज्ञोपवीतिनां—अहंब्रह्मास्मीतिबोधयज्ञोपवीतिनाम् । ते च यज्ञोपवीतिनः, चशब्दाच्छिखिनश्च ।

ननु सकृच्छिखां यज्ञोपवीतञ्च त्यक्त्वा किं पुनरन्यद्यज्ञोपवीतादिकमादेयम्? नेत्याह—

**ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।**
**ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ।**

ननु बाह्यमपि शिखायज्ञोपवीतादिकमस्त्वित्यत आह—ज्ञानमेवेति । न त्वन्यद्बाह्ययज्ञोपवीतादि । ननु तथाऽपि अन्येभ्यः केशधारिभ्यः न्यूनोऽयं उपचरितशिखित्वादित्यत आह—

**अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।**
**स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ।**

विद्वान् - ब्रह्मसाक्षात्कारवानेव शिखी मुख्यशिखावान् ज्ञानमयशिखावान् अग्निवत् । नेतरे-ज्ञानमयशिखावर्जिताः, मुख्यशिखिन इति शेषः, किन्तु केशधारिणः—स्त्रीशूद्रादिवत् केशपुञ्जधारिणः । केशधारित्वेन चेत् मुख्यशिखित्वं स्त्रीशूद्राणामे[व] तत्स्यादित्यर्थः । ननु तर्हि सर्वैः शिखायज्ञोपवीतादिकं परित्याज्यमित्यत आह—

**कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।**
**तेभिर्धार्यमिदं सूत्रं क्रियांगं तद्धि वै स्मृतम् ।**

तेभिः—तैः

ननु ब्राह्मणादीनाञ्चेदिदं शिखायज्ञोपवीतादिकं सर्वक्रियांगत्वेनावगतं तर्हि ज्ञानशिखिनो ज्ञानयज्ञोपवीतिनश्च न ब्राह्मण्यमित्यर्थसिद्धमित्यत आह—

**शिखा ज्ञानमयी यस्य उपवीतञ्च तन्मयम् ।**
**ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ।**

इदानीमन्तर्गतं सूत्रं स्वयमाह—

**इदं यज्ञोपवीतं तु परमं यत् परायणम् ।**
**स विद्वान् यज्ञोपवीती स्यात् स यज्ञस्तं यज्वनं विदुः ।**

इदं—बुद्धेर्द्रष्टृ यज्ञोपवीतं तु - परमात्मना तादात्म्यलक्षणसामीप्यमागतं, जैवमेव कर्तृत्वादि-रहितं रूपं नत्वन्यत्। इदंशब्दोक्तमाह—परमं—उत्कृष्टं यत्—प्रसिद्धं स्वयंप्रकाशं परायणं—अविद्यायाः सकार्याया उत्कृष्टाश्रयभूतं, सः—अनेन उक्तेन अभिन्नः विद्वान् - इदमहमस्मीति ज्ञानवान् यज्ञोपविती स्यात्। स्पष्टम्। न केवलं यज्ञोपवीती, किन्तु स उक्तो विद्वान् यज्ञः—दर्शपूर्णमासज्योतिष्टोमादिलक्षणः, स्यादित्यनुषङ्गः। तं—यज्ञोपवीतिनं विद्वांसं सर्वात्मत्वेन यज्वनं—यागानां कर्तारं विदुर्जानन्तीति। ब्रह्म विद्वानेव सर्वात्मना भवतीत्यर्थः।

**कैवल्योपनिषदि** आत्मनस्सर्वस्मात् प्रपञ्चात् वैलक्षण्यमाह—

**त्रिषु धामसु यद्भोज्यं भोक्ता भोगश्च यद्भवेत् ।**
**तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः ।**

अस्यार्थः—त्रिषु-जागरणस्वप्नसुषुप्तेषु धामसु-स्थानेषु यत् प्रसिद्धं भोज्यं-स्थूलप्रविवि-क्तानन्दरूपं भोक्ता-विश्वतैजसप्राज्ञाख्यः भोगश्च—स्थूलप्रविविक्तानन्दभोगोऽपि, चशब्दात् अधिदैवादिविभागोऽपि। यत्-उक्तं त्रिधामभोग्यादिप्रपञ्चजातं भवेत्। स्पष्टम्। तेभ्यः—त्रिधामा-दिभ्यः विलक्षणः—विपरीतलक्षणः। वैलक्षण्यमाह—साक्षी-स्वाध्यस्तस्य विश्वस्य द्रष्टा चिन्मात्रः—चिदेकरसः अहं—अहंप्रत्ययव्यवहारयोग्यः सदाशिवः—कैवल्यात्मा नित्यकल्याणरूपो महेश्वरः। प्रपञ्चवैलक्षण्यमुक्त्वा इदानीं जगज्जन्मादिकारणत्वमपि स्वस्याह—

**मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।**
**मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ।**

मय्येव—मत्त एव ब्रह्माभिन्नात् नत्वन्यस्मात् सकलं—निखिलं भूतभौतिकप्रपञ्चजातं जातं उत्पन्नं मयि-ब्रह्माभिन्ने सर्वं-निखिलं विश्वं प्रतिष्ठितं—प्रकर्षेण स्थितम्। मयि सर्वं लयं याति-विनाशं गच्छति तत् तस्मात् सर्वजगज्जन्मस्थितिध्वंसकारणत्वात् ब्रह्म-बृहत् देशकाल

वस्तुपरिच्छेदशून्यं अद्वयं-ज्ञातृज्ञेयादिविभागशून्यं अस्मि-भवामि अहं-ब्राह्मणोऽवगन्ता। ब्रह्मैवाहमित्यर्थः।

जाबालोपनिषद्यपि—

तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयः अव्यक्तलिंगा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः, अभूवन्निति शेषः। इदानीन्तनोऽपि परमहंसः एवं भूयादित्याह श्रुतिः। **त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतञ्चेत्येतत् सर्वं भूःस्वाहेत्यप्सु परित्यज्य आत्मानमन्विच्छेत्।** श्रवणमननादिभिरिति शेषः। तस्यावस्थानप्रकारमाह—**यथाजातरूपधरो निर्द्वन्द्वो निष्परिग्रहः तत्त्वब्रह्ममार्गे सम्यक्संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तः** लज्जयेति शेषः **भैक्षमाचरन् उदरपात्रेण लाभालाभौ समो भूत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाऽग्निहोत्रनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेषु अनिकेतवास्यप्रयत्नः** आत्मज्ञानसाधनव्यतिरिक्ते इति शेषः **निर्ममश्शुक्लध्यानपरायणोऽध्यात्मनिष्ठः शुभाशुभकर्मनिर्मूलनपरः** ज्ञानाग्निनेति शेषः एवंभूतो यः इति च शेषः **सन्न्यासेन देहत्यागं करोति स परमहंसो नाम** इति।

श्वेताश्वतरोपनिषदि—

**निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।**
**अमृतस्य परं सेतुं दग्धेन्धनमिवानलम्॥**
**यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।**
**तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति।** इति।

अस्यार्थः—निष्कलं—कलाः अवयवाः निर्गताः यस्मात् तन्निष्कलं, निरवयवमित्यर्थः। निष्क्रियम्। शान्तं - उपसंहृतसर्वविकारम्। निरवद्यं - अगर्हणीयं - स्वाभाविकदोषरहितमित्यर्थः। निरञ्जनं - निर्लेपं—आगन्तुकदोषरहितमित्यर्थः। अमृतस्य - अमृतत्वस्य मोक्षस्य प्राप्तये सेतुरिव सेतुः, संसारमहोदधेरुत्तरणोपायत्वात् तं अमृतस्य परं सेतुं दग्धेन्धनमनलमिव देदीप्यमानं झटझटायमानम्। किमिति तमेव विदित्वा मुच्यते नान्येनेति? तत्राह—यथा चर्म संको-

चयिष्यन्ति तद्वदाकाशं अमूर्तं व्यापिनं यदा यदि वेष्टयिष्यन्ति - संवेष्टयिष्यन्ति मानवाः तदा देवं ज्योतिर्मयं अनुदितानस्तमितज्ञानात्मनाऽवस्थितं अशनायाद्यसंस्पृष्टं परमात्मानमविज्ञाय दुःखस्य—आध्यात्मिकादिभेदभिन्नस्य अन्तो—विनाशो भविष्यति। आत्माज्ञाननिमित्तत्वात् संसारस्य यावत् परमात्मानमात्मत्वेन न जानाति तावत् तापत्रयाभिभूतो मकरादिभिरिव रागादिभिस्ततस्ततः कृष्यमाणः प्रेतनिरयमनुष्यादिजातिष्वज एव जीवभावमापन्नो मोमुह्यमानः संसरति। यदा पुनर-पूर्वानपरं नेतिनेत्यादिलक्षणमशनायाद्यसंस्पृष्टमनुदितानस्तमितज्ञानात्मनाऽवस्थितं पूर्णानन्दं परमात्मानमात्मत्वेन साक्षात् जानाति तदा निरस्ताज्ञानतत्कार्यः पूर्णानन्दो भविष्यतीत्यर्थः। **तदा शिवमविज्ञायेति पाठान्तरे** शिवशब्देन निरतिशयपरमानन्दस्वरूपं ब्रह्मैवोच्यते इति।

**हंसोपनिषदि—**

**सदा अयं सर्वेषु देहेषु व्याप्तो वर्तते यथा ह्यग्निः काष्ठेषु तिलेषु तैलमिव। तं विदित्वा न मृत्युमेतीति॥**

अस्यार्थः—अयं-हंसरूपः परमात्मा सदा सर्वेषु देहेषु—ब्रह्मादिस्तम्बपर्यन्तेषु देहेषु कालत्रयेऽपि तत्तदधिष्ठानतया व्याप्तो वर्तते। ननु सर्वेषामहमस्मिपरंब्रह्मेति किमिति नानुभवः? तत्राह—यथा ह्यग्निः काष्ठेष्विति। यथा काष्ठेषु अग्निरनभिव्यक्तस्सन् मथनेनाभिव्यज्यते, यथा वा तिलेषु तैलमनभिव्यक्तं सत् यन्त्रनिष्पीडनेनाभिव्यज्यते, एवमात्मा सर्वत्र व्याप्तोऽपि अविद्यया तिरोहितस्सन् श्रवणमननादिजन्यसाक्षात्कारेण अभिव्यज्यते। एतादृशात्मज्ञानस्य प्रयोजनमाह—तं विदित्वा न मृत्युमेतीति। तं परमात्मानं प्रत्यगभिन्नत्वेन अहमस्मिपरंब्रह्मेति विदित्वा मृत्यु-जननमरणप्रवाहरूपं संसारं पुनर्न आप्नोति संसारमूलाज्ञानस्य ज्ञानेन नाशादिति।

**आरुणिकोपनिषदि—**

**केन भगवन् कर्माण्यशेषतो विसृजानी**त्यारुणिना पृष्टः **तं होवाच प्रजापतिः तव पुत्रा**नित्यादिना **शेषं विसृजेत्** इत्यन्तेन सामान्यतः संन्यासमभिधाय विशेषेणाह-**गृहस्थो ब्रह्मचारी वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेत् गायत्रीञ्च स्ववाचाऽग्नौ समारोपये**दित्यादिना **इति होवाचे**त्यन्तेन।

गायत्रीञ्च स्ववाचाऽग्नौ समारोपयेदित्यादेरयमर्थः—गायत्रीञ्च - प्रत्यहं जप्यमानां सन्ध्यात्रये सावित्रीं गायत्रीच्छन्दस्कां चतुर्विंशत्यक्षरात्मिकां चशब्दादन्यदपि मन्त्रजातं स्ववाचाग्नौ—स्वस्य संन्यासस्य कर्तुः वाचा—वाक् वागेव अग्निः—स्ववाचाग्निः तस्मिन् ओंभूःसावित्रीं प्रवेशयामीत्यादिमन्त्रैस्समारोपयेत्—समारोपणं कुर्यादिति । अतः—अस्मात् परित्यागात् ऊर्ध्वं अनन्तरं अमन्त्रवत्-मन्त्रराहित्येन आचरेत्-स्नानाचमनादि कुर्यात् । ऊर्ध्वगमनं - औन्नत्यं विद्या-वित्तादिना उत्कर्षसंपादनमित्यर्थः । विसृजेत् । स्पष्टम् । त्रिसन्ध्यादौ—तिस्रस्संध्याः प्रातर्मध्यान्हा-पराह्णकालगताः, तासामादौ—पूर्वं स्नानमाचरेत्, सन्धिं-सन्ध्यां सन्धौ भवं सन्ध्यावन्दनादिकं कर्म यथा अवश्यं करणीयं तद्वत् समाधौ-समाधिकाले सन्धिं अहंब्रह्मास्मीत्येवं बुद्धिसमा-धानरूपं, आत्मनि - आनन्दात्मनि स्वयंप्रकाशे सर्वकर्मशून्ये नैष्कर्म्यमार्गेणाचरेत्—सर्वतः कुर्यात् । अथवा, सन्धि—छिद्रं जीवब्रह्मणोर्भेदरूपं समाधौ—भेदशून्ये आत्मनि स्वरूपे आचरेत्—सर्वतो भक्षयेत् । भेदगन्धं निवारयेदित्यर्थः । सर्वथा बाह्यस्य सन्ध्यावन्दनादेः कर्मणः परित्यागः सन्धिमित्यादिवाक्येनाभिधीयते ।

गर्भोपनिषदि—

अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ।
यदि योन्यां प्रमुञ्चामि तं प्रपद्ये महेश्वरम् ।

अस्यायमर्थः—अशुभस्य-जननमरणादिदुःखात्मकसंसारस्य तन्मूलस्य च योऽयं क्षयः—आत्यन्तिकविनाशः तस्य कर्तारं, महाफलत्वेन प्रसिद्धा या मुक्तिः परमानन्दरूपा तस्याः प्रदायिनं — अभिव्यञ्जकं स्वात्मगोचरवेदान्तमहावाक्यजन्याप्रतिबन्धसाक्षात्काररूपवृत्त्या-रूढतया, तं—सर्वप्रत्यगात्मत्वेन प्रसिद्धं महेश्वरं-परमात्मानं प्रपद्ये—प्रत्यगात्मत्वेन भजामि श्रवणमननादिसाक्षात्कारपुरस्सरं तत्साधनैर्वैराग्यादिगुरुशुश्रूषादिपुरस्सरञ्च । यदि योन्यां प्रमुञ्चामि—योनेर्बहिर्निर्गतःस्यामिति गर्भस्थस्य पर्यालोचनम् ।

नारायणोपनिषदि—

नित्यो निष्कलो निराख्यातो निर्विकल्पो निरञ्जनः ।
शुद्धोऽद्वितीयो न द्वितीयोऽस्ति कश्चित् य एवं वेद ।

इति । नित्यः विनाशकारणाभावात्, निष्कलः - प्राणादिकलारहितः, निराख्यातः-निर्गताः आख्याताः क्रियापदानि यस्मात् स निराख्यातः, अनेन सिद्धवस्तुरूपता उक्ता। निर्विकल्पः-निर्गताः विकल्पाः कोटिद्वयात्मका वस्तुशून्या वा प्रत्यया यस्मात् स निर्विकल्पः, अनेन अनेकप्रकारेण ज्ञानागम्यत्वमुक्तम्, निरञ्जनः-कारणशून्यः, शुद्धः-नामरूपक्रियाहीनः, अद्वितीयः-स्वव्यतिरिक्त-भावाभावरहितः, न द्वितीयोऽस्ति कश्चित्-उक्तान्नारायणात् सर्वाधिष्ठानभूतात् द्वितीयः कश्चि-द्भावोऽभावो वा द्वितीयसंख्यापूरणो नास्ति, य एवं वेद-यो नारायणज्ञः एवमद्वितीयं नारायणं जानाति तस्य नारायणात्मनः न द्वितीयोऽस्ति कश्चित्, उक्तमेव फलत्वेन पठनीयमिति ।

**परमहंसोपनिषदि** परमहंसस्य मुख्यचर्या प्रदर्श्यते **कोयं मुख्य** इत्यादिना ।

योगिनः परमहंसस्य मुख्यं कल्पं प्रश्नोत्तराभ्यां दर्शयति-**कोयं मुख्य इति चेदयं मुख्यः न दण्डं न शिखां न यज्ञोपवीतं नाच्छादनं चरति परमहंसः** इति । न शिखामित्यादिषु छान्दसो लिङ्गव्यत्ययोऽनुसन्धेयः । यथा विविदिषुः परमहंसः शिखायज्ञोपवीताभ्यां रहितो मुख्यः तथा योगी दण्डाच्छादनाभ्यामपि रहितः सन् मुख्यो भवति । दण्डस्य वैणवादि लक्षणञ्च परीक्षितुं दण्डादिकं संपादयितुं रक्षितुञ्च चित्ते व्यापृते सति चित्तवृत्तिनिरोधलक्षणो योगो न सिध्येत् । तच्च न युक्तम् । न हि वरघाताय कन्याया उद्वाहः इति न्यायात् । आच्छादनाभावे शीतादिबाधायाः कः प्रतीकार इत्याशंक्याह **न शीतं न चोष्णं न सुखं न दुःखं न मानाव-माने च षडूर्मिवर्जनम्** इति । निरुद्धाशेषचित्तवृत्तेः योगिनः शीतं नास्ति, तत्प्रतीत्यभावात् । यथा लीलायामासक्तस्य बालस्य आच्छादनरहितस्यापि हेमन्तशिशिरयोः प्रातःकाले शीतं नास्ति, परमात्मन्यासक्तस्य योगिनः शीताभावः घर्मकाले उष्णाभावश्च तथैवावगन्तव्यः । वर्षाभावसमुच्च-यार्थश्चकारः। शीतोष्णयोरप्रतीतौ तज्जन्ययोःसुखदुःखयोरभावः उपपन्नः। मानः पुरुषान्तरेण संपादित स्सत्कारः, अवमानः तिरस्कारः । यदा योगिनः स्वात्मव्यतिरिक्तं पुरुषान्तरमेव न प्रतीयते तदा मानावमानौ दूरादपेतौ । चकारः शत्रुमित्ररागद्वेषादिद्वन्द्वाभावं समुच्चिनोति। षडूर्मयः—क्षुत्पिपासे शोकमोहौ जरामरणे च । तेषां त्रयाणां द्वन्द्वानां क्रमेण प्राणमनोदेहधर्मत्वात् आत्मतत्त्वाभिमुखस्य योगिनस्तद्वर्जनं युज्यते । नन्वस्त्वेवं समाधिदशायां शीताद्यभावः, व्युत्थानदशायान्तु निन्दा-दिक्लेशः संसारिणमिव एनं बाधत एवेत्याशंक्याह—**निन्दागर्वमत्सरदंभदर्पेच्छाद्वेषसुखदुःख-कामक्रोधलोभमोहहर्षासूयाहंकारादींश्च हित्वेति** । विरोधिभिः पुरुषैः स्वस्मिन्नापादितदोषो-

क्तिर्निन्दा। अन्येभ्योऽधिकोऽहमिति चित्तवृत्ति गर्वः। विद्याधनादिभिरन्यैरसदृशो भवामीति बुद्धिर्मत्सरः। परेषामग्रे जपध्यानादिप्रकटनं डम्भः। भर्त्सनादिबुद्धिर्दर्पः। धनाद्यभिलाषः इच्छा। शत्रुवधादिबुद्धिः द्वेषः। अनुकूलद्रव्यादिलाभेन बुद्धिस्वास्थ्यं सुखम्। तद्विपर्ययो दुःखम्। योषिदभिलाषः कामः। कामितार्थविघातजन्यो बुद्धिक्षोभः क्रोधः। लब्धस्य धनस्य त्यागासहिष्णुत्वं लोभः। हितेषु अहितत्वबुद्धिः अहितेषु हितत्वबुद्धिः मोहः। चित्तगतसुखाभिव्यञ्जकमुखविकासादिहेतुर्धीवृत्तिर्हर्षः। परगुणेषु दोषत्वारोपणमसूया। देहेन्द्रियसंघाते स्वात्मत्वभ्रमोऽहंकारः। आदिशब्देन भोग्यवस्तुषु ममकारसमीचीनत्वादिबुद्धयो गृह्यन्ते। एतान्निन्द्रादीन् हित्वा वासनाक्षयाभ्यासेन परित्यज्य अवतिष्ठते इति शेषः। ननु विद्यमाने स्वदेहे तत्परित्यागो न संभवतीत्याशंक्याह—**स्ववपुः कुणपमिव दृश्यते यतस्तद्वपुरपध्वस्तं** इति। स्वं-पूर्वं यत् स्वकीयं वपुः तदिदानीं योगिनः स्वात्मचैतन्यात् पृथग्भूतत्वेन कुणपमिवावलोक्यते। यथा लोकः स्पर्शभीत्या शवदेहं दूरे स्थितोऽवलोकयति तथाऽयं योगी तादात्म्यभ्रान्त्युदयभीत्या सावधानो देहं चिदात्मनः सकाशात् निरन्तर विविनक्ति। यतः कारणात् तद्वपुराचार्योपदेशागमानुभवैरपध्वस्तं—चिन्दात्मनस्सकाशात् निराकृतम्, ततश्चैतन्यवियुक्तस्य देहस्य शवतुल्यतया दृश्यमानत्वात् सत्यपि देहे निन्दादित्यागो घटते इत्यभिप्रायः। ननु उत्पन्नो दिग्भ्रमः सूर्योदयदर्शनेन विनष्टोऽपि यथा कदाचिदनुवर्तते तथा देहात्मत्वसंशयाद्यनुवृत्तौ निन्दादिक्लेशः पुनः प्रसज्येतेत्याशंक्याह—**संशयविपर्ययमिथ्याज्ञानानां यो हेतुस्तेन नित्यनिवृत्त इति।** आत्मा कर्तृत्वादिधर्मोपेतः तद्रहितो वा इत्यादिकं संशयज्ञानं, देहादिरूप आत्मेति विपरीतज्ञानं, एतदुभयं तु भोक्तृविषयं, मिथ्याज्ञानं तु भोज्यविषयमत्र विवक्षितम्। तच्चानेकविधम्—अनित्ये गिरिनदीसमुद्रादौ नित्यत्वभ्रान्तिरेका, अशुचौ पुत्रभार्यादिशरीरे शुचित्वभ्रान्ति द्वितीया, दुःखे कृषिवाणिज्यादौ सुखत्वभ्रान्तिस्तृतीया, गौणात्मनि पुत्रादौ अन्नमयादिके च मुख्यात्मत्वभ्रान्तिः चतुर्थी, एषां संशयादीनां हेतुः अद्वितीयब्रह्मात्मावारकमज्ञानं तद्वासना च, तत्राज्ञानं योगिनः परमहंसस्य महावाक्यार्थावबोधेन निवृत्तं, वासना तु योगाभ्यासेन निवृत्ता। उदाहृतायां दिग्भ्रान्तौ तु अज्ञाने निवृत्तेऽपि वासनायाः सद्भावात् यथापूर्वं भ्रान्तिव्यवहारः। योगिनस्तु हेतुद्वयराहित्यात् कुतः संशयादयोऽनुवर्तेरन्। तमेवमनुवृत्त्यभावमभिप्रेत्य **तेन**-हेतुद्वयेन **योगी नित्यनिवृत्तः** इत्युक्तम्। अज्ञानवद्वासनानिवृत्तेरुत्पत्तौ तस्या निवृत्तेर्विनाशाभावात् नित्यत्वं द्रष्टव्यम्। तन्नित्यत्वे

हेतुमाह-**तन्नित्यबोध** इति । सर्वनामत्वात् प्रसिद्धार्थवाचितच्छब्दोऽत्र सर्ववेदान्तप्रसिद्धं परमात्मानमाचष्टे । अस्मिन् परमात्मनि नित्यो बोधो यस्य योगिनस्सोऽयं तन्नित्यबोधः । योगी हि 'विज्ञाय प्रज्ञां कुर्वीत'इति श्रुतिमनुसृत्य चित्तविक्षेपान् योगेन परिहृत्य नैरन्तर्येण परमात्मविषयामेव प्रज्ञां करोति, अतो बोधस्य नित्यत्वात् बोधाद्विनाश्ययोर्निवृत्तिर्नित्येत्यर्थः । बुध्यमानस्य परब्रह्मणः तार्किकेश्वरवत् तटस्थत्वशङ्कां वारयति-**तत्स्वयमेवावस्थितिरिति** । यद्वेदान्तवेद्यं परं ब्रह्मास्ति तत् स्वयमेव न तु स्वस्मादन्यदित्येवं निश्चित्य योगिनोऽवस्थितिर्भवति ।तस्य योगिनः ब्रह्मानुभवप्रकारं दर्शयति - **तं शान्तमचलमद्वयानन्दविज्ञानघनएवास्मि तदेव परमं धामेति** । तमित्यादिपदत्रये द्वितीया प्रथमार्थे द्रष्टव्या । यः परमात्मा शान्तः क्रोधादिविक्षेपरहितः अचलः गमनादिक्रियारहितः अद्वयः स्वगतसजातीयविजातीयद्वैतशून्यः सच्चिदानन्दैकरसोऽस्ति स एवाहमस्मि, तदेव ब्रह्मतत्त्वं मम योगिनः परं धाम-वास्तवस्वरूपं, न त्वेतत् कर्तृत्वभोक्तृत्वादियुक्तं, तस्य मायाकल्पितत्वात् । यदि योगिनः पूर्वाश्रमप्रसिद्धाचार्यपितृभ्रात्रादयः कर्मिणः श्रद्धाजडाः शिखायज्ञोपवीतसन्ध्यावन्दनराहित्येन पाषण्डित्वमारोप्य व्यामोहयेयुः तदानीं मोहानुत्पत्तये योगिनि वर्तमाननिश्चयं दर्शयति-**तदेव शिखा च तदेवोपवीतञ्च परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एव विभग्नः सा सन्ध्येति** । यत् वेदान्तवेद्यस्य परब्रह्मणो ज्ञानं तदेव कर्माङ्गभूतबाह्यशिखायज्ञोपवीतस्थानीयम् । अन्येऽपि मन्त्रद्रव्यलक्षणे कर्माङ्गे चकाराभ्यां समुच्चीयेते । शिखाद्यंगसाध्यैः कर्मभिरुत्पन्नं यत् स्वर्गादिसुखं तत् सर्वं ब्रह्मज्ञानेनैव लभ्यते । विषयानन्दस्य सर्वस्य ब्रह्मानन्दलेशत्वात् । तस्मात् योगिनः शिखायज्ञोपवीते विद्येते । तथैव संध्याऽपि विद्यते । यश्शास्त्रगम्यः परमात्मा यश्चाहंप्रत्ययगम्यो जीवात्मा तयोरेकत्वज्ञानेन महावाक्यजन्येन तयोः भ्रान्तिप्रतीतो बोधः विशेषेण भग्न एव । पुनर्भ्रान्त्यनुदयो भङ्गस्य विशेषः । येयमेकत्वबुद्धिः सेयमुभयोरात्मनोस्सन्धौ जायमानत्वात् सन्ध्येत्युच्यते । अहोरात्रयोस्सन्धावनुष्ठेया क्रिया यथा सन्ध्या तद्वत् । एवञ्च सति योगी श्रद्धाजडैर्न व्यामोहयितुं शक्य इति ।

**अमृतबिन्दूपनिषदि—**

**तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।**
**तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम् ।**

निर्विकल्पमनन्तश्च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनादिश्च यत् ज्ञात्वा मुच्यते बुधः ।

अस्यार्थः—तदेव - सच्चिदानन्दरूपमेव ब्रह्म, निष्कलं - कलारहितम्, ब्रह्म - सर्वस्मादभ्यधिकं, निर्विकल्पं - निर्गताः विकल्पाः इदमनिदञ्चेत्यादिरूपा वस्तुशून्या वा प्रत्ययाः यस्मात् तन्निर्विकल्पं, निरञ्जनं - निर्गतं अञ्जनमविद्या सर्वकारणं यस्मात् तन्निरञ्जनम् । एतादृशं ब्रह्म ब्रह्मवादिनः प्रसिद्धमित्याह-तत्-उक्तं प्रसिद्धं ब्रह्म - सर्वपरिच्छेदशून्यं बृहत् अहं - अस्मत्प्रत्ययव्यवहारयोग्यः स्वयंप्रकाशमानचिदानन्दात्मब्रह्मणो भेदरहितः इत्यनेन प्रकारेण ज्ञात्वा-साक्षात्कृत्य ब्रह्म - उक्तं स्वात्माव्यतिरिक्तं संपद्यते—सम्पन्नो भवति। ब्रह्मैव सन् ब्रह्माप्येतीति श्रुत्यन्तरात् । ध्रुवं—कूटस्थं अविनाशीत्यर्थः । पुनरप्यादरार्थं तदेवाह श्रुतिः—निर्विकल्पं । व्याख्यातम् । अनन्तश्च - देशकालवस्तुपरिच्छेदशून्यं चशब्दात् सत्यज्ञानादिलक्षणमपि । हेतुदृष्टान्तवर्जितम्—हेतुः तृतीयान्तं पञ्चम्यन्तं वा वचनं कस्यचिदर्थस्य साधकं, दृष्टान्तः यस्य कथनेन लौकिकपरीक्षकबुद्धिप्रसादः, ताभ्यामनुमानं विवक्षितं, तद्वर्जितं—अनुमानागम्यमित्यर्थः । न केवलमनुमानागम्यं किन्तु अप्रमेयं—प्रमाणमात्रागम्यं, अनादिञ्च आदिः—कारणं तच्छून्यमनादिम्; कारणरहितमित्यर्थः । चशब्दात् विकारान्तरशून्यमपि । यत्—प्रसिद्धं ज्ञात्वा—साक्षात्कृत्य मुच्यते—अविद्यादिभ्यो विमुक्तो भवति बुधः—ज्ञानी ।

**अमृतनादोपनिषदि—**

शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनःपुनः ।
परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् । इति ।

अस्यार्थ :—शास्त्राणि-ऋगादिनानाशाखाभेदभिन्नानि सांगविद्योपविद्यानि आत्मैक्यावगतिफलानि अधीत्य-पाठतः अर्थतश्च स्वाधीनानि कृत्वेत्यर्थः, मेधावी एतद्धारणाशक्तिमान् अभ्यस्य च पुनःपुनः-स्वाधीनपाठार्थान्यापि संवादाय स्वगुरूणां समीपे श्रोतृभिः सह वा स्वशिष्याणामुपदेशार्थं वा भूयो भूयः आवृत्तिं कृत्वा। चशब्दात् संशयविपर्ययनिवृत्तावपि। परमं निरतिशयं अनुपचरितमित्यर्थः। ब्रह्म-देशकालवस्तुपरिच्छेदशून्यं विज्ञाय-विशेषेण इदमित्थं नान्यथा अहमेतत् न तु मत्तोऽन्यदित्यादिनाऽवगम्य, उल्कावत्-उल्का अलातप्रदीपादिकं, यथा अपवरकान्तःस्थितमण्या-

दिकमवलोकयितुं दीपादिकं हस्ते स्वीकरोति दृष्टे च तस्मिन् परित्यजति तद्वत्, तानि-अधीतानि पुनःपुनरभ्यस्तानि च अथ-परब्रह्मविज्ञानानन्तरं उत्सृजेत्-पलालमिव धान्यार्थी परित्यजेत्। तथा चोक्तमुत्तरगीतासु—

नावार्थी तु भवेत्तावद्यावत् पारं न गच्छति।
उत्तीर्णे च सरित्पारे नावा वा किं प्रयोजनम्।
ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः।
उल्काहस्तो यथा कश्चित् द्रव्यमालोक्य तां त्यजेत्।
ज्ञानेन ज्ञेयमालोक्य पश्चात् ज्ञानं परित्यजेत्।
यथाऽमृतेन तृप्तस्य पयसा किं प्रयोजनम्।
एवं तत्त्वं परं ज्ञात्वा वेदैर्नास्ति प्रयोजनम्। इति।
वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदं वरेण्यम्।
तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां शान्तिश्शाश्वती नेतरेषाम्।
यो योनिं योनिमधितिष्ठत्येको येनेदं पञ्चविधञ्च सर्वम्।
तमीशानं पुरुषं देवमीडयं निदिध्यायात् तारं शान्तिमत्यन्तमेति।

अस्यार्थः—वालाग्रमात्रं - केशाग्रभागपरिमाणं हृदयस्य मध्ये - अन्तःकरणस्य अन्तः विश्वं—विश्वरूपं देवं - स्वयंप्रकाशं जातवेदं - जाताः वेदाः यस्मात् स जातवेदः तं वरेण्यं-वरणीयं तं-अतिसूक्ष्मं महतोऽपि महीयांसं आत्मस्थं-अन्तःकरणे वर्तमानं ये अधिकारिणः अनु-पश्यन्ति शास्त्रगुरूपदेशमनु साक्षात्कुर्वन्ति धीराः—ब्रह्मचर्यादिसाधनसम्पत्त्या धैर्ययुक्ताः तेषां सच्चिदानन्दपरिपूर्णं ब्रह्म आत्मत्वेनावलोकिनां शान्तिः—सकार्याविद्योपरतिः शाश्वती - पुनरुत्थान-शून्या। आत्मज्ञानमन्तरेण अस्याः प्राप्तौ नोपायान्तरमित्याह—नेतरेषां आत्मज्ञानशून्यानां। ननु कोऽसौ वालाग्रमात्र इत्यत आह - यः—प्रसिद्धः योनिंयोनिं शरीरंशरीरं, निश्शेषाणि स्थावर-जंगमशरीराणीत्यर्थः। अधितिष्ठति - अधिष्ठानं करोतीत्यर्थः। न चानन्ते शरीराधिष्ठानेऽप्यस्य भेद इत्याह - एकः—भेदरहितः येन अधिष्ठानभूतेन इदं - विविधशब्दप्रत्ययगम्यं पञ्चविधञ्च-भूतज्ञानेन्द्रियकर्मेन्द्रियरूपेण पञ्चप्रकारं, चकारात् अधिष्ठितं इति शेषः। तं-सर्वाधिष्ठातारं ईशानं—

नियन्तारं पुरुषं - परिपूर्णं देवं - स्वयंप्रकाशं ईड्यं - स्तुत्यं निदिध्यायात् - निचाय्यात्, सर्वोऽपि जनः निरन्तरं ध्यानं साक्षात्कारपर्यन्तं करोत्वित्यर्थः। तारं—स्मरणमात्रात् सर्वेषां संसारार्णवतारकं शान्तिं—उक्तां अत्यन्तं—अत्यर्थं, पुनरावृत्तिशून्यां शान्तिं एति—गच्छतीत्यर्थः।

अथर्वशिखायां—

**पर ईशो वा शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य समाप्ताऽथर्वशिखेति।**

कृत्स्नाथर्वशिखार्थोपसंहाररूपमिदं सर्ववेदान्तार्थसारसंग्रहभूतञ्च। तथाहि—परः उत्कृष्टः ईशो वा—ईश एव परमेश्वरः ध्येय इत्यन्वयः। किंरूपः परमेश्वर इति, आह-शिवः-मङ्गळस्वरूपः निर्मृष्टनिखिलदुःखानुषङ्गः परमानन्दरूप इत्यर्थः एकः—देशकालवस्तुपरिच्छेदशून्यः ध्येयः—साक्षात्काराय स एव ध्यातव्यः। किमर्थमित्यत आह—शिवंकरः—ध्यानजनितसाक्षात्कारवृत्त्यारूढः सन् अज्ञानतत्कार्यनिवृत्तिद्वारा परमानन्दाभिव्यञ्जकः, स्वस्यैव परमानन्दरूपप्रत्यगात्मत्वात्। अत एवाह श्रुतिः सर्वमन्यत्परित्यज्येति। तस्मात् आत्मव्यतिरिक्तस्य सर्वस्य अनात्मत्वेन मिथ्यात्वात् तत्परित्यागपूर्वकं प्रत्यगभिन्नः शिव एव साक्षात्कारपर्यन्तं ध्येय इति भावः।

मैत्रायण्युपनिषदि—

**चित्तमेव हि संसारः तत् प्रयत्नेन शोधयेत्।**
**यच्चित्तस्तन्मयो भवति गुह्यमेतत् सनातनम्।**
**चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम्।**
**प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमक्षयमश्नुते।**
**समासक्तं यथा चित्तं जन्तोर्विषयगोचरे।**
**यद्येवं ब्रह्मणि स्यात् तत् को न मुच्येत बन्धनात्।**
**मनो हि द्विविधं प्रोक्तं शुद्धञ्चाशुद्धमेव च।**
**अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम्।**
**लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम्।**

यदा यात्यमनीभावं तदा तत् परमं पदम् ।
तावन्मनो निरोद्धव्यं हृदि यावत् क्षयं गतम् ।
एतत् ज्ञानञ्च मोक्षश्च शेषास्तु ग्रन्थविस्तराः ।
समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत् सुखं भवेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते । इति ।

अस्यार्थः— रागद्वेषादिदोषकलुषितं चित्तमेव संसारः संसारहेतुर्यतः तत्—तस्मात् प्रयत्नेन शोधयेत्-ज्ञानाभ्याससवैराग्यादिभिः रागादिदोषनिवृत्तिं संपादयेत् । ननु आत्मविषयज्ञानाभ्यासादिना किं प्रयोजनं, तत्राह-यच्चित्तस्तन्मयो भवति—यस्मिन् वस्तुनि चित्तं यस्य स यच्चित्तः । तथा च ब्रह्मणि चेच्चित्तं यस्य स तन्मयो भवति, ब्रह्मैव भवतीत्यर्थः । तथा च श्रुतिः- ब्रह्म वेद ब्रह्मैव भवतीति । गुह्यं-रहस्यं एतत्-उपदेशनं सनातनं-चिरन्तनं गुरुशिष्यपरंपरया प्रवृत्तम् । सर्वात्मज्ञाने जातेऽपि कथं संसारनिवृत्तिः अनादिभवपरंपरोपार्जितकर्मणां बहूनां संभवात् इत्यत आह-चित्तस्य हि प्रसादेनेति। अन्तःकरणप्रसादपूर्वकात्मसाक्षात्कारेण । प्रसादो नाम रागद्वेषनिवृत्तिपूर्वकमेकाग्रता । शुभाशुभं-पुण्यपापात्मकं प्रारब्धव्यतिरिक्तं कर्म हन्ति-नाशयति । तथा च श्रुत्यन्तरम् - **भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे** इति । न केवलं कर्मक्षयः, किन्तु स्वरूपानन्दाभिव्यक्तिरप्यस्तीत्याह-प्रसन्नात्मेति । प्रसन्नः आत्मा अन्तःकरणं यस्य सः प्रसन्नात्मा आत्मनि-परिपूर्णे अभेदेन स्थित्वा सच्चिदानन्दं ब्रह्माहमेवेति, सुखमक्षयं नित्यं अश्नुते-प्राप्नोति । यच्चित्तस्तन्मयो भवतीत्येतत् संग्रहेणोक्तं विवृणोति-समासक्तमिति मन्त्रेण। स्पष्टम् । चित्तं वैराग्यादिना शोधयेदित्युक्तं, तदेव चित्तस्वरूप-निरूपणपुरस्सरं अन्वयव्यतिरेकाभ्यां स्फुटयति-मन्त्रद्वयेन मनोहीत्यादिना । लयविक्षेपरहितं-लयः सुषुप्तिः विक्षेपो जाग्रत्स्वप्नौ, अथवा लयः अज्ञानं विक्षेपो भ्रान्तिज्ञानं, ताभ्यां रहितं मनः कृत्वा अत एव सुनिश्चलं, तस्यैव व्याख्यानं अमनीभावमिति । यदा अमनीभावं याति साधकः तदा तत् परमं पदं साक्षात्कृतो भवति । मनोनिरोधस्य अवधिमाह-तावन्मन इति । एतदेव ज्ञानं-ज्ञानसाधनं मोक्षसाधनञ्च । उक्तमर्थमुपसंहरति-समाधिनिर्धूतेतिमन्त्रेण श्रुतिः । स्पष्टार्थोऽयं मन्त्रः ।

कौषीतकिब्राह्मणोपनिषदि—

**तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्** इति, अन्ते **स म आत्मेति विद्यात्** इति च। अस्यार्थः—सर्वस्य विषयेन्द्रियादिव्यवहारस्य आत्ममात्रत्वे दृष्टान्तमाह श्रुतिः—तद्यथेति। रथस्य-रथचक्रस्य अरेषु-तिर्यग्भूतशलाकासु नेमिरर्पिता-नेमिर्वलयाकारभूता। नाभावरा अर्पिताः। नाभिः—रथचक्रस्य मध्यप्रदेशः, अक्षकोटिर्यत्र निवेश्यते स नाभिरित्युच्यते। एवमेव एता भूतमात्राः शब्दादयः प्रज्ञामात्रासु इन्द्रियतज्जन्यज्ञानेषु विषयत्वेन अर्पिताः। प्रज्ञाः-बुद्धयः मात्राः-इन्द्रियाणि च प्राणे परमात्मन्यर्पितानि। नेमिवद्विषयाः, अराः इन्द्रियबुद्धयः, नाभिवदात्मा। स एषः—सः पूर्वं हिततमत्वेन निर्दिष्टः एषः अरनाभिनिदर्शनेन प्रतिपादितः प्राणः—सर्वव्यवहारेऽपि जीवनहेतुः, स एव प्रज्ञात्मा-चैतन्यरूपः। अनेन मुख्यप्राणशंका निरस्ता। आनन्दोऽजरोऽमृतः। अजरः—जराहितः। अमृतः-मरणरहितः। उपलक्षणमेतत्। उत्पत्त्यादिरहित इत्यपि द्रष्टव्यम्। तस्यैव पुरुषार्थरूपत्वमाह-आनन्द इति। निर्लेपतामाह-स न साधुना कर्मणा भूयानित्यादिना 'साधु कर्म कारयती'त्यादिना 'एष लोकेशः' इत्यन्तेन च। जीवादान्तरात् भेदं वारयति-स मे इति। तथा च सर्वप्रत्यगात्मभूतः सच्चिदानन्दरूपः सर्वव्यवहाराधिष्ठाता सर्वविक्रियारहितः एकः अद्वितीयः परमेश्वरो यः स म आत्मेति विद्यात्-सर्वदा अहमस्मीत्यनुसन्धानं कुर्यादिति।

सुबालोपनिषदि—

**असद्वा इदमग्र आसीत् अजातमभूतमप्रतिष्ठितमशब्दमस्पर्शमरूपमरसमगन्धमव्ययं महान्तं बृहन्तमजमात्मानं मत्वा धीरो न शोचति।**

अस्यार्थः—इदं-परिमृश्यमानं जगत् अग्रे-सृष्टेः प्राक् असत्—अनभिव्यक्तनामरूपमेवासीत्। ननु जगतः कारणञ्चेत् ब्रह्म तस्यापि कारणान्तरेण भवितव्यमित्याशंक्याह-अजातमिति।

आसीदितिभूतकालसंबधभ्रान्तिं वारयति - अभूतमिति। उपलक्षणमेतद्वर्तमानादिकालसंबन्धराहित्यस्य। तथा च काललयापरिच्छेद्यमित्यर्थः। ननु एवंभूतं वस्तु किमाधारकमित्यत आह—अप्रतिष्ठितमिति। स्वमहिमप्रतिष्ठितमित्यर्थः। एवंभूतं वस्तु परमसूक्ष्ममित्याह - अशब्दमस्पर्शमरूपमरसमगन्धमिति। अव्ययं - नाशरहितम्। परमसूक्ष्मत्वे परमाणुतुल्यत्वं स्यात्, नेत्याह-महान्तमिति। अजं - वृद्ध्यादिरहितम्। एवंभूतं परिपूर्णं ब्रह्म आत्मानं - प्रत्यगात्मानं मत्वा धीरः धीमान् विद्वान् न शोचति। शोकमूलस्य अज्ञानस्य ब्रह्मात्मैकत्वसाक्षात्कारेण नाशात् तत्कार्यभूतदुःखविनिर्मुक्तो भवतीत्यर्थः।

अन्यत्रापि अस्यामेवोपनिषदि—

प्रजापतिरुवाच महत् पदं ज्ञात्वा वृक्षमूले वसेत कुचेलोऽसहाय एकाकी समाधिस्थ आत्मकाम आप्तकामो निष्कामो जीर्णकामो व्याघ्रे हस्तिनि सिंहे दंशे मशके नकुले सर्पे यक्षराक्षसगन्धर्वेषु मृत्यो रूपाणि विदित्वा न बिभेति कुतश्चनेति। वृक्षमिव तिष्ठासेत् छिद्यमानो न कुप्येत न कम्पेत उपलमिव तिष्ठासेत् छिद्यमानो न कुप्येत न कंपेत सत्येन तिष्ठासेत् सत्योऽयमात्मेति। स्पष्टम्।

उत्तरतापनीयोपनिषदि—

स होवाच तद्वा एतत् ब्रह्माद्वयं बृहत्वान्नित्यं शुद्धं बुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सदानन्दं चिन्मात्रमात्मैवाव्यवहार्यं केनचन तदेतदात्मज्ञानमोमित्यपश्यन्तः पश्यत तदेतत् सत्यमात्मा ब्रह्मैव ब्रह्मात्मैव अत्रह्येव न विचिकित्स्यमित्यों सत्यं तदेतत् पण्डिता एव पश्यन्त्येतद्धि अशब्दमस्पर्शमरूपमरसमगन्धमव्यक्तमनादातव्यमगन्तव्यमविसर्जयितव्यमनानन्दयितव्यममन्तव्यमबोद्धव्यमनहंकर्तव्यमचेतयितव्यमप्राणयितव्यमनपानयितव्यमव्यानयितव्यमनुदानयितव्यमसमानयितव्यमनिन्द्रियमविषयमकरणमलक्षणमसङ्गमगुणमविक्रियमव्यपदेश्यमसत्त्वमरजस्कमतमस्कममायमप्यौपनिषदमेव सुविभातं सकृद्विभातं पुरतोऽस्मात् सर्वस्मात् सुविभातमद्वयं पश्यत अहं सः सोऽहमिति।

अस्यार्थः - स होवाच प्रजापतिः। किमुवाचेत्यत आह—तद्वा इति। तदिति कारणत्वेन परोक्षं एतदिति तदेव कार्यप्रविष्टमपरोक्षमुक्तं ब्रह्म। अद्वयत्वे हेतुमाह - बृहत्वादिति। बृहते-र्धातोरद्वयत्वे एव मुख्यार्थलाभादद्वयमेव ब्रह्मेत्यर्थः। एवं विशेष्यमद्वयं ब्रह्माभिधाय नित्यत्वादिकं विशेषणमाह - नित्यं शुद्धमित्यादिना। उक्तस्य विशेष्यस्य ब्रह्मणोऽद्वयत्वात् तदानुगुण्य-सिद्धये स्ववाच्यार्थं परित्यज्य एकरससच्चिन्मात्रार्थतां प्राप्यैव नित्यादिपदानां ब्रह्मणि प्रवृत्ति-रित्याह - अव्यवहार्यं केनचनेति। केनचनापि पदेन मुख्यया वृत्या अव्यवहार्यमित्यर्थः। एवं पदार्थशोधनपूर्वकं प्रत्यग्ब्रह्मैक्यं प्रणवेन प्रतिपत्तव्यमविषयतयेत्याह - तदेतदिति—अत्र ओङ्कारेण ब्रह्मात्मैक्यप्रतिपत्तिप्रकारः ओंकारनामनिरूपणावसरे बहुधा प्रपञ्चितः। तदेतद्यथोक्तं ब्रह्म आत्मानं पश्यत - आत्मरूपेणैव पश्यतेत्यर्थः। अपश्यन्त इति। विषयतयेत्यर्थः। उक्तमेकत्वं शपथकरणेन द्रढयति - तदेतत्सत्यमित्यादिना। किन्तत्सत्यमिति, तदाह - आत्मा ब्रह्मैव ब्रह्मा-त्मैवेति। इत्येतत् सत्यमित्यर्थः। यतः उक्तमेकत्वं सत्यमतोऽत्र संशयो नैव कार्य इत्याह - अत्र ह्येवेति। उक्तमेकत्वं स्वानुभवेनापि द्रढयति - इत्योमिति। इतीत्युक्तस्य ऐक्यस्य परामर्शः। ओमित्यनुज्ञया स्वानुभवः प्रकटीकृतः। सत्यत्वमुपसंहरति-सत्यमिति। न्यायमीमांसासंस्कृतबुद्धीनां शब्दवृत्तिभेदविदामेव उक्तात्मैक्यप्रतिपत्तिर्भवतीत्याह-तदेतदिति। तत्र हेतुमाह - एतद्धीत्यादिना। अविषयमिति विषयसामान्यप्रतिषेधः। अलक्षणमिति अनुमानप्रतिषेधः। शब्दप्रवृत्तिनिमित्तषष्ठ्यादि प्रतिषेधः असंगमित्यादिना। अतः अव्यपदेश्यं शब्दैः। अमायमिति गुणसामान्यरूपमायाप्रतिषेधः। यद्यप्येवं सर्वविशेषरहितं तथाऽपि उपनिषद्भिरेव लक्षणया ज्ञातव्यमित्याह - अप्यौपनिषदमिति। उपनिषद्भिर्लक्षणया ज्ञाते स्पष्टतया ब्रह्म ज्ञातं भवतीत्याह-सुविभातमिति। न चौपनिषदेनापि ज्ञानेन आत्मनि कश्चिदतिशयो जन्यते स्वप्रकाशनित्यचैतन्यरूपत्वादात्मनः इत्याह - सकृद्वि-भातमिति। सर्वदाप्रकाशरूपमित्यर्थः। तत्र सर्वसाक्षित्वं हेतुमाह - पुरत इति। व्यतिहारेण चैकत्वं प्रतिपत्तव्यमित्याह - अहं सः सोऽहमिति। अहं - शोधितत्वंपदार्थभूतं प्रत्यक्चैतन्यं सः-शोधित-तत्पदार्थभूतं परिपूर्णं ब्रह्मैव। एवं सोऽहमित्यस्यापि। सः- शोधिततत्पदार्थरूपं चैतन्यमेव अहं - शोधितत्वंपदार्थरूपं प्रत्यक् चैतन्यम्।

ननु सोऽहमित्येवालम्, किं अहं स इति व्यतिहारेण - सत्यम्। पटैकदेशस्य पटतावन्मात्रत्वेऽपि पटस्य एकदेशतावन्मात्रत्वाभाववत् जीवस्य ब्रह्मांशत्वेन ब्रह्मतावन्मात्रत्वेऽपि ब्रह्मणस्ततोऽतिरेकः स्यादित्याशंकानिराकरणार्थत्वात्। तथा च ब्रह्मणोऽपि प्रत्यगात्मतावन्मात्रमखण्डैकरसत्वमनुसन्धातव्यम्, आत्मनो ब्रह्मांशत्वस्य उपाधिकल्पितत्वेन वस्तुतो ब्रह्ममात्रत्वादिति। तथा च सर्वेन्द्रियप्राणमनोबुद्धिव्यवहारातीतं मायाऽविद्यातत्कार्योपाधिविनिर्मुक्तं सच्चिदानन्दपरिपूर्णं सर्वप्रत्यगभिन्नं ब्रह्माहमस्मीत्यनुसन्धातव्यमिति।

प्रकृतश्रुतिस्तु - **तं त्वौपनिषदं पुरुषं पृच्छामि** इति। उदाहृततापनीयश्रुतिरपि द्रष्टव्या।

**इति श्रीमत्परमहंसपरिव्राजकाचार्याभिनवनारायणेन्द्रसरस्वतीपूज्यपादशिष्य - श्रीमत्परमशिवेन्द्रसरस्वतीविरचिते वेदान्तनामरत्नसहस्रव्याख्याने**

**स्वरूपानुसन्धानाख्ये**

**प्रथमः खण्डः**

श्रीसांबसदाशिवाय नमः

श्रीगुरुभ्यो नमः

शुभमस्तु

—:0:—

ओम्

## द्वितीयः खण्डः

सोऽयं मदीयाशयरङ्गमध्ये
सायन्नटस्ताण्डवमातनोतु ।
पदारविन्दाभरणे यदीये
दधाति नीलोत्पलतां मुरारिः ।
न मन्त्रस्योद्धारो न च बहिरनासक्तिकलना
न च न्यासक्लेशो न च विविधमुद्राविरचना ।
यमीशानं द्रष्टुं हृदय चिररात्राय यतसे
स एष स्वामी ते धुरि जयति नारायणयतिः ।

**ईशावास्ये—**

कविः—क्रान्तदर्शी, सर्वदृक् । नान्योऽतोऽस्ति द्रष्टा इत्यादिश्रुतेः । **कविर्मनीषी** इति श्रुतिः ।

**काठके—**

काष्ठा—यस्मात् नास्ति पुरुषाच्चिन्मात्रघनात् परं किञ्चिदपि वस्त्वन्तरं तस्मात् सूक्ष्मत्वमहत्त्वप्रत्यगात्मत्वानां सा काष्ठा-निष्ठा-पर्यवसानं-सर्वप्रत्यग्रूपमित्यर्थः ।

**पुरुषान्नपरं किञ्चित् सा काष्ठा सा परा गतिः** इति श्रुतिः ।

मुण्डके—

कर्ता—कारणभूतः । नन्वसंगोदासीनस्य आत्मनः अकर्तृत्वात् कथं कर्तृत्वम्? औपाधिकमिति चेत् तर्हि दुःखित्वप्रसंगः इति । महाकर्तृत्वस्य विवक्षितत्वात् । तथा च वासिष्ठे भृंगीशं प्रति शिवः—

**सर्वाः शंकाः परित्यज्य धैर्यमालम्ब्य शाश्वतम् ।**
**महाकर्ता महाभोक्ता महात्यागी भवानघ ॥**

भृंगी—

किमुच्यते महाकर्ता महाभोक्ता किमुच्यते ।
किमुच्यते महात्यागी सम्यक् कथय मे प्रभो ।

शिवः—

रागद्वेषौ सुखं दुःखं धर्माधर्मौ फलाफले ।
यः करोत्यनपेक्ष्यैव महाकर्ता स उच्यते ।

यः पुमान् रागद्वेषादीन् कारणत्वेन कार्यत्वेन वा अनपेक्ष्यैव करोति-रागादिकं स्वप्रवृत्तौ हेतुत्वेनापि नापेक्षते प्रयोजनत्वेनापि नापेक्षते, स महाकर्तोच्यते ।

मौनवान्निरहंभावो निर्मानो गतमत्सरः ।
यः करोति गतोद्वेगं महाकर्ता स उच्यते ।

यः पुमान् मौनवान्—इदंकरिष्यामीति न वक्ति, निरहंभावः—अहमेवास्यकर्तेति नाहङ्करोति, निर्मानः-स्वस्मिन् कार्ये वा उत्कर्षं न मन्यते, गतमत्सरः-परशुभप्रद्वेषरहितः, इत्थंभूतः सन् गतोद्वेगं-अव्याकुलमेव करोति, सोऽपि महाकर्तेत्युच्यते ।

सर्वत्र विगतस्नेहो यः साक्षिवदवस्थितः ।
निरिच्छो वर्तते कार्ये महाकर्ता स उच्यते ।
उद्वेगानन्दरहितः समया स्वच्छया धिया ।
न शोचति न चोदेति महाकर्ता स उच्यते ।

यः पुमान् उद्वेगानन्दरहितः—क्रियमाणमिदं कार्यं निष्फलं भविष्यतीति उद्वेगो भीतिः, प्रीतिरानन्दः, तद्रहितः । समया-स्वच्छया धिया कुर्वन् न शोचति-कार्यासिद्धौ न विषीदति । सिद्धौ न चोदेति-न हृष्यति । स महाकर्तोच्यते ।

जन्मस्थितिविनाशेषु सोदयास्तमयेष्वलम् ।
सममेव मनो यस्य महाकर्ता स उच्यते ।

यस्य मनः वस्तूनां सोदयास्तमयेषु जन्मस्थितिविनाशेषु सममेव स महाकर्तोच्यते। उदयास्तमयौ दर्शनादर्शने। यस्य मनो वस्तुनि जायमाने तिष्ठति विनश्यति दृश्यमाने अदृश्यमानेऽपि वा समं-एकप्रकारमेव स महाकर्तेत्यर्थः।

**न किञ्चन द्वेष्टि तथा न किञ्चिदपि वाञ्छति।**
**भुङ्क्ते च प्रकृतं सर्वं महाभोक्ता स उच्यते।**

प्रकृतं—प्रारब्धकर्मणा प्रस्तुतं सर्वं-इष्टमनिष्टञ्च।

**सुखैर्दुःखैः क्रियायोगै र्भावाभावै र्भ्रमप्रदैः।**
**भुक्तै र्न संक्षुभ्यति यो महाभोक्ता स उच्यते।**

भ्रमप्रदैः—भ्रान्तिहेतुभिः सुखदुःखादिभिः भुक्तैरपि यो न संक्षुभ्यति स महाभोक्ता। तत्र क्रियायोगाः शयनासनादिक्रियास्वासंगाः। भावाभावाः-वस्तूनां सदसद्भावाः।

**जरामरणमापच्च राज्यं दारिद्र्यमेव च।**
**रम्यमित्येव यो भुङ्क्ते महाभोक्ता स उच्यते।**

रम्यमित्येव—सममित्येवेत्यर्थः।

**कट्वम्ललवणं तिक्तममृष्टं मृष्टमेव च।**
**सममेव तु यो भुङ्क्ते महाभोक्ता स उच्यते।**

मृष्टं—निष्कलंकतया रम्यम्।

**क्षारे खण्डप्रकारे च शुभे वाऽप्यशुभे तथा।**
**समता सुस्थिता यस्य महाभोक्ता स उच्यते।**

क्षारो भस्म, खण्डः शर्कराः।

**धर्माधर्मौ सुखं दुःखं तथा मरणजन्मनी।**
**धिया येनेतिसन्त्यक्तं महात्यागी स उच्यते।**

येन धर्मादिकं धिया सन्त्यक्तं-बुद्ध्या अयं धर्मोऽयमधर्म इति नानुसंहितं स महात्यागी ।

**सर्वेहाः सकलाश्शङ्काः सर्वेच्छाः सर्वनिश्चयाः ।**
**धिया येन परित्यक्ताः महात्यागी स उच्यते ।**

सर्वेहाः—सर्वोद्योगाः धिया परित्यक्ताः—बुद्ध्या न संकल्पिता इत्यर्थः ।

**येन धर्ममधर्मञ्च मनोमननमीहितम् ।**
**सर्वमन्तः परित्यक्तं महात्यागी स उच्यते ।**

मनोमननं—संकल्पः, ईहितं-उद्यमः । धर्माधर्मशब्दः नपुंसकेऽपि स्तः । स्याद्धर्ममस्त्रियां पुण्येत्यभिधानात् ।

**यावती दृश्यकलना सकलेयं विलोक्यते ।**
**सा येन सुष्ठु संत्यक्ता महात्यागी स उच्यते ।**

दृश्यकलना-दृश्यकल्पना ।

**कर्तारमीशं पुरुषं** इति श्रुतिः ।

**तैत्तरीये**—

**कवीनां परमम्**—कवीनां—मेधाविनां ज्ञानिनां परमं-पूज्यं स्वात्मत्वेनानुसन्धेयम्। **तदेव ब्रह्म परमं कवीनां** इति श्रुतिः ।

**कृष्णपिङ्गलः**—देहपरिजिघृक्षायां स्त्रीपुंसशबलाकारः, परशक्त्यविनाभूतो वा । अथवा कण्ठे कृष्णं ललाटे पिंगलं रूपं यस्य सः कृष्णपिङ्गलः । **पुरुषं कृष्णपिंगलं** इति श्रुतिः ।

**कालः**—

विश्वं कलयतीति कालः ।

**कलविकरणः**— कलः अव्यक्तविशेषावस्था, तद्वत् कलमुच्यते, तस्य विकरणः-विकर्ता—विकारविशेषाणां कर्ता । कृत्यल्युटो बहुलमिति कर्तरि ल्युट् । यद्वा कर्मणि ल्युटि बहुव्रीहिः, कलः विकरणीयो यस्य इति । पूर्वपदप्रकृतिस्वरश्च उपपन्नो भवति । कलशब्दः पचाद्यचि वृषादौ द्रष्टव्यः । अतः आद्युदात्तत्वम् ।

**कालाय नमः कलविकरणाय नमः** इति श्रुतिः ।

छान्दोग्ये—

**कम्**—सुखरूपम् । **कं ब्रह्म खं ब्रह्मेति** श्रुतिः ।

बृहदारण्यके—

**कृत्स्नः**—सर्वः अशेषस्वरूपः इत्यर्थः । **कृत्स्नः प्रज्ञानघनः** इति श्रुतिः ।

ब्रह्मोपनिषदि—

**कर्माध्यक्षः**—सर्वप्राणिकृतविचित्रकर्माधिष्ठाता ।

**केवलः**—निरुपाधिकः । **कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च** इति श्रुतिः ।

श्वेताश्वतरोपनिषदि—

**कारणम्**—सर्वप्रपञ्चकारणम् । ब्रह्मणः सर्वप्रपञ्चकारणत्वं पक्षान्तराणि प्रदर्श्य तन्निरसनपूर्वकं श्रुत्यैव दृढीकृतम् । तथा हि श्रुतिः—

**ब्रह्मवादिनो वदन्ति**

**किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठाः ।**
**अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ।**
**कालःस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् ।**
**संयोग एषां नत्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः ।**
**ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।**
**यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः** । इति ।

तदर्थश्च अनुभूतिप्रकाशिकायां प्रकटीकृतः—

**ये वेदवादिनस्ते तु मीमांसन्ते मुमुक्षवः ।**
**जगतः कारणं ब्रह्मेत्येवं वेदेषु घुष्यते ।**
**उत्पत्तिस्थितिनाशाः स्यु र्यतस्तत् कारणंत्विति ।**
**सामान्यमेव विज्ञातं विशेषस्तु न बुध्यते ।**

कस्माद्वस्तुविशेषान्नो जन्म केन च जीवनम् ।
लयः कस्मिन् व्यवहृतौ सुखादौ को नियच्छति ।
पितृभ्यामन्नतो रोगादपि जन्मादयस्त्रयः ।
नियामकश्च राजेति वचनं बालभाषितम् ।
पितृराजाद्यशेषस्य जगतश्चिन्त्यतेऽधुना ।
कारणं तच्च शास्त्रैकगम्यं शास्त्रं त्वनेकधा ।
कालः स्वभावो नियति र्यदृच्छा भूतपञ्चकम् ।
प्रधानं जीव एतानि मतान्युक्तानि शास्त्रिभिः ।
ऋतुकाले भवेद्गर्भः वर्षतौ सस्यसम्भवः ।
उदाह्रियत इत्यादि बहुधा कालवादिना ।
स्वभाववाद्यग्निमुष्णं जलं द्रवमुदाहरत् ।
रूपज्ञानं चक्षुषैवेत्याहुर्नियतिवादिनः ।
धनिकत्वाद्यवस्था या यदृच्छावादिनोच्यते ।
भूतवादी देहगतकाठिन्यादीन्युदाहरत् ।
प्रधानवादी पुरुषान् सात्विकादीनुदाहरत् ।
जीववादी कर्मवशाज्जन्म देवाद्युदाहरत् ।
सर्वत्र युक्तेर्दृष्टत्वात् किं तत्त्वमिति चिन्त्यते ।
सर्वेषामनिवार्यत्वात् तत्संघोऽस्त्विति चेन्न तत् ।
स्वतन्त्रचेतने जीवे सति कालाद्यचेतनाः ।
समप्रधानभावेन कथं संघीभवन्ति ते ।
तर्हि जीवो हेतुरस्तु तन्न दुःखादिदर्शनात् ।
स्वतन्त्रः स्वात्मनो दुःखं कुर्वन् दृष्टो न हि क्वचित् ।
दोषान् सर्वेषु पक्षेषु पश्यन्तो बहुधा तदा ।
मायाशक्तिमनिर्वाच्यामपश्यन् ध्यानयोगतः ।
द्विविकस्यासु युक्तीनां सत्त्वेऽप्यन्ते न सन्ति ताः ।

नजानामीत्येवमन्ते विषीदन्तीह वादिनः ।
यदन्ते शरणं सर्ववादिनामविवादतः ।
तदज्ञानमनिर्वाच्या मायेत्याहुर्विपश्चितः ।
अनिर्वाच्येऽपि युक्तिश्चेदन्विष्यति स मूढधीः ।
नीरूपं चक्षुषा द्रष्टुमिच्छत्येवातिमोहितः ।
सर्वकार्येषु शक्तत्वात् मायाऽऽक्षेपं न साऽर्हति ।
दुर्घटस्यैव घटने स्वभावः सर्वसम्मतः ।
तथाविधायां मायायां परात्मा प्रतिबिंबितः ।
अवान्तराणि वस्तूनि कालादीन्यधितिष्ठति । इति ।

**स्कान्दे** कालिकाखण्डे स्कन्दागस्त्यसंवादे षट्त्रिंशाध्याये—भृंगिरिटिः-

त्वत्तस्सर्वं त्वयि सर्वं त्वं सर्वं सर्वदा नमः ।
नमो नमस्ते देवेश सर्वकारणकारण । इति ।

सूतसंहितायाम्—

ब्रह्मा विष्णुश्च रुद्रश्च परतत्वविभूतयः ।
तेषां त्रयाणामधिकः सर्वकारणमीश्वरः । इति ।

आनुशासनिके— पञ्चाशाध्याये युधिष्ठिरं प्रति श्रीकृष्णः—

ब्रह्मणो यत् परं ब्रह्म पराणामपि यत् परम् ।
तेजसामपि यत्तेजस्तपसामपि यत्तपः ।
शान्तीनामपि या शान्ति र्द्युतीनामपि या द्युतिः ।
दान्तानामपि यो दान्तो ध्यायतामपि यो विधिः ।
देवानामपि यो देवो मुनीनामपि यो मुनिः ।
यज्ञानामपि यो यज्ञः शिवानामपि यः शिवः ।

रुद्राणामपि यो रुद्रः प्रभुः प्रभवतामपि ।
योगिनामपि यो योगी कारणानाञ्च कारणम् । इति ।

ब्रह्माण्डे पुराणे भिक्षाटने तृतीयाध्याये यमः—

त्वं कर्ता सर्वलोकानां हर्ता पाता त्वमेव हि ।
त्वं गतिः सर्वभूतानामस्माकञ्च विशेषतः ।
सन्धाता सर्वलोकानां प्रकृतेः परतः स्थितः ।
अस्माकममरेशानामिच्छया रूपवान् भवान् ।
न जाने त्वां महादेव सर्वकारणकारणम् । इति ।

किं कारणं इति श्रुतिः ।

कलासर्गकरः—कलानां—प्राणादिनामान्तानां सर्गकरः—सृष्टिकरः । कलासर्गकरं देवं ये विदुः इति श्रुतिः ।

कालकारः—कालस्यापि कर्ता ज्ञः कालकारः इति श्रुतिः ।

करणाधिपाधिपः—करणाधिपाः अग्न्यादित्यादयः, तेषामप्यधिपः परमेश्वरः। स कारणं करणाधिपाधिपः इति श्रुतिः ।

बृहदारण्यके—

खम्—परमाकाशम् । ओं खं ब्रह्म खं पुराणमिति श्रुतिः ।

कठवल्लीषु—

गूढमनुप्रविष्टः—प्राकृतविषयविज्ञानैः प्रच्छन्न इत्येतत् ।

गुहाहितः—गुहायां बुद्धौ स्थितः तत्र उपलभ्यमानत्वात् ।

गह्वरेष्ठः—गह्वरे विषमे अनेकानर्थसंकटे तिष्ठतीति गह्वरेष्ठः ।

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाऽहितं गह्वरेष्ठं इति श्रुतिः ।

**गुहायां निहितः**—गुहायां हृदये आत्मभूतः सन् स्थितः इत्यर्थः। एवञ्च शरीरे हृदयपुण्डरीकमध्ये बुद्धिसाक्षितया विद्यमानमात्मानं विषयसंकल्परहितः शोकमोहादिनिवृत्त्यर्थं सदा भावयेत्। तदुक्तं **वासिष्ठे**—

**भावाभावविनिर्मुक्तं जरामरणवर्जितम्।**
**संस्मरात्मानमव्यग्रो मा विमूढमतिर्भव।**
**सर्वैषणामयकलङ्कविवर्जितेन स्वच्छात्मभावकलितेन हृदब्जमध्ये।**
**एवात्मनाऽऽत्मनि महामतिनाऽमुनैव संत्यज्य संभ्रममलं परितोषमेहि।**

सर्वैषणाः—पुत्रकलत्रादिविषयेच्छाः, तन्मयकलङ्कवर्जितेन, स्वच्छात्मभावकलितेन - स्वच्छस्वभावयुक्तेन, आत्मना - अन्तःकरणेन, संभ्रमं संत्यज्य आत्मन्येव परितोषमेहीत्यन्वयः। **आत्माऽस्य जन्तोर्निहितो गुहायाम्** इति श्रुतिः।

**गुह्यम्**—गोप्यम्। **हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म** इति श्रुतिः।

**मुण्डके**—

**गुहाचरम्**—गुहायां बुद्धौ दर्शनश्रवणादिप्रकारैश्चरतीति गुहाचरम्। **आविः सन्निहितं गुहाचरं नाम** इति श्रुतिः।

**बृहदारण्यके**—

**गहने प्रविष्टः**—गहने - विषमे अनेकशतसहस्रविवेकविज्ञानप्रतिपक्षे **देहे प्रविष्टः**। **यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन् सन्देहे गहने प्रविष्टः** इति श्रुतिः।

**कैवल्ये**—

**गुहाशयम्**—बुद्धौ शयानम्। **गुहाशयं निष्कलमद्वितीयम्** इति श्रुतिः।

**श्वेताश्वतरे**—

**गोपाः**—गोप्ता रक्षक इत्यर्थः। **संसृज्य विश्वा भुवनानि गोपाः** इति श्रुतिः।

**गिरिशन्तः**—गिरिः—कैलासः, तत्र स्थित्वा शं सुखं सर्वेषां तनोतीति गिरिशन्तः। गिरिः मेघः, तत्र स्थित्वा पर्जन्यरूपेण शं तनोतीति वा, गिरि - प्रणवे प्रतिपाद्यतया स्थित्वा शं तनोतीति वा, गिरि वेदे स्थित्वा धर्मज्ञानरूपेण शं तनोतीति वा, गिरिशन्तः।

**गिरित्रः**—गिरिं कैलासादिकं त्रायत इति गिरित्रः। गिरौ स्थित्वा सर्वान् त्रायत इति वा, गिरिर्मेघः तत्र स्थित्वा पर्जन्यरूपेण त्रायत इति वा, गिरि - प्रणवे तत्प्रतिपाद्यतया स्थितः सन् उपासकान् संसारात् त्रायत इति वा गिरित्रः।

**यामिषुं गिरिशन्त हस्ते, शिवां गिरित्र** इति श्रुतिः।

**गृहीता**—पाणिव्यापारयोग्यं सर्वं संकल्पमात्रेण व्यापारयतीत्यर्थः। तथा च **विरूपाक्षपञ्चाशिकायाम्**—

> **गन्धगजसमररसिकायेन्द्राय प्रकटिताद्रियुगसमरः।**
> **निजसिद्धबीजमस्मै कथयति पृष्टो विरूपाक्षः।** इति।

**अपाणिपादो जवनो गृहीता** इति श्रुतिः।

**गुणी**—अपहतपाप्मत्वादिमान्। **ज्ञः कालकारो गुणी सर्ववित्** इति श्रुतिः।

**गुणेशः**—गुणानां - सत्वरजस्तमसामीशः। **प्रधानक्षेत्रज्ञपति गुणेशः** इति श्रुतिः।

**अथर्वशिरसि**—

**गोप्ता**—रक्षिता। **संहृत्य विश्वा भुवनानि गोप्ता** इति श्रुतिः।

**ग्रहणम्**—स्वयंप्रकाशमानज्ञानैकरूपम्। तथा च विषयनिर्मुक्तत्वमेव ज्ञानस्वरूपस्यात्मनो मोक्षः। विषयरूषितत्वमेव बन्धः। उक्तं **वासिष्ठे**—

> **चिच्चेत्यकलिता बन्धस्तन्मुक्ता मुक्तिरुच्यते।**
> **चिदचेत्या किलात्मेति सर्वसिद्धान्तसंग्रहः।** इति।

**तदों तद्ग्रहणम्**मिति श्रुतिः।

**बृहदारण्यके—**

**घ्रातुर्घ्रातिः**—गन्धविषयिणी या अन्तःकरणवृत्तिः तस्याः प्रकाशकः घ्राता, तस्य स्वरूपभूता घ्रातिः। **न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यते** इति श्रुतिः।

अथ **तलवकारोपनिषदि**—

**चक्षुषश्चक्षुः**—रूपप्रकाशकस्य चक्षुषो यत् ग्रहणसामर्थ्यं तत् आत्मचैतन्याधिष्ठितस्यैव। अतश्चक्षुषश्चक्षुरधिष्ठानभूतं ब्रह्मेत्यर्थः। **चक्षुषश्चक्षुरतिमुच्य धीराः** इति श्रुतिः।

**काठके—**

**चेतनानां चेतनः**—चेतयितॄणां ब्रह्मादीनां प्राणिनां अग्निनिमित्तमिव दाहकत्वमुदकादीनां आत्मचैतन्यनिमित्तमेव चेतयितृत्वम्। अतश्चेतनानां चेतनः परमात्मेत्यर्थः। **नित्यो नित्यानां चेतनश्चेतनानां** इति श्रुतिः।

**मुण्डके—**

**चेतसा वेदितव्यः**—विशुद्धज्ञानेन वेदितव्यः। **एषोऽणुरात्मा चेतसा वेदितव्यः** इति श्रुतिः :

**माण्डूक्ये—**

**चतुष्पात्**—कार्षापणवत्, न गौरिव, त्रयाणां विश्वादीनां पूर्वप्रविलापनेन तुरीयस्य प्रतिपत्तिरिति करणसाधनः पादशब्दः। तुरीयस्य तु कर्मसाधनः पादशब्दः। एवं चतुष्पादात्मा। **सोऽयमात्मा चतुष्पात्** इति श्रुतिः।

**चतुर्थः**—विश्वाद्यपेक्षया तुरीयः शुद्धचैतन्यस्वरूपः, प्रतीयमानपादत्रयवैलक्षण्यात्। **शिवमद्वैतं चतुर्थं मन्यन्ते** इति श्रुतिः।

**बृहदारण्यके—**

**चन्द्रतारके तिष्ठन् चन्द्रतारकादन्तरः चक्षुषि तिष्ठन् चक्षुषोऽन्तरः**—अप्सु तिष्ठन्नित्यादिवत्।

ब्रह्मोपनिषदि—

चैतन्यम्—अवस्थात्रयसाक्षिरूपं तत्त्वंपदार्थलक्ष्यं प्रत्यगभिन्नं ब्रह्मेत्यर्थः। तदुक्तमभियुक्तैः—

यच्चैतन्यमनुस्यूतं जाग्रत्स्वप्नसुषुप्तिषु।
तदेव त्वमिदं तत्त्वमितो नास्त्यधिकं परम्। इति।

आचार्यैरपि—

चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम्।
यत् सर्वविषयातीतं तस्मै सर्वविदे नमः। इति।

हृदि चैतन्ये तिष्ठतीति श्रुतिः।

चेता—बोद्धा। साक्षी चेता इति श्रुतिः।

कैवल्योपनिषदि—

चिदानन्दं—स्वयंप्रकाशमाननिरतिशयानन्दस्वरूपं, सर्वदा अविद्यातत्कार्यरूपबन्धरहितमित्यर्थः। तथा च वासिष्ठे—

अनन्ते चिद्घनानन्दे निर्विकल्पैकरूपिणि।
स्थिते द्वितीयस्याभावात् को बद्धः कश्च मुच्यते।

विभुं चिदानन्दं इति श्रुतिः।

चिन्मात्रः—दृश्यसंबन्धरहितः। सर्वाधिष्ठानभूतः प्रत्यगभिन्न इत्यर्थः। तदुक्तं वासिष्ठे—

चेत्यानुपातरहितं सामान्येन च सर्वगम्।
यच्चित्तत्त्वमनाख्येयं स आत्मा परमेश्वरः।
सर्वञ्च खल्विदं ब्रह्म नित्यं चिद्घनमव्ययम्।
कल्पनाऽपि मनोनाम्नी विद्यते न हि काचन।

न जायते न म्रियते किञ्चिदत्र जगत्त्रये ।
न च भावविकाराणां सत्ता क्वचन विद्यते ।
केवलं केवलाभासं सर्वसामान्यलक्षणम् ।
चेत्यानुपातरहितं चिन्मात्रमिह विद्यते । इति ।

चेत्येति । चेत्यानुपातरहितं - दृश्यसंबन्धरहितं सामान्येन चिन्मात्रेण सर्वग - सर्वत्र परिपूर्णं अनाख्येयं - निरुपाधिकत्वादव्यपदेश्यं यत् चितत्त्वं स एव आत्मा स एव परमेश्वर इत्यर्थः । न केवलं पूर्वोक्तचेत्यानुपातरहितं चिन्मात्रमेव ब्रह्म, किं तर्हि, दृश्यतया प्रतीयमानाऽपि सर्वं जगत् ब्रह्मैव । अध्यस्तस्याधिष्ठानादव्यतिरेकात् । तथा सति मनोनाम्नी कल्पनाऽप्यन्या काचित् वस्तुतो नास्त्येव । प्रतीयमाना जन्मादयोऽपि भावविकाराः न सन्ति । केवलाभासं - स्वयमेवप्रकाशमानं चिन्मात्रं केवलं वस्तुतो विद्यते इत्यर्थः ।

**चिन्मात्रोऽहं सदाशिवः** इति श्रुतिः ।

<u>चित्</u>—स्वयंप्रकाशमानसर्वचेतनरूपा । स्वाध्यस्ते सर्वस्मिन् दृश्येप्यनुस्यूतत्वात् । तथा चोक्तं **तापनीये—चिद्धीदं सर्वं काशते काशते च** । इति ।

**वासिष्ठेऽपि—**

चिदिहास्तीह चिन्मात्रमिदं चिन्मयमेव च ।
चित् त्वं चिदहमेते च लोकाश्चिदिति संग्रहः ।

**न चास्ति वेत्ता मम चित् सदाऽहं** इति श्रुतिः ।

**आरुणिकोपनिषदि—**

<u>चक्षुः</u>—सर्वं चष्टे इति चक्षुः सर्वप्रकाशकमित्यर्थः । **दिवीव चक्षुराततमि**ति श्रुतिः ।

**अमृतबिन्दूपनिषदि—**

<u>चिन्त्यम्</u>—चिन्तार्हस्वरूपम् । परमानन्दरूपत्वात् । तथा च सर्वेन्द्रियसंयमनपूर्वकं आत्मैव सर्वदा चिन्त्यः । अनुस्मर्तव्य इत्यर्थः । तथा चोक्तं **मनुस्मृतौ—**

कर्मेन्द्रियाणि संयम्य पञ्च बुद्धीन्द्रियाणि च ।
योजयेत् तानि मनसि ह्यहंकारे तथा मनः ।
अहङ्कारं तथा बुद्धौ बुद्धिमात्मनि योजयेत् ।
यतबुद्धीन्द्रियः पश्यन् बुद्ध्या बुद्ध्येत् परात् परं ! इति ।

न चिन्त्यं चिन्त्यमेव तदिति श्रुतिः ।

अथर्वशिखायाम्—

चतुरक्षरः—चत्वारि अकारोकारमकारार्धमात्रारूपाणि पृथिव्याद्यात्मकानि अक्षराणि यस्मिन् स चतुरक्षरः ।

चतुश्शिरः—चत्वारि ब्रह्मविष्णुरुद्रसंवर्तकाग्निरूपाणि शिरांसि यस्य सः चतुश्शिराः, चतुश्शिरा एव चतुश्शिरः ।

चतुरर्धमात्रः—चतस्रः गार्हपत्यदक्षिणाग्न्याहवनीयैकर्षिरूपाः अर्धमात्राः यस्य सः चतुरर्धमात्रः ।

ओंकारश्चतुरक्षरश्चतुश्शिरश्चतुरर्धमात्रः इति श्रुतिः ।

मैत्रायण्याम्—

चेतनमात्रः—चेत्यविनिर्मुक्तचिद्रूपः ।

तदुक्तम्—

सर्वभावान्तरस्थाय चेत्यमुक्तचिदात्मने ।
प्रत्यक्चेतनरूपाय मह्यमेव नमो नमः । इति ।

चेतनमात्रः प्रतिपुरुषं क्षेत्रज्ञः इति श्रुतिः ।

तापनीयोपनिषदि—

चिदेकरसः—सर्वप्रपञ्चविनिर्मुक्तश्चिन्मात्रः । उक्तञ्च—

दिक्कालाद्यनवच्छिन्नमदृष्टोभयकोटिकम् ।
चिन्मात्रमक्षयं शान्तमेकं ब्रह्मास्ति नेतरत् । इति ।

चिदेकरसो ह्ययमात्मेति श्रुतिः ।

चतुरात्मा—ओतानुज्ञात्रनुज्ञाऽविकल्परूपैश्चतूरूप इत्यर्थः । ओतानुज्ञात्रनुज्ञाऽविकल्परूपं सोमखण्डे निरूपितम् । अथ चतुर्थश्चतुरात्मा इति श्रुतिः ।

चक्षुषो द्रष्टा—स्पष्टम् । चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टेति श्रुतिः ।

चक्षुषः साक्षी—चक्षुषस्साक्षी श्रोत्रस्य साक्षी इति श्रुतिः ।

चिद्रूपः—चिदेव रूपं यस्य स चिद्रूपः, चिन्मात्र इत्यर्थः । तदुक्तम्—

एकमाद्यन्तरहितं चिन्मात्रकमनन्तकम् ।
खादप्यतितरं सूक्ष्मं विद्यते सर्ववेदनम् । इति ।

अनुज्ञैकरसो ह्ययमात्मा चिद्रूप एवेति श्रुतिः ।

चतूरूपः—ओतानुज्ञात्रनुज्ञाऽविकल्परूपैश्चतुरूपः । चतूरूप ओंकार एव इति श्रुतिः ।

चतुस्सप्तात्मा—अकारादिसंबन्धित्वेनोक्तपृथिव्यादिचतुर्विधसप्तरूपः । चतुस्सप्तात्मानं चतूरात्मानमानन्दामृतरूपमिति श्रुतिः ।

चिद्घनः—चिदेव घनं स्वरूपं यस्य सः । दृश्यासंस्पृष्ट इत्यर्थः । उक्तञ्च—

अहो भ्रममयी दृष्टिः जृम्भते काऽपि चेतसि ।
यद्वशादिदमाभोगि जगच्चक्रं प्रवर्तते ।
दृष्टं द्रष्टव्यमखिलं भ्रान्तं भ्रान्त्या दिशो दश ।
विश्रान्तोऽस्मि चिरं श्रान्तः चिन्मात्रान्नास्ति किञ्चन । इति ।

सद्घनोऽयं चिद्घन आनन्दघनः इति श्रुतिः ।

चिन्मयः—चिद्रूपः । चिन्मयो ह्ययमोंकारः इति श्रुतिः ।

तैत्तरीये—

छन्दसामृषभः—छन्दसां वेदानामृषभ इव ऋषभः श्रेष्ठः प्राधान्यात् । अत्र छन्दसामृषभः प्रणवः ब्रह्मत्वेन उपास्यः । यश्छन्दसामृषभो विश्वरूपः इति श्रुतिः ।

केनोपनिषदि—

ज्येयः—सर्वमहत्तरः। अनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठतीति श्रुतिः।

मुण्डकोपनिषदि—

ज्योतिषाञ्ज्योतिः—ज्योतिषामग्न्यादीनां ज्योतिः अवभासकं, अग्न्यादीनामपि ज्योतिष्ट्वमन्तर्गतब्रह्मात्मचैतन्यनिमित्तं, तद्धि परमं ज्योतिः। तच्छुभ्रं ज्योतिषां ज्योतिरिति श्रुतिः।

ज्योतिर्मयः—प्रकाशस्वरूपः। श्रीमहाभारते—

यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः।
ज्योतिः पश्यन्ति युञ्जानाः तस्मै योगात्मने नमः।

अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रः इति श्रुतिः।

तैत्तरीये—

ज्ञानम्—ज्ञप्तिस्वरूपं अनित्यत्वादिदोषरहितं स्वरूपचैतन्यमित्यर्थः। तदुक्तं स्कान्दे—

ज्ञप्तिरूपमपि ज्ञानं शुद्धमेव स्वतः सदा।
अशुद्धि जडरूपे हि दृष्टा सर्वजनैरपि।
स्वतःस्फुरणरूपन्तु ज्ञानं दुष्टं भवेद्यदि।
दुष्टमेव भवेत् सर्वं दुष्टस्फुरणसंगमात्।
(तथा सति विशुद्धं तु न शुद्ध्यत्येव किञ्चन।)
वस्तु स्फुरणशून्यं तु तुच्छमेव भवेत् सदा।
दुष्टकारणविज्ञाने दोषोऽस्तीति वदेद्यदि।
अभिव्यञ्जकवृत्त्या हि ज्ञाने दोषो न च स्वतः।
अन्यथा सकलं ज्ञानं दुष्टमेव स्वतो भवेत्।
अतः स्फुरणरूपं तु ज्ञानं शुद्धं सदैव तु। इति।

सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतिः ।

जनिता—जगदुत्पादयिता । स नो बन्धुर्जनिता स विधातेति श्रुतिः ।

छान्दोग्ये—

ज्यायान्—सर्वमहत्तरः । ततो ज्यायांश्च पूरुषः इति श्रुतिः ।

ज्योतिः—प्रकाशरूपम् । अथ यदतः परो दिवो ज्योतिरिति श्रुतिः ।

एवं बृहदारण्यकेऽपि—कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः इति ज्योतिःश्रुतिः ।

इदं व्याख्यातं अनुभूतिप्रकाशिकायाम्—

जाड्यमात्मन इच्छन्ति कणभुङ्मतजीविनः ।
तेषां तु प्रतिषेधार्थं ज्योतिरित्यभिधीयते ।
जडं बुद्ध्याद्युपादानं तमः तस्यावभासकम् ।
सकृद्विभातं चिन्मात्रं ज्योतिरात्मेति भण्यते ।
अचेतनोऽपि बुद्ध्यादिश्चात्मतया निरीक्ष्यते ।
यस्य सन्निधितस्तस्य चिज्ज्योतिष्ट्वमतिस्फुटम् ।
आत्मच्छायं पयोऽशेषं यथा मारतको मणिः ।
परीक्षणाय प्रक्षिप्तः कुर्यादात्मा तथैव हि ।
ज्योतिरात्मा चितिच्छायं प्रथमं कुरुते तमः ।
तमोयोगेन धीस्तद्वद्धीयोगादिन्द्रियं तथा ।
अक्षयोगात्तथा देहः एवमेते चिदात्मवत् ।
भासन्ते तेष्वतः पुंसां प्रत्यगात्मत्वविभ्रमः ।
तमेव भान्तमात्मानुभात्यखिलं जगत् ।

इति श्रुत्यन्तरे स्पष्टमुक्तं ज्योतिष्ट्वमात्मनः ।
आत्मन्येवं प्रबुद्धेऽस्मिन् ज्योतिषि ध्वान्तनाशतः ।
सर्वस्यैवात्मयाथात्म्यादात्मा पुरुष उच्यते ।
आत्माज्ञानसमुच्छित्तौ तज्जस्य न हि वस्तुनः ।
प्रत्यग्रूपात् पृथग्रूपं संभाव्यं केनचित् क्वचित् ।
पूर्णत्वात् पुरुषः सोऽयं ज्योतिरात्मेति भण्यते । इति ।

बृहदारण्यके—

जिघ्रन्—गन्धविषयिणीं वृत्तिं साक्षात्कुर्वन् । गन्धविषकवृत्तिप्रकाशक इत्यर्थः ।

जिघ्रन् वै तन्न जिघ्रति इति श्रुतिः ।

श्वेताश्वतरोपनिषदि—

ज्ञेयम्—अवश्यं मुमुक्षुभिः वेदोदितमार्गद्वारा श्रवणमनननिदिध्यासनपुरस्सरमात्मतत्त्वं ज्ञातव्यमित्यर्थः । तदुक्तं स्कान्दे—

वेदोदितेन मार्गेण पारंपर्यक्रमेण तु ।
मुमुक्षुत्वं दृढं प्राप्य पुनः शान्त्यादिसाधनैः ।
सहितश्शिवभक्त्या च गुरोः पादं प्रणम्य च ।
वेदान्तानां महावाक्यश्रवणेन तथैव च ।
मननेन तथा देवाः ध्यानेन परमात्मनः ।
प्रत्यक्ब्रह्मैकताज्ञानं लब्ध्वा याति शिवं परम् ।
प्रत्यगात्मानमद्वन्द्वमहंशब्दोपलक्षितम् ।
शिवरूपेण संपश्यन्नेव याति स्वपूर्णताम् । इति ।

एतत् ज्ञेयं नित्यमेवात्मसंस्थमिति श्रुतिः ।

जालवान्—जालं माया, तद्वान् मायावीत्यर्थः । य एको जालवानीशत ईशनीभिरिति श्रुतिः ।

जवनः—दूरगामी । सर्वव्यापीति यावत् । **अपाणिपादो जवनः** इति श्रुतिः ।

ज्ञः—सर्वज्ञः । **ज्ञः कालकारो गुणी सर्वविदिति** श्रुतिः ।

**अथर्वशिरसि—**

ज्येष्ठः—वयसाऽधिकः । कालानवच्छिन्न इत्यर्थः । **ज्येष्ठोऽहं श्रेष्ठोऽहमिति** श्रुतिः ।

जातवेदः—जाताः वेदाः यस्मात् सः जातवेदः । **विश्वं देवं जातवेदमिति** श्रुतिः ।

**तापनीये—**

ज्वलन्—सदा ज्वलन् इत्यर्थः । **एष एव ज्वलन्नेष एव सर्वतोमुखः** इति श्रुतिः ।

जानन्—स्वात्मानं स्वप्रकाशतया सर्वदा जानन् । **स्वप्रकाशोऽप्यविषयज्ञानत्वाज्जानन्ति** इति श्रुतिः ।

**तैत्तरीये—**

तत्पुरुषः—तिरोभावशक्त्युपाधिकं चिन्मात्रमेव तत्पुरुषः । सर्वस्य चेतनस्य वपुःपुर्यां उषति - विशतीति तत्पुरुषः । तदुक्तम्—**तस्य तस्य वपुःपुर्यां तस्यामुषति येन सः ।** इति । अथवा, तत् प्रसिद्धैश्वर्यं, पुरुषः- पूरयिता विश्वस्य । विश्वातीतः परमात्मेत्यर्थः । **तत्पुरुषाय विद्महे** इति श्रुतिः ।

तपः—सर्वदोषविनिर्मुक्तं स्वयंप्रकाशमानं ब्रह्मेत्यर्थः । **ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत** इति श्रुतिः ।

**तत्त्वम्—परमार्थसत्** । तदुक्तं **पराशरोपपुराणे—**

**साक्षात् परतरं तत्त्वं स्वभावादेव निर्मलम् ।**<br>
**उत्पत्त्यादिविनिर्मुक्तं स्वतन्त्रं पूर्णमद्वयम् ।**<br>
**प्रकृतिप्राकृतातीतं लक्ष्यलक्षणवर्जितम् ।**<br>
**बन्धमोक्षविनिर्मुक्तं बन्धमोक्षविधायकम् ।**

कालातीतं कलातीतं कारकग्रामवर्जितम् ।
अनन्तमखिलाधारमपरिच्छिन्नवैभवम् । इति ।

वासिष्ठेऽप्युक्तम्—

यत् सर्वशास्त्रसिद्धान्तः यत् सर्वहृदयानुगम् ।
यत् सर्वं सर्वगं वस्तु यत् तत्त्वं तदसौ स्थितः । इति ।

**तत्त्वं नारायणः परः** इति श्रुतिः।

**ऐतरेयके—**

**ततमम्**—तततमं, व्याप्ततममित्यर्थः । **स एतमेव पुरुषं ब्रह्म ततममपश्य**दिति श्रुतिः ।

**छान्दोग्ये—**

**तत्**—सदाख्यं सर्वजगत्कारणं सर्वज्ञं सर्वशक्ति । **तत्त्वमसी**ति श्रुतिः ।

**तमसः पारम्**—तमसः- अविद्यालक्षणात् पारं - परं अविद्याऽसंस्पृष्टं परमार्थतत्त्वं प्रत्यग-भिन्नस्वरूपमित्यर्थः । **तस्मै मृदितकषायाय तमसः पारं दर्शयति** इति श्रुतिः ।

**बृहदारण्यके—**

**तेजोमयः**—चिन्मात्रप्रकाशप्रायः । **तेजोमयोऽमृतमयः पुरुषः** इति श्रुतिः ।

**तमसि तिष्ठन् । तमसोऽन्तरः । तेजसि तिष्ठन् । तेजसोऽन्तरः । त्वचि तिष्ठन् त्वचोऽन्तरः** । स्पष्टम् । श्रुतिस्तु - **तमसि तिष्ठन् तमसोऽन्तरः** इत्यादिरूपा ।

**तेजः**—प्रकाशस्वरूपं ब्रह्म । **प्राणो ब्रह्मैव तेज एव** इति श्रुतिः ।

अथ **ब्रह्मोपनिषदि—**

**तुरीयं**—चतुर्थं जाग्रत्स्वप्नसुषुप्त्यवस्थाऽसंस्पृष्टम् । शुद्धचैतन्यमित्यर्थः । तदुक्तं **लैङ्गवासिष्ठे—**

सुषुप्त्यवस्था सुखबोधवस्तुनि प्रकल्पिता स्वप्नवदात्मनि द्विजाः ।
तथैव जाग्रच्च हि माययाऽऽगतं ततो विहाय त्रितयं सदाऽमृतम् ।
तुरीयरूपं त्रितयावभासकं सदाविभातं स्वयमेव मायया ।
अनावृतं वेदनिधिं पुरातनं महानुभावैरनुभूयतामिह । इति ।

वासिष्ठेऽपि श्रीरामः—

जाग्रत्स्वप्नसुषुप्तेषु स्थितं त्रिष्वपि लक्षितम् ॥
तुर्यं ब्रूहि विशेषेण विविच्य मुनिनायक ।

वसिष्ठः—

अहंभावानहंभावौ त्यक्त्वा सदसती तथा ।
यदसक्तं समं स्वच्छं स्थितं तत्तुर्यमुच्यते ।

अहमिति । यच्चैतन्यं अहंभावानहंभावौ - अहं नाहमिति च अभिमानं, सदसती - सदसत्त्वाभिमानं, त्यक्त्वा असक्तं समं स्वच्छञ्च स्थितं, तादृशं चैतन्यं तुर्यमुच्यते ।

या स्वच्छा समता शान्ता जीवन्मुक्तस्य या स्थितिः ।
साक्ष्यवस्था व्यवहृतौ सा तुर्या कलनोच्यते ।

स्वच्छा - निष्कलंका समता या शान्ता या जीवन्मुक्तव्यवस्थितिरूपा या च व्यवहृतौ साक्ष्यवस्था - औदासीन्यावस्था सा तुर्या कलना - तुर्यावस्था उच्यते ।

नैष जाग्रन्न च स्वप्नः सङ्कल्पानामसंभवात् ।
सुषुप्तिभावो नाप्येतदभावाज्जडतास्थितेः ।
शान्तं सम्यक्प्रबुद्धानां यथास्थितमिदञ्जगत् ।
विलीनं तुर्यमित्याहुरबुद्धाना यथास्थितम् ।
अहंकारकलात्यागे समतायाः समुद्गमे ।
विशरारौ कृते चित्ते तुर्यावस्थाऽवतिष्ठते ।

समस्तसंकल्पविलासमुक्ते तुर्ये पदे तिष्ठ निरामयात्मा ।
यत्र स्थिता राम सदैव मुक्ताः प्रशान्तभेदा मुनयो महान्तः । इति ।

सुषुप्ते रुद्रः तुरीयमक्षरं इति श्रुतिः ।

कैवल्योपनिषदि—

त्रिलोचनः—त्रीणि सोमसूर्याग्निरूपाणि लोचनानि यस्य स त्रिलोचनः।

उक्तं ब्रह्मोत्तरखण्डे—

सा तं विलोक्याखिलदेवदेवं त्रिलोचनं चन्द्रकलावतंसम् ।
शशाङ्कसूर्यानलकोटिभासं स्तब्धेव भीतेव तथैव तस्थौ । इति ।

सौरसंहितायामेकादशाध्याये—

त्रिमूर्तीनान्तु यः कर्ता निस्त्रैगुण्यस्त्रिलोचनः ।
नीलकण्ठो निराधारः शिवः सोमकलाधरः ।
सृष्टिस्थित्यन्तकार्येषु सर्वेषूपकरोति वै ।
निस्त्रैगुण्ये परे तत्त्वे सांबमूर्त्युपलक्षिते ।
स्वात्मभूते मति येषां तेषामेव परा गतिः । इति ।

ईश्वरगीतायां मुनीन् प्रति व्यासवचनम्—

शरण्यं शरणं रुद्रं प्रपन्नोऽहं विशेषतः ।
भूतेशं गिरिशं स्थाणुं देवदेवं त्रिलोचनम् ।

उमासहायं परमेश्वरं प्रभुं त्रिलोचनम् इति श्रुतिः ।

जाबालोपनिषदि—

तारकम्—संसारमहोदधेरुत्तारकम् । रुद्रस्तारकं ब्रह्म इति श्रुतिः ।

श्वेताश्वतरोपनिषदि—

त्रिवृतम्—त्रिभिस्सत्त्वरजस्तमोभिः प्रकृतिगुणैर्वृतम् । तमेकनेमिं त्रिवृतमिति श्रुतिः

त्रिकालात्परः—अतीतानागतवर्तमानकालात् परः, कालानवच्छिन्न इति यावत्। तदुक्तं स्कान्दे—

नमो भक्तभयच्छेदकारणायामलात्मने।
कालकालाय कालाय कालातीताय ते नमः। इति।

परस्त्रिकालादकालोऽपि दृष्टः इति श्रुतिः।

अथर्वशिरसि—

तारम्—गर्भजन्मजरामरणसंसारमहाभयात् तारयतीति तारम्। यत्तारं तत् सूक्ष्ममिति श्रुतिः।

बृहज्जाबालोपनिषदि—

त्रिणेत्रः—स्पष्टम्। स्कान्दे—

दृष्ट्वा त्रिणेत्रं कनकच्छविप्रभं कपर्दिनं चन्द्रकलावतंसम्।
भस्मांगरागं फणिराजभूषं नृत्यन्तमत्यन्तसुरूपदर्शनम्। इति।

पाद्मे शिवराघवसंवादे—

पुनर्ध्यानपरो भूत्वा दीपमध्ये तु पूरुषम्।
शुद्धस्फटिकसङ्काशं त्रिणेत्रं द्विभुजं शिवम्।
वरदं दक्षिणे हस्ते वामे चाभयदं विभुम्।
पञ्चवर्षीयवयसं शरच्चन्द्रायुतद्युतिम्।
माणिक्यकुण्डलोपेतं हेमदामविभूषितम्।
रक्तांगुलीयसुभगं बहुकोष्ठसुभूषणम्।
तनुरक्तोष्ठमाकर्णनीलायतविलोचनम्।
कन्दर्पकार्मुकभ्रान्तिजनकभ्रुवमीश्वरम्।
सुस्निग्धोन्नतचार्वन्तनासमच्छकपोलकम्।
मन्दस्मितप्रसन्नास्यबालेन्दुदशनद्युतिम्।

विज्ञानरत्ननयनं वेदकल्पितनूपुरम् ।
वेदांगुलीयमध्यस्थमणिप्रणवमव्ययम् ।
दृष्ट्वा तथाविधं विष्णुः कृतकृत्योऽभवत्तदा । इति ।

स्कान्दे अगस्त्यसंहितायां हालास्यमाहात्म्ये प्रथमाध्याये—

सर्वज्ञं सांबमीशानं देवदेवं जगद्गुरुम् ।
श्रीमन्तं दक्षिणामूर्तिं त्रिणेत्रं चन्द्रशेखरम् ।
व्याघ्रचर्मपरीताङ्गं शुद्धस्फटिकनिर्मलम् ।
विद्यामुद्रांश्च वह्निश्च ह्यभयश्च (भुजङ्गश्च) भुजैर्धृतम् ।
ध्यात्वा क्षेत्रोत्तमं शम्भोर्वक्तुमारभते तदा । इति ।

पराशरोपपुराणेऽपि—

वरदाभयहस्ताय त्रिणेत्राय त्रिमूर्तये ।
हृदि ध्येयाय नित्याय नमस्सांबाय साक्षिणे । इति ।

त्रिगुणाधारः—सत्वादिगुणत्रयस्याधिष्ठानभूतः परमात्मा ।

त्रयाणाञ्जनकः—त्रयाणां - ब्रह्मविष्णुरुद्राणां जनकः । आदित्यपुराणे मनुं प्रति आदित्यवचनम्—

आत्मभूतान्महादेवाल्लीलाविग्रहधारिणः ।
आदिसर्गे समुद्भूता ब्रह्मविष्णुसुरोत्तमाः ।
तमेकं परमात्मानमादिकारणमीश्वरम् ।
प्राहुर्बहुविधं तत्त्वमिन्द्रम्मित्रमिति श्रुतिः ।
न तस्मादधिकः कश्चिन्न ज्यायान्न समः कुतः ।
तेनेदमखिलं पूर्णं शंकरेण महात्मना । इति ।
आदिसर्गे महादेवो ब्रह्माणमसृजद्विभुः ।

तत्रैव—

दक्षिणांगाद्विरूपाक्षः सृष्टयर्थं लीलया तथा ।
तस्मै वेदान् पुराणानि दत्तवानग्रजन्मने ।
वासुदेवं जगद्योनिं महाविष्णुं सनातनम् ।
असृजत् पालनार्थाय वामभागान्महेश्वरः ।
हृदयात् कालरुद्राख्यं जगत्संहारकारणम् ।
असृजद्योगिनां ध्येयो निर्गुणस्तु स्वयं शिवः । इति ।

पाद्मे शिवराघवसंवादे रामं प्रति शिववचनम्—

दक्षिणेनासृजत् पुत्रं ब्रह्माणं वामतो हरिम् ।
हृत्प्रदेशान्महेशानं त्रीन् पुत्रानसृजत् प्रभुः ।
जातमात्रास्तु ते पुत्रा ब्रह्मविष्णुमहेश्वराः ।
इदमूचुर्वचः स्पष्टं को भवान् के वयन्त्विति ।
तानाह च शिवः पुत्रान् यूयं पुत्रा अहं पिता । इति ।

शैवपुराणे वायवीयसंहितायां दक्षं प्रति दधीचिवचनम्—

ब्रह्मविष्णुमहेशानां स्रष्टा यः प्रभुरव्ययः ।
ब्रह्मादयः पिशाचान्ता यस्य किंकरवादिनः । इति ।

तत्रैवान्यत्र—

यस्य पादरजःस्पर्शात् ब्रह्मत्वं प्राप्तवानजः ।
शार्ङ्गिणाऽपि तथा मूर्ध्ना धार्यते कः शिवात् परः ।
यस्य वामाङ्गजो विष्णुः दक्षिणाङ्गभवो ह्यजः ।
स्वेच्छाविग्रहधारिण्या गौर्या सह पिनाकधृक् ।
भ्रामयत्यखिलं विश्वमिदं शश्वन्न संशयः ।

स एव बध्नाति पशूनस्मदादीन् महेश्वरः ।
संसारमोचको देवः पश्यन्नन्य इति श्रुतिः ।

**स्कान्दे** सनत्कुमारं प्रति नन्दिकेश्वरवचनम्—

सृजसे सकलं देव ग्रससीश पुनः पुनः ।
स्थापयस्यखिलेशान किमिदं तव चेष्टितम् ।
ब्रह्मविष्णुसुराः सर्वे स्थावराणि चराणि च ।
संभूतान्येव भवतो विलासानि भवन्त्यहो ।
दुस्तारतरविस्तारसंसारोत्तारसारथे ।
नमस्सकललोकेश कारणाय नमो नमः । इति ।

**महाभारते आनुशासनिके** षट्चत्वारिंशाध्याये युधिष्ठिरं प्रति श्रीकृष्णवचनम्—

योऽसृजद्दक्षिणादंगाद्ब्रह्माणं लोकसंभवम् ।
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरम् ।
युगान्ते चैव संप्राप्ते रुद्रं हृदयदेशतः ।
स रुद्रस्संहरन् कृत्स्नं जगत् स्थावरजङ्गमम् ।
कालो भूत्वा परं रूपं याति संवर्तकानलः ।
अयमेव महादेवो यन्मे साक्षात्कृतः प्रभुः । इति ।

**शैवे वायवीयसंहितायां** द्वितीयाध्याये—

यस्मात् सर्वमिदं शर्वविष्ण्विन्द्रोपेन्द्रपूर्वकम् ।
सह भूतेन्द्रियैः सर्वैः प्रथमं संप्रसूयते ।
कारणानाञ्च यो धाता भर्ता परमकारणम् ।
न संप्रसूयतेऽन्यस्मात् कुतश्चन कदाचन । इति ।

तत्रैवाष्टमाध्याये—

ततस्तेभ्यो विकारेभ्यः रुद्रविष्णुपितामहाः ।
जगतः कारणत्वेन त्रयो देवा विजज्ञिरे ।
सर्वतो भुवनव्याप्तां शक्तिमव्याहतां क्वचित् ।
ज्ञानमप्रतिघं शश्वदैश्वर्यञ्चाणिमादिकम् ।
सृष्टिस्थितिलयाख्येषु कर्मसु त्रिषु हेतुना ।
प्रभुत्वेन सहैतेषामासीददति महेश्वरः । इति।

पाद्मे पुराणे शिवगीतायां—

यं वातमाहुर्यं रुद्रं शाश्वतं परमेश्वरम् ।
परात्परतरश्चाहुः परात्परतरं शिवम् ।
ब्रह्मणो जनकं विष्णोर्वह्नेर्वायोः सदाशिवम् । इति ।

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः इति श्रुतिः ।

अस्या उपबृंहणं सनत्कुमारसंहितायां प्रभाकरं प्रति श्रीविष्णुवचनम् ।

मतीनाञ्च दिवःपृथ्व्या वह्नेः सूर्यस्य वज्रिणः ।
साक्षादपि च विष्णोश्च सोमो जनयितेश्वरः । इति ।

ब्रह्माण्डपुराणे—

द्यावापृथिव्योरिन्द्राग्न्यो विष्णो र्धातु र्यमस्य च ।
वरुणस्य शशांकस्य जनिता परमेश्वरः । इति ।

कूर्मपुराणे उत्तरभागे—

सर्वासामेव शक्तीनां ब्रह्मविष्णुशिवात्मिकाः ।
प्रधानाः संस्कृता देवाश्शक्तयः परमात्मनः ।
आभ्यः परस्ताद्भगवान् परमात्मा सनातनः ।

गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वरः ।
एनमेके वदन्त्यग्निं नारायणमथापरे ।
इन्द्रमेकेऽपरे प्राणान् ब्रह्माणमपरे जगुः ।
ब्रह्मविष्ण्वग्निवरुणाः सर्वे देवास्तथर्षयः ।
एकस्यैवाथ रुद्रस्य भेदास्ते परिकीर्तिताः । इति ।

**स्कान्दे** वसिष्ठ प्रति ब्रह्मा—

पुराऽभूदेक एवासौ चिन्मात्रवपुरव्ययः ।
सदाशिवो महेशानो व्यापनाद्विष्णुसंज्ञितः ।
ततो गुणमयीम्मायामुपेत्य भगवान् शिवः ।
लोहितां शुक्लकृष्णाञ्च जनयन्तीमजां प्रजाः ।
जनयामास विश्वात्मा हरिरुद्रपितामहान् ।
सुतत्रयं प्रसूयैवं सा माया भगवत्प्रिया ।
आत्मशक्त्या ससर्जाथ कन्यात्रयमनिन्दितम् ।
कन्यान्तु रुद्रो जग्राह कृष्णां सर्वाङ्गसुन्दरीम् ।
सा च विष्णुश्चैकभागो भगिनी सा ततो हरेः ।
हरिस्तु लोहितां वव्रे कन्यां लक्ष्मीसमाह्वयाम् ।
सा चाहमप्येकभागो भगिनी सा ततो मम ।
अहमप्यभजं शुक्लां कन्यां वीणाविनोदिनीम् ।
सा च रुद्रश्चैकभागो भगिनी शंकरस्य सा ।
मत्तो जज्ञे जगत्सर्वं पाल्यते हरिणा त्विदम् ।
काले संहारको रुद्रः पश्चादैक्यं ध्रुवं हि नः । इति ।

**स्कान्दे**—

अजायां जज्ञिरे पुत्राश्चिदानन्दात् सदाशिवात् ।
त्रयस्त्रेताग्निसंकाशा एकपञ्चचतुर्मुखाः ।

सृष्टिस्थितिविनाशानां कर्तारः कार्यकोविदाः ।
ब्रह्मा विष्णुश्च रुद्रश्च मात्रास्तिस्रः प्रकीर्तिताः ।
त्रिभिरेतैर्जगद्व्याप्तं कारणैरात्मसंभवैः ।
अर्धमात्रापरो रुद्रात् शिवः परमकारणम् ।
तस्मादेतत् समुत्पन्नं जगतः कारणत्रयम् । इति ।

ब्रह्माण्डपुराणे—भृगुं प्रति ब्रह्मा

जगदादौ पञ्चवक्त्रः पञ्चवक्त्रात् सदाशिवात् ।
अहं जातो दक्षिणाङ्गाद्वामाङ्गाद्विष्णुरव्ययः ।
स मां नियुक्तवाञ्छम्भु र्जगतः सृष्टिकर्मणि ।
सृष्टस्य जगतो विष्णुं स्थितिकृत्ये नियुक्तवान् ।
तत् कालेन महेशांशः संहृतौ स नियोक्ष्यते । इति ।

पुरुषार्थसुधानिधौ धर्मस्कन्धे सप्तत्रिंशाध्याये सनत्कुमारं प्रति श्रीकृष्णः—

अहं जातोऽस्य वामाङ्गे ब्रह्मा रुद्रस्य दक्षिणे ।
मुखेभ्यश्चतुरो वेदाः साङ्गोपाङ्गपुराणकाः । इति ।

शिवपुराणे—

त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात् ।
ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे पुनः । इति ।

ईशानसंहितायाम्—

हरिकेशस्तदा ताभ्यां भक्त्या परमयाऽर्चितः ।
उवाच वचनञ्चात्र परिपूर्णार्थमन्थरम् ।
शृणु पद्मज मद्वाक्यं त्वं विष्णो गरुडध्वज ।
अहमेव जगत्कर्ता युवयोः कारणं त्वहम् । इति ।

**स्कान्दे** सनत्कुमारसंहितायां कालिकाखण्डे अष्टाचत्वारिंशाध्याये व्यासं प्रति शिवः—

अव्यक्तान्मम लिङ्गात्तु ब्रह्मविष्णुपुरस्सराः ।
चराचरमिदं सर्वं जगज्जातं न संशयः । इति ।

**स्कान्दे** दधीचिं प्रति शुक्रः—

अवध्यो भव विप्रर्षे प्रसादात् त्र्यम्बकस्य तु ।
मृतसञ्जीवनं तस्माल्लब्धमेतन्मया द्विज ।
नास्ति मृत्युभयं शम्भोर्भक्तानामिह सुव्रत ।
मृतसञ्जीवनञ्चापि श्रोतुमद्य वदामि ते ।
त्र्यम्बकं यजामहे त्रैलोक्यपितरं प्रभुम् ।
त्रिमण्डलस्य पितरं त्रिगुणस्य महेश्वरम् ।
त्रिमूर्तीनाञ्च पितरं त्रिशक्तीनां सदाशिवम् ।
त्रितत्त्वस्य त्रिवह्नेश्च त्रिधाभूतस्य सर्वतः ।
त्रिवेदस्य महादेवं सुगन्धिं पुष्टिवर्धनम् ।
सर्वभूतेषु सर्वत्र गुणेषु प्रकृतौ तथा ।
इन्द्रियेषु तथाऽन्येषु देवेषु च गणेषु च ।
पुष्पेषु गन्धवत् सूक्ष्मसुलिङ्गं परमेश्वरः ।
पुष्टिश्च प्रकृतेर्यस्मात् पुरुषस्य द्विजोत्तम ।
महदादिविशेषान्तविकल्पस्यापि सुव्रत ।
विष्णोः पितामहस्यापि मुनीनाञ्च महामुने ।
इन्द्रस्य चैव देवानां तस्माद्वै पुष्टिवर्धनम् ।
तं देवममृतं रुद्रं कर्मणा मनसा गिरा ।
स्वाध्यायेनापि ध्यानेन ज्ञानेन च यजामहे ।
सत्येनानेन मुक्षीय मृत्युपाशाद्भयङ्करात् ।
बन्धमोक्षकरो यस्मादुर्वारुकमिव प्रभुः ।
मृतसञ्जीवनो मन्त्रो मया लब्धश्च शङ्करात्

जप्त्वा हुत्वाऽभिमन्त्र्यैव जलं पीत्वा दिवानिशम् ।
लिङ्गस्य सन्निधौ ध्यात्वा नास्ति मृत्युभयं द्विज । इति ।

त्रिणेत्रं त्रिगुणाधारं त्रयाणां जनकं विभुम् ।
स्मरन्नमश्शिवायेति ललाटे तु त्रिपुण्ड्रकम् । इति श्रुतिः ।

तापनीयोपनिषदि—

तमसो द्रष्टा—तमसः-कारणस्वरूपस्य द्रष्टा साक्षी । तमसो द्रष्टा सर्वस्य द्रष्टेति श्रुतिः ।

तमसस्साक्षी—स्पष्टम् । तमसस्साक्षीति श्रुतिः ।

तुर्योङ्काराग्रविद्योतम्—ओतादिरूपस्य तुर्योङ्कारस्य-बिन्दुनादशक्तिशान्तरूपस्य अग्रे-पूर्वभागे तत्साक्षितया विद्योतमानं-प्रकाशमानं स्वत एव । तुर्योङ्काराग्रविद्योतमनुष्टुभा नत्वा इति श्रुतिः ।

तुरीयतुरीयम्—शुद्धचैतन्यस्वरूपम् । ओङ्काराग्रविद्योतं तुरीयतुरीयमात्मानमिति श्रुतिः ।

तमसः परः—आदित्यपुराणे त्रिषष्टितमाध्याये नारदं प्रति ब्रह्मा—

प्रणम्य शङ्करं शान्तमप्रमेयमनाकुलम् ।
परञ्ज्योतिरनाद्यन्तं निर्गुणं तमसः परम् । इति ।

कौर्मे ईश्वरगीतायां द्वितीयाध्याये—

आत्माऽयं केवलः स्वच्छः शान्तः सूक्ष्मः सनातनः ।
अस्ति सर्वान्तरः कश्चिच्चिन्मात्रः तमसः परः । इति ।

बाह्यान्तरवीक्षणात् सुविस्पष्टस्तमसः परः इति श्रुतिः ।

केनोपनिषदि—

देवः—द्योतनवान्, वेदनस्वरूप इत्यर्थः । तदुक्तं वासिष्ठे—

न देवः पुण्डरीकाक्षो न च देवस्त्रिलोचनः ।

न देवो देहरूपोऽपि न देवश्चित्तरूपकः ।
अकृत्रिममनाद्यन्तं वेदनं देव उच्यते । इति ।

चक्षुश्श्रोत्रं क उ देवो युनक्ति इति श्रुतिः ।

काठकोपनिषदि—

दुर्दर्शः—दुःखेन दर्शनमस्येति दुर्दर्शः । तं दुर्दर्शं गूढमनुप्रविष्टम् इति श्रुतिः ।

दिव्यः—द्योतनवान्, स्वयञ्ज्योतिष्ट्वात् । दिवि वा स्वात्मनि भवः, अलौकिको वा । दिव्यो ह्यमूर्तः पुरुषः इति श्रुतिः ।

तैत्तरीये—

द्यावापृथिवी जनयन्—द्यावापृथिव्युपलक्षितत्रैलोक्यात्मकविराड्जनकः । । त्य पुराणे—

विश्वतश्चक्षुरीशानस्त्रिशूली विश्वतोमुखः ।
तथैव विश्वतोबाहुर्विश्वतःपादसंयुतः ।
द्यावाभूमी च जनयन् देव एकः पुरातनः । इति ।

द्यावापृथिवी जनयन् देव एकः इति श्रुतिः ।

छान्दोग्ये—

द्यौः—द्योतनवान्, स्वयंप्रकाशस्वरूपः । त्रिपादस्यामृतं दिवि इति श्रुतिः ।

दिवः परः—द्युलोकात् परं ज्योतिरित्यर्थः । अथ यदतः परो दिवो ज्योतिरिति श्रुतिः ।

दिवोज्यायान् । द्युलोकादपि महत्तरः । ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः इति श्रुतिः ।

देवता—सदाख्या तेजोबन्नयोनिः । सेयं देवतैक्षतेति श्रुतिः ।

दहरः—सूक्ष्मतरः । हृदयपुण्डरीकस्य अल्पत्वात् तदन्तर्वर्तिनोऽप्यल्पत्वमेव, स्वतस्तु आकाशवत् परिपूर्णः परमेश्वर इत्यर्थः । तदुक्तं सूत्रकृता दहर उत्तरेभ्यः इति । दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः इति श्रुतिः ।

**बृहदारण्यके**—

**द्रष्टव्यः**—साक्षात्कर्तव्य इत्यर्थः । तदुक्तं **स्कान्दे**—

**सुखाभिलाषिभिर्नित्यं त्यक्त्वा कर्माणि सादरम् ।**
**द्रष्टव्यश्च सदा नित्यं श्रोतव्यश्च तथैव च ।**
**मन्तव्यश्च विचिन्त्यश्च, सर्वं तद्दर्शनादिभिः ।**
**विदितं तदभेदेन भवत्यत्र न संशयः ।** इति ।

**आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः** इति श्रुतिः ।

**दृष्टेर्द्रष्टा**—रूपविषयसंप्रयुक्तचक्षुर्द्वारा रूपोपरागेण जायमाना स्वरूपचिच्छायाव्याप्ता बुद्धिवृत्तिः षष्ठ्यन्तदृष्टिपदेन विवक्षिता, तस्या लौकिक्या दृष्टेः कर्मभूतायाः द्रष्टा - स्वकीयया नित्यया दृष्ट्या व्याप्ता । तदुक्तं **वार्तिकसारे**—

**द्रष्टृदर्शनदृश्यानां साक्षिणः स्वप्रभस्य तत् ।**
**प्रमाणागोचरत्वं तु वस्तुस्वाभाव्यतो भवेत् ।**
**दृष्टेर्नपश्येद्द्रष्टारमिति प्रत्युत्तरं वचः ।**
**वक्त्यगोचरतामेतद्वाक्यं व्याक्रियते स्फुटम् ।**
**चक्षुर्जन्यमनोवृत्तिश्चिद्युक्ता रूपभासिका ।**
**दृष्टिरित्युच्यते, द्रष्टा दृष्टेः कर्तेति लौकिकैः ।**
**अतो दृष्टिद्वयं वाक्ये भाति षष्ठ्यन्तशब्दतः ।**
**एका दृष्टिस्तृजन्तेन धातुनाऽन्येति तद्द्वयम् ।**
**भर्तृप्रपञ्चो व्याख्याति वाक्यं दृष्टिद्वयं विना ।**
**दृष्टिष्षष्ठ्यन्तशब्दोक्ता कर्तृमात्रं तृजन्ततः ।**
**मैवं पदे तृजन्तेऽस्मिन् प्रकृतिप्रत्ययद्वयात् ।**
**दृष्टितत्कर्तृसंसिद्धेः षष्ठ्यन्तस्यानपेक्षणात् ।**
**अतो दृष्टिद्वयं वाच्यं नित्यानित्यविभेदि तत् ।**
**मनोवृत्तिरनित्याऽन्या साक्षिचैतन्यरूपिणी ।**

वृत्तिर्जडाप्यसावात्मचैतन्यच्छायया युता ।
चैतन्यवद्भासकत्वात् दृष्टिशब्दार्थतां व्रजेत् ।
यत्सर्वव्यापि चैतन्यं तद्दृष्टि व्याप्नुयात् तया ।
दृष्ट्यैकतामुपगतमागन्तुकमिवेक्ष्यते ।
व्याप्तृत्वमेव द्रष्टृत्वं नाक्रिये द्रष्टृता स्वतः ।
न धूमाग्न्योरिव व्याप्तिः किन्तु स्रक्सर्पयोरिव ।
कार्त्स्न्येन यत्र वृत्तिः स्याद्व्याप्यव्यापकवस्तुनोः ।
व्याप्तिस्तत्रैव मुख्या स्यात् स्रग्जसर्पादिवस्तुवत् ।
देशकालदिसंभेदादसाधारणतत्त्वयोः ।
व्याप्तिर्न मुख्या धूमाग्न्योर्हिमवद्विन्ध्ययोरिव ।
क्रियाकारकरूपा धीरक्रियाकारकात्मना ।
व्याप्त्यैव जायते कुम्भ आकाशेन यथा तथा ।
व्याप्या दृष्टिर्जन्मवत्त्वादनित्या व्यापिका त्वियम् ।
कूटस्थत्वेन साक्षित्वान्नित्या जन्मादिवर्जनात् ।
कूटस्थदृष्टिस्तन्मोहो दृष्ट्याभासश्च तत् त्रयम् ।
साक्षी सर्वजगद्धेतुर्नियन्तेति च भण्यते ।
कूटस्थदृष्टेस्साक्षित्वं स्वमोहाभासवर्त्मना ।
साक्ष्येणार्थेन संबन्धात् सिद्ध्यत्येव स्वतो न तु ।
व्यावृत्तत्वेन मात्रादेस्सिद्धस्साक्षी सुषुप्तगः ।
नावेदिषं सुषुप्तेऽहमिति धीर्नान्यथा भवेत् ।
बुद्ध्यादेः प्रविलीनत्वाद्देहादेश्च जडत्वतः ।
लोष्टादेरिव नैव स्यान्नाज्ञासिषमितीक्षणम् ।
प्रत्यक्साक्ष्यतिरेकेण नाभावोऽपि प्रसिद्ध्यति ।
किमु भावो जगत्यस्मिन् साक्षी चानन्यसिद्धिकः ।
शून्यस्यापि हि शून्यत्वं तत्साक्षिणि सतीष्यते ।

असाक्षिकं चेत् तत्सिद्धं साक्षिवत्स्यात्स्वयंप्रभम् ।
न देशकालावस्थादेरपेक्षा साक्षिसिद्धये ।
देशादेस्साक्ष्यपेक्षत्वात् स्वतस्सिध्यति साक्ष्यतः ।
जन्मनाशादिसाक्षित्वाज्जन्मनाशादिवर्जिता ।
साक्षिदृष्टिरियं नित्या मोहजन्या तथेतरा ।
अविचारितसंसिद्धिर्मोहोऽयं साक्षिसन्निधेः ।
साभासो मातृमानादिर्भवेद्धर्माद्यपेक्षया ।
स्मृतिनिश्चयसन्देहरागद्वेषादिवृत्तिषु ।
अहंरूपेण योऽन्वेति स प्रमाता ह्यनित्यचित् ।
स्मराम्यहं निश्चिनोमि संशये रागवानिति ।
अहंरूपान्वयः स्पष्टः कर्ता भोक्ताऽप्यसौ भवेत् ।
प्रत्यङ्मोहोत्थबुद्ध्यादेः जडरूपप्रधानतः ।
कर्तृता भोक्तृता त्वस्य चिदाभासप्रधानतः ।
प्रमातु र्जायते वृत्तिश्चक्षुषा रूपरञ्जिता ।
द्रष्टव्यं तु तया रूपं न साक्षी दृश्यते तया ।
दृष्टेर्द्रष्टारमात्मानं दृष्ट्या पश्येन्न दृश्यया ।
इति वाक्यं मुनिर्वक्ति वर्णितन्यायगर्भितम् ।

**न दृष्टेर्द्रष्टारं पश्येः** इति श्रुतिः ।

**दिवि तिष्ठन् दिवोऽन्तरः दिक्षु तिष्ठन् दिग्भ्योऽन्तरः**—स्पष्टम् । **यो दिवि तिष्ठन्नि**त्यादिश्रुतिः ।

**द्रष्टा**—दर्शनक्रियासाक्षी । **अदृष्टो द्रष्टा अश्रुतः श्रोते**ति श्रुतिः ,

**द्रष्टुर्दृष्टिः ।** द्रष्टुः—दृशिकर्तुः या दृष्टिः तस्या दृष्टेः विपरिलोपो विनाशो न विद्यते, यथाऽग्नेरौष्ण्यं यावदग्निभावि तथा, अयञ्चात्मा द्रष्टा अविनाशी, अतोऽविनाशित्वादात्मनो दृष्टिरप्यविनाशिनी, यावद्द्रष्टृभाविनी हि सा ।

ननु विप्रतिषिद्धमिदमभिधीयते - द्रष्टुः सा दृष्टिः, न विपरिलुप्यते इति च, दृष्टिश्च द्रष्ट्रा क्रियते, दृष्टिकर्तृत्वाच्च हि द्रष्टेत्युच्यते। क्रियमाणा च द्रष्ट्रा दृष्टिः, न विपरिलुप्यते, इति च न शक्यं वक्तुम्। ननु न विपरिलुप्यते इति वचनादविनाशिनी स्यात् - वचनस्य ज्ञापकत्वात्, न हि न्यायप्राप्तो विनाशः कृतकस्य वचनशतेनापि वारयितुं शक्यते, वचनस्य यथाप्राप्तार्थप्रमापकत्वात् -

नैष दोषः—आदित्यादिप्रकाशवद्दर्शनोपपत्तेः। यथा आदित्यादयो हि नित्यप्रकाशस्वभावा एव सन्तः स्वाभाविकेन नित्येनैव प्रकाशेन प्रकाशयन्ति, न ह्यप्रकाशात्मानः सन्तः प्रकाशं कुर्वन्तः प्रकाशयन्तीत्युच्यते। किन्तर्हि,स्वभावेनैव प्रकाशेन। तथा अयमप्यात्मा अविपरिलुप्तस्वभावया नित्यया दृष्ट्या द्रष्टेत्युच्यते। गौणं तर्हि द्रष्टृत्वं - न - एवमेव मुख्यत्वोपपत्तेः। यदि ह्यन्यथाऽप्यात्मनो द्रष्टृत्वं दृष्टं तदाऽस्य द्रष्टृत्वस्य गौणत्वम्। न त्वात्मनः अन्यो दर्शनप्रकारोऽस्ति। तदेवमेव मुख्यं द्रष्टृत्वमुपपद्यते, नान्यथा। यथा आदित्यादीनां प्रकाशयितृत्वं नित्येनैव स्वाभाविकेनाक्रियमाणेन प्रकाशेन, तदेव च प्रकाशयितृत्वं मुख्यं, प्रकाशयितृत्वान्तरानुपपत्तेः। तस्मान्न 'द्रष्टुर्दृष्टिः न विपरिलुप्यते' इति च विप्रतिषेधगन्धोऽप्यस्ति।

नन्वनित्यक्रियाकर्तृत्वविषय एव तृच्प्रत्ययान्तस्य शब्दस्य प्रयोगो दृष्टः यथा छेत्ता भेत्ता इति, तथा द्रष्टेत्यत्रापीति चेत्—

न—प्रकाशयितेति दृष्टत्वात्। भवतु प्रकाशेषु, अन्यथा असंभवात्, नात्मनीति चेन्न - दृष्ट्यविपरिलोपश्रुतेः। पश्यामि न पश्यामीति अनुभवदर्शनान्नेति चेन्न - करणव्यापारविशेषापेक्षत्वात्। उद्धृतचक्षुषाञ्च स्वप्ने दृष्टेरविपरिलोपदर्शनात्।

तस्मादविपरिलुप्तस्वभावैवात्मनो दृष्टिः। अतस्तया अविपरिलुप्तया दृष्ट्या स्वयञ्ज्योतिःस्वभावया पश्यन्नेव भवति सुषुप्ते। तदुक्तं **वार्तिकसारे**—

**ननु शोकादिवत्सुप्तौ चैतन्यमपि लुप्यते।**
**सुप्तौ न पश्यतीत्येवमाहुस्सर्वेऽपि लौकिकाः।**
**आत्मन्यदृष्टवशतो ज्ञानमिच्छादिवद्भवेत्।**
**इत्याहुस्तार्किकाः सुप्तौ न ज्ञानं कर्मणः क्षयात्।**
**यद्वैतन्नेत्यादिवाक्यैरस्योत्तरमुदीर्यते।**

न चिल्लोपः किन्तु बुद्धेर्लोप इत्येतदुत्तरम् ।
तच्छब्दः सुप्तिमाचष्टे वैशब्दोऽवधृतौ भवेत् ।
तत्र सुप्तौ पुमान्नैवपश्यतीति जना जगुः ।
अदर्शनं सर्वथेति यदाहुरविवेकिनः ।
तद्विवेच्यं तदा चात्मा पश्यन्नेव न पश्यति ।
पश्यन्नेव कथं सुप्त इति चेदभिधीयते ।
द्रष्टुर्न लुप्यते दृष्टि र्यस्मात् पश्यन्नतः स्थितः ।
को द्रष्टा काच सा दृष्टिर्या न लुप्यति तच्छृणु ।
दर्शनाख्यक्रियाकर्ता द्रष्टा स्यात् बुद्ध्युपाधिकः ।
चक्षुर्द्वारा धियो वृत्ति र्निर्गता रूपभासिनी ।
दर्शनाख्यक्रिया तस्याः कर्ताऽऽत्मा बुद्धिसंयुतः ।
प्रज्ञया चक्षुरारुह्य चक्षुषा रूपमीक्षते ।
इत्येषा प्रक्रिया स्पष्टं श्रुता कौषीतकिश्रुतौ ।
पश्यामीत्यभिमानो यश्चक्षुरारोहणं हि तत् ।
अभिमानश्च नायं मे किन्त्वसौ बुद्ध्युपाधिके ।
तस्य द्रष्टुर्भासिका या चिदेषा दृष्टिरुच्यते ।
तदेतत् साक्षिचैतन्यमित्याहुर्वेदवादिनः ।
साक्षी चेता केवलश्चेत्यादिवाक्यमधीयते ।
किञ्चानुव्यवसायोऽयमित्याहुस्तार्किका अपि ।
व्यवसायो बुद्धिवृत्ति र्दृश्यमात्रावभासिका ।
द्रष्टृदर्शनदृश्यानि भान्त्यनुव्यवसायतः ।
जिघ्राणीममहंगन्धमिति यो वेत्ति तत्त्रयम् ।
स आत्मेति त्रयस्यास्य छन्दोगास्साक्षिणं जगुः ।
ननु साक्षिण्यसङ्गेऽयं दृष्टिशब्दो न युज्यते ।
दृशिधातोः क्रियैवाऽर्थस्तद्भावः प्रत्ययस्य च ।

बाढं चाक्षुषधीवृत्तिं दृष्टिशब्दः क्रियां ब्रवन् ।
भास्यभासकसंबन्धाल्लक्षयेद्वृत्तिसाक्षिणम्
अक्रियाकर्तुरप्यस्ति भासकत्वं चिदात्मनः ।
अदीप्तिकर्ताऽप्यादित्यो जगद्दीपयते यथा ।
दीपकत्वोपचारोऽस्मिन् भवेत् सन्निधिमात्रतः ।
इति चेद्भासकत्वञ्च चिदात्मन्युपचर्यताम् ।

**न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते** इति श्रुतिः ।

**श्वेताश्वतरोपनिषदि—**

**दीपोपमः**—दीपस्थानीयः, प्रकाशस्वरूपः । **दीपोपमेनेह युक्तःप्रपश्येदि**ति श्रुतिः

**देवानां प्रभवः**—देवनामिन्द्रादीनां प्रभवहेतुः, उत्पत्तिहेतुरित्यर्थः ।

**देवानामुद्भवः**—देवानामिन्द्रादीनामुद्भवो विभूतियोगः तस्मिन् हेतुः ।

**यो देवानां प्रभवश्चोद्भवश्चेति** श्रुतिः ।

**देवतानां परमो दैवतः**—इन्द्रादिदेवतानामुत्कृष्टदैवत इत्यर्थः । **तं देवतानां परमञ्च दैवत**मिति श्रुतिः ।

**काठकोपनिषदि—**

**धर्मः**—सर्वप्रपञ्च धारकः । **न हि सुविज्ञेयमणुरेष धर्मः** इति श्रुतिः ।

**ध्रुवम्**—अविचाल्यं, कूटस्थम् । **ध्रुवमध्रुवेष्विह न प्रार्थयन्ते** इति श्रुतिः ।

**धर्म्यम्**—धर्मात्—स्वरूपादनपेतमप्रच्युतम् । **प्रवृह्य धर्म्यमणुमेतमाप्येति** श्रुतिः ।

**मुण्डके—**

**धाम**—सर्वकामानामाश्रयं ब्रह्मेत्यर्थः । तदुक्तमीश्वरगीतायाम्—

तद्विज्ञानेन परिपश्यन्ति धीरा विभ्राजमानं विमलं व्योम धाम ।
ततस्ततः परिपश्यन्ति धीरा आत्मन्यात्मानमनुभूयानुभूय । इति ।
भगवताऽपि—न तद्भासयते सूर्यो न शशाङ्को न पावकः ।

यद्गत्वा न निवर्तन्ते तद्धाम परमं मम । इति ।

स वेदैतत् परमं ब्रह्म धाम इति श्रुतिः ।

श्वेताश्वतरे—

धर्मावहः—धर्मप्रापकः । धर्मावहं पापनुदं भगेशं इति श्रुतिः ।

अथर्वशिखायाम्—

ध्येयः—ध्यातव्यः । पाद्मे कल्याणकाण्डे सप्तर्षयः—

जय देव महाभाग जय त्रिपुरमर्दन ।
जय दक्षमखाराते जय त्रिपथगाधर ।
ईशानाय नमस्तुभ्यं त्रिणेत्राय नमो नमः ।
ध्येयाय ध्यानरूपाय ध्यापयित्रे नमो नमः । इति ।

स्कान्दे—

अतो मोक्षार्थिभिः प्राज्ञैश्शिव एव शिवङ्करः ।
सर्वमन्यत् परित्यज्य दैवतं परमेश्वरात् ।
शिखा चाथर्वणी साध्वी सर्ववेदोत्तमोत्तमा ।
अस्मिन्नर्थे समाप्ता सा श्रुतयश्चापरा अपि । इति ।
रुद्रस्संसारमग्नानां साक्षात् संसारमोचकः ।
अतः सर्वं परित्यज्य शिवादन्यत्तु दैवतम् ।
शिव एकःसदा ध्येयः साक्षात् संसारमोचकः । इति ।
एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते ।
दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् इति च पुराणान्तरे । ध्यान

लक्षणमुक्तं पुराणान्तरे—

द्रग्दृश्यात्मनोर्मध्ये यच्चिद्व्योमावभासते ।
तस्मिन् चित्तसमाधानं तद्ध्यानं कथ्यते बुधैः ।
चित्तवृत्तिनिरोधेऽन्तश्चित्सुखं भाति यत्तदा ।
तस्मिंश्चित्तसमाधानं तद्ध्यानं कथ्यते बुधैः । इति ।

**शिव एको ध्येयश्शिवङ्करस्सर्वमन्यत्परित्यज्य समाप्ताऽथर्वशिखा** इति श्रुतिः ।

**केनोपनिषदि—**

**नेदिष्ठम्**—अन्तिकतमम्, प्रियतमम् । **ते ह्येनं नेदिष्ठं पस्पर्शु**रिति श्रुतिः ।

**काठकोपनिषदि—**

**नित्यः**—अविनाशी । **अजो नित्यः शाश्वतः** इति श्रुतिः ।

**नित्यानां नित्यः**—अविनाशिनामप्यविनाशी । **नित्यो नित्यानां चेतनश्चेतनानां** इति श्रुतिः ।

**मुण्डकोपनिषदि ।**

**निष्कलम्**—प्राणादिकलारहितं । **विरजं ब्रह्म निष्कल**मिति श्रुतिः ।

**निधानम्**—पुरुषार्थरूपेण निधीयत इति निधानम् । **यत्र तत् सत्यस्य परमं निधान**मिति श्रुतिः ।

**माण्डूक्योपनिषदि—**

**नान्तःप्रज्ञम् । नबहिःप्रज्ञम् । नोभयतःप्रज्ञम् । नप्रज्ञानघनम् । नप्रज्ञं । नाप्रज्ञम् ।** नन्तःप्रज्ञमिति तैजसप्रतिषेधः । नबहिःप्रज्ञमिति विश्वप्रतिषेधः । नोभयतःप्रज्ञमिति अन्तरालावस्थाप्रतिषेधः । नप्रज्ञानघनमिति सुषुप्त्यवस्थाप्रतिषेधः । नप्रज्ञमिति युगपत्सर्वविषय-प्रज्ञातृत्वप्रतिषेधः । नाप्रज्ञमित्यचैतन्यप्रतिषेधः । उक्तञ्च **गौडपादाचार्यैः**—

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिद्ध्यतः ।**

कार्यं - क्रियत इति फलभावः । कारणं-करोतीति बीजभावः । तत्त्वाग्रहणान्यथाग्रहणाभ्यां बीजफलभावाभ्यां तौ-यथोक्तौ विश्वतैजसौ बद्धौ - संगृहीताविष्येते । प्राज्ञश्च बीजभावेनैव बद्धः । तत्त्वाप्रतिबोधमात्रमेव हि बीजं प्राज्ञत्वे निमित्तं । तस्मात् द्वौ तौ बीजफलभावौ तत्त्वाग्रहणान्य-थाग्रहणे तुरीये न सिद्ध्यतः-न विद्येते - न संभवत इत्यर्थः ।

**नात्मानं न परञ्चैव न सत्यं नापि चानृतम् ।**
**प्राज्ञः किञ्चन संवेत्ति तुर्यं तत् सर्वदृक् सदा ।**

कथं पुनः कारणबद्धत्वं प्राज्ञस्य तुर्ये वा तत्त्वाग्रहणान्यथाग्रहणलक्षणौ न सिद्ध्यतः ? इति। यस्मादात्मानं परं-विलक्षणं अविद्याबीजप्रसूतं वेद्यं बाह्यं द्वैतं च प्राज्ञो न किञ्चन संवेत्ति, यथा विश्वतैजसौ। ततश्चासौ तत्त्वाग्रहणेन तमसा अन्यथाग्रहणबीजभूतेन बद्धो भवतीति। यस्मात् तुर्यं तत् सर्वदृक सदा, तुर्यादन्यस्याभावात् सदैव भवति, सर्वञ्च तत् सदा दृक्चेति सर्वदृक, तस्मान्न तत्त्वाग्रहणलक्षणं बीजं तत्र, तत्प्रसूतस्यान्यथाग्रहणस्याप्यत एवाभावः। न हि सवितरि सदाप्रकाशात्मके तद्विरुद्धमप्रकाशनमन्यथाप्रकाशनं वा संभवति। न हिं द्रष्टुर्द्दष्टेर्विपरिलोपो विद्यते इति श्रुतिः। अथ वा जाग्रत्स्वप्नयोस्सर्वभूतावस्थस्सर्ववस्तुदृगाभासस्तुर्य एवेति सर्वदृक् सदा। नान्योऽतोऽस्तिद्रष्टेत्यादिश्रुतेः।

**अन्यथागृह्णतः स्वप्नो निद्रा तत्त्वमजानतः।**
**विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते।**

स्वप्नजागरितयोः अन्यथा - रज्वांसर्पवत् गृह्णतस्तत्त्वं स्वप्नो भवति। निद्रा तत्त्वमजानतः तिसृष्वप्यवस्थासु तुल्या। स्वप्ननिद्रयोस्तुल्यत्वाद्विश्वतैजसयोरेकराशित्वम्। अन्यथाग्रहणप्राधान्याञ्च गुणभूता निद्रेति तस्मिन् विपर्यासः स्वप्नः, तृतीये तु स्थाने तत्त्वाज्ञानलक्षणा निद्रैव केवला विपर्यासः, अतस्तयोः कार्यकारणस्थानयोः अन्यथाग्रहणतत्त्वाग्रहणलक्षणे विपर्यासे कार्यकारणबन्धरूपे परमार्थतत्त्वप्रतिबोधतः क्षीणे तुरीयं पदमश्नुते - तदा उभयलक्षणं बन्धनं तत्रापश्यन् तुरीये निश्चितो भवतीत्यर्थः।

श्रुतिस्तु-उक्तक्रमैव।

**तैत्तरीयके—**

**नाकः**—कं सुखं, तद्विरोधी अकं दुःखं, तन्न विद्यत यास्मान्नाते स नाकः। **परेण नाकं निहितं गुहायां** इति श्रुतिः।

**नारायणः**—नृ नयने, पचाद्यच्, नरः-नेता सर्वस्य स्वामी, तस्यापत्यानि नाराः सर्वे चेतना अचेतनाश्च, तेषामयनं प्रतिष्ठात्वेनाश्रयभूतः जलचन्द्राणां बिंबचन्द्रवत् कलधौतादीनां शुक्त्यादिवच्च नारायणः। पूर्वपदात्संज्ञायामिति णत्वम्।

अथवा नर आत्मा, ततो जातान्याकाशादीनि नाराणि, तानि कार्याणि अयति कारणात्मना व्याप्नोति अतश्चान्यस्यायनं इति नारायणः।

यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्यर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः इति मन्त्रवर्णात् ।
नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः । इति महाभारते ।

अथवा नराज्जातानि नाराणि, तेषामयनं लयस्थानम् । यत्प्रयन्त्यभिसंविशंतीति श्रुतेः ।

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं प्रोक्तं तेन नारायणः स्मृतः । इति मनुवचनात् ।
नारायणाय नम इत्ययमेव मन्त्रः
संसारघोरविषसंहरणाय दक्षः ।
शृण्वन्तु भव्यमतयो यतयोऽस्तरागा
उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः ।। इति नारसिंहपुराणे ।

स्कान्देपि—

नारायणाय नरकार्णवतारणाय
नानाविधस्य जगतः स्थितिकारणाय ।
मोहावृतस्य निखिलस्य जनस्य सद्यः
श्रेयस्कराय पुरुषाय नमः परस्मै । इति
मुहूर्तमपि यो ध्यायेन्नारायणमतन्द्रितः ।
सोऽपि सिद्धिमवाप्नोति किं पुनस्तत्परायणः । इति
आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा । इति च ।

नारायणमात्मानं ज्ञात्वा सर्गस्थितिप्रलयहेतुम् ।
सर्वज्ञस्सर्वगतस्सर्वेश्वरो भवति इत्यभियुक्तवचनाच्च ।

नारायणाय विद्महे इति श्रुतिः ।

छान्दोग्ये—

**नामरूपयोर्निर्वहिता**—नामरूपयोरात्मस्थयोर्जगद्बीजभूतयोस्सलिलस्येव फेनस्थानीययोः निर्वहिता-निर्वोढा-व्याकर्ता । आकाशो ह वै नाम नामरूपयोर्निर्वहितेति श्रुतिः ।

बृहदारण्यके—

निदिध्यासितव्यः—चिन्तयितव्यः। चिन्तनं नाम श्रवणमननाभ्यामधिगतेऽर्थे साक्षात्कारं जनयितुं विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहः। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इति श्रुतिः।

ब्रह्मोपनिषदि—

निर्वाणम्—निर्गतं वाणं—स्थूलशरीरं दुर्गन्धविनाशकर्तृत्वेन तेनोपलक्षितमज्ञानं सकार्यं संस्कारश्च यस्मात् तन्निर्वाणं, सुखस्वरूपमित्यर्थः। तदुक्तं श्रीविष्णुपुराणे—

अनेकजन्मसाहस्रीं संसारपदवीं व्रजन्।
मोहश्रमं प्रयातोऽसौ वासनारेणुकुण्ठितः।
प्रक्षाल्यते यदा सोऽस्य रेणुर्ज्ञानोष्णवारिणा।
तदा संसारपान्थस्य याति मोहश्रमश्शमम्।
मोहश्रमे शमं याते स्वस्थान्तःकरणः पुमान्।
अनन्यातिशयोद्बोधः परंनिर्वाणमृच्छति।
निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः।
दुःखाज्ञानमला धर्माः प्रकृतेस्ते तु नात्मनः। इति।
नित्योदितं विमलमेकमनन्तमाद्यं
ब्रह्मास्ति नेतरकलाकलनं हि किञ्चित्।
इत्येव भावय निरञ्जनतामुपेतो
निर्वाणमेहि सकलामलशान्तवृत्तिः इति वासिष्ठे।

एकमेव तत् परं ब्रह्म विभाति निर्वाणं इति श्रुतिः।

निर्गुणः—गुणरहितः। तदुक्तमाचार्यैः—

निर्गुणो निष्क्रियो नित्यो निर्विकल्पो निरञ्जनः।
निर्विकारो निराकारो नित्यमुक्तोऽस्मि निर्मलः। इति।

शिवपुराणे एकषष्टितमाध्याये शक्रं प्रति उपमन्युः—

स एव निर्गुणस्सर्वे सगुणाश्च सुरासुराः।
देहिनो निष्कलश्शम्भुः कथं स गुणवान् भवेत्। इति।

**ईश्वरगीतायाम्**—

अव्यक्तं कारणं यत्तदक्षरं परमं पदम् ।
निर्गुणं शुद्धविज्ञानं सदा पश्यन्ति सूरयः । इति ।

**साक्षी चेता केवलो निर्गुणश्च** इति श्रुतिः ।

**कैवल्योपनिषदि**—

**नीलकण्ठः**—कालकण्ठः । **पाद्मे** पुराणे मार्कण्डेयः—

नीलकण्ठं विरूपाक्षं निर्मलं निरुपप्लवम् ।
नमामि शिरसा देवं किन्नो मृत्युः करिष्यति । इति ।

**तत्रैव**—देवर्षयः

ओन्नमो नीलकण्ठायेत्यब्रुवन् मन्त्रमैश्वरम् ।
संसारविषदष्टानामुत्तमं परमौषधम् ।
ध्यायमानो महादेवं नीलकण्ठश्चतुर्भुजम् ।
प्रणम्य गिरिजाधीशं प्रणतार्तिहरं परम् ।
प्राह तेषामृषीणां तां कथां श्रीनन्दिकेश्वरः ।
श्रोतॄणामपि वक्तॄणामपि कैवल्यदायिनीम् । इति ।

**तत्रैव** द्वितीयाध्याये विष्णुं प्रति ब्रह्मवचनम्—

कालकूटमिदं पश्य कण्ठभूषणमीशितुः ।
सुराङ्गनानां सर्वासां कण्ठमंगलदायकम् ।
हैमवत्या विशालाक्ष्याः कटाक्षैरमृतोपमैः ।
शीतलीकृतमीशस्य कण्ठभूषां भवद्विषम् ।
श्रुत्वेति ब्रह्मणो वाक्यं देवासुरवचांसि च ।
स्थापयित्वा विषं कण्ठे नीलकण्ठश्शिवोऽभवत् ।
ततो दैत्याश्च देवाश्च ब्रह्मेन्द्रोपेन्द्रसंहिताः ।
तुष्टुवुर्देवदेवेशं नीलकण्ठमुमापतिम् ।
ओन्नमो नीलकण्ठाय महादेवाय ते नमः ।
नमश्शिवाय सोमाय शाश्वताय नमो नमः । इति ।

**शिवधर्मे** सनत्कुमारं प्रति नन्दिकेश्वरः ।

**नीलकण्ठाय नित्याय अजायामितमूर्तये ।**
**बहुरूपाय शान्ताय शाश्वताय नमो नमः ।** इति ।

**शिवरहस्ये** अष्टमाध्याये भैरवः—

**कालकूटहर श्रीमन् कालकाल कृपानिधे ।**
**श्रीनीलकण्ठ कामारे उतोत इषवे नमः** इति ।
**उमासहायमोमर्थं विभुं साक्षात् त्रिलोचनम् ।**
**नीलकण्ठप्रभान्तस्थं ध्यायेन्नित्यमतन्द्रितः ।** इति च ।

**त्रिलोचनं नीलकण्ठ**मिति श्रुतिः ।

**श्वेताश्वतरोपनिषदि**—

**निहितार्थः**—अगृहीतप्रयोजनः, स्वार्थनिरपेक्ष इत्यर्थः । **वर्णाननेकान्निहितार्थो दधाति** इति श्रुतिः ।

**निष्क्रियः**—स्वमहिमप्रतिष्ठितः, कूटस्थ इत्यर्थः । तदुक्तं **श्रीपराशरेण**—

**स्वविलक्षणशून्यस्य स्वयंभूतस्य साक्षिणः ।**
**आविर्भावतिरोभावरहितस्याक्रियस्य च ।**
**अहमर्थस्य चित्सत्यसुखस्यैव प्रसादतः ।**
**परा विद्याऽभिजाता चेद्विद्ययैव परं पदम् ।** इति ।

**निरवद्यः**—अगर्हणीयः । उक्तञ्च **भगवता**—

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यस्सर्वगतःस्थाणुरचलोऽयं सनातनः ।**
**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।** इति ।

**निरञ्जनः**—निर्लेपः । तदुक्तं **स्कान्दे**

**त्रिधामसाक्षिणं सत्यज्ञानानन्दादिलक्षणम् ।**
**त्वमहंशब्दलक्ष्यार्थमसक्तं सर्वदोषतः ।**
**ज्ञाताज्ञातद्वयादन्यं ज्ञाताज्ञातस्य भासकम् ।**

प्रमाणभ्रान्तिवृत्तीनामगम्यं तत्प्रकाशकम् ।
स्वयंभातं निराधारं ये जानन्ति सुनिश्चितम् । इति ।

अन्यत्रापि—

निर्भेदे निर्मले नित्ये निराधारे निरञ्जने ।
दासस्सोऽहमहंसोऽपीत्यात्मन्येतत् कथं भवेत् । इति ।
देवदेवश्च देवश्च जगन्नाथो निरञ्जनः ।
निर्भयो निर्गुणो नित्यो नित्यानन्दो निरामयः । इति च ।

**निष्क्रियं निष्कलं शान्तं निरवद्यं निरञ्जन**मिति श्रुतिः ।

**नारायणोपनिषदि**

**निर्विकल्पः**— निर्गताः विकल्पाः कोटिद्वयात्मिकाः वस्तुशून्या वा प्रत्ययाः यस्मात् स निर्विकल्पः । तदुक्तं **स्कान्दे**—

विकल्परहितं तत्त्वं ज्ञानमानन्दमव्ययम् ।
ये पश्यन्ति विमुक्तास्ते जीवन्तोऽपि न संशयः ।
निर्विकल्पं परं तत्त्वं तर्कतो यस्य भासते ।
सोऽपि मुच्येत संसारात् यथा स्वप्नप्रपञ्चतः ।
निर्विकल्पं परं तत्त्वं प्रमाणेनैव केवलम् ।
यस्य भाति स मुच्येत स्वसंसारमहोदधेः । इति ।

**कूर्मे**—

यत् ज्ञानं निर्मलं शुद्धं निर्विकल्पं निरञ्जनम् ।
ममात्माऽसौ तदेवेदमिति प्राहुर्विपश्चितः । इति ।

**निराख्यातः**— निर्गताः आख्याताः क्रियापदानि यस्मात् स निराख्यातः । अनेन सेद्धरूपता उक्ता ।

**निर्विकल्पो निराख्यातश्शुद्धो देव एको नारायणः** इति श्रुतिः ।

**परमहंसोपनिषदि**—

**नित्यपूतः**— नित्यशुद्धः । तदुक्तमाचार्यैः

नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत् परंब्रह्माहमेव तत् । इति ।

स एव नित्यपूतस्स एव वेदपुरुषः इति श्रुतिः ।

अमृतबिन्दूपनिषदि—

निश्चलम्— विक्रियाशून्यम् । तदुक्तमाचार्यवार्तिककारैः

नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः ।
धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः । इति ।

निष्कलं निश्चलं शान्तमिति श्रुतिः ।

अथर्वशिरसि—

नित्यानित्यः—हेतुहेतुमद्रूपः । स्कान्दे कमलालयमाहात्म्ये त्रिंशाध्याये कमला—

नमः पिनाकहस्ताय नमश्शूलधराय ते ।
नित्याय चैवानित्याय नित्यानित्याय ते नमः ।
व्यक्ताय चैवाव्यक्ताय व्यक्ताव्यक्ताय ते नमः ।
चिन्त्याय चैवाचिन्त्याय चिन्त्याचिन्त्याय ते नमः । इति ।

सोऽहं नित्यानित्यो ब्रह्माहं इति श्रुतिः ।

अथर्वशिखायाम्—

नादान्तः—नादविलयनस्थानभूतः परमात्मा । नादान्ते परमात्मनि इति श्रुतिः ।

मैत्रायण्याम्—

निस्पृहः—अवाप्तसकलकामत्वात् । अलेपोऽव्यग्रो निस्पृह इति श्रुतिः ।

तापनीयोपनिषदि—

न स्थूलप्रज्ञम्—जाग्रदवस्थातदभिमानितद्भेदानां निषेधः

न सूक्ष्मप्रज्ञम्—स्वप्नादेर्निषेधः ।

न स्थूलप्रज्ञं न सूक्ष्मप्रज्ञमिति श्रुतिः ।

**निरस्ताविद्यातमोमोहः**—अविद्येति विद्याविरोधित्वकथनेन निवर्तयितुं शक्यतोक्ता। तमइत्याच्छादकत्वेन निरसनीयत्वमुक्तम्। मोह इति च विक्षेपहेतुत्वेन निरस्यत्वमुक्तम्। अविद्यादिकमनर्थकारणं नित्यमेव निरस्तं यस्मिन् स तथोक्तः। **निरस्ताविद्यातमोमोहोऽहमेव** इति श्रुतिः।

**नृसिंहः**—नृगताविति धातो रूपेण नृशब्देन त्रिविधपरिच्छेदरहित आत्मोच्यते, सीति तद्बन्धकमविद्यालक्षणं द्वैतं, ह इति तत्संहर्तृत्वमुच्यते। अतो नृसिंहपदस्य स्वात्मबन्धहर इत्यर्थः। **एष वीरो नृसिंह एव** इति श्रुतिः।

**नमामि**-अत्र नकारो निषेधार्थः। मेति प्रमावाचकत्वेन परिपूर्णानन्दसच्चिद्रूपतुर्यवाचकः। मीति तद्धिंसाकरं तदाच्छादनविक्षेपादिकारणमज्ञानमुच्यते। तस्मात् माहिंसाकरं नास्तीति नमामिपदस्यार्थः। **नमाम्यनमाम्यहमनह**मिति श्रुतिः।

**नित्यानन्तसदेकरसम्**—अनित्यत्वपरिच्छिन्नत्वकल्पितत्वानेकरूपत्वरहितम्। **नित्यानन्तसदेकरस**मिति श्रुतिः।

**निरिन्द्रियम्**—स्पष्टम्। **अशरीरो निरिन्द्रियोऽप्राण** इति श्रुतिः।

**नाविकल्पः**—अविकल्पत्वधर्मरहितः। **अविकल्पो नाविकल्पोऽपि नात्र काचन भिदाऽस्ति नैव तत्र काचन भिदाऽस्ति अत्र भिदामिव मन्यमानश्शतधा सहस्रधा भिन्नो मृत्योर्मृत्युमाप्नोती**ति श्रुतिः।

**नियन्ता**—स्पष्टम्। **अभिमन्ता जीवो नियन्तेश्वर** इति श्रुतिः।

**निरपेक्षः**—आप्तकामत्वात्। निरपेक्षस्य साधकस्यापि माहात्म्यं प्रकटितं **शिवेन सूत संहितायाम्**—

> **निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शिनम्।**
> **अनुव्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभिः।** इति।

इदमेव वचनं भगवता **भागवतेऽप्युक्तम्। स्वमहिमस्थो निरपेक्ष एकएवे**ति श्रुतिः।

**नाल्पः**—अपरिच्छिन्नः। **नाल्पस्साक्ष्यविशेष** इति श्रुतिः।

**ईशावास्ये**—

**परिभूः**—सर्वेषामुपर्युपरि भवतीति परिभूः **कविर्मनीषी परिभूस्स्वयंभूः**रिति श्रुतिः।

**केनोपनिषदि**—

**प्राणस्यप्राणः**—प्राणस्य-प्राणाख्यवृत्तिविशेषस्य प्राणः। तत्कृतं हि प्राणस्य प्राणन-सामर्थ्यम्। न ह्यात्मानधिष्ठितस्य प्राणनमुपपद्यते। **यद्वाचो ह वाचं स उ प्राणस्य प्राणः** इति श्रुतिः।

**प्रतिबोधविदितं**—बोधंबोधं प्रति विदितं प्रतिबोधविदितम्। बोधशब्देन बौद्धाः प्रत्ययाः उच्यन्ते। सर्वे प्रत्यया विषयीभवन्ति यस्य स आत्मा सर्वबोधान् प्रति - सर्वप्रत्ययदर्शी। दृक्छक्ति-स्वरूपमात्रः प्रत्ययैरेव प्रत्ययाविशिष्टतया लक्ष्यते, नान्यत् द्वारान्तरमात्मनो विज्ञानाय। अतः प्रत्ययप्रत्यगात्मतया विदितं ब्रह्म प्रतिबोधविदितम्। **प्रतिबोधविदितम्मतं** इति श्रुतिः।

**काठकोपनिषदि**—

**पुराणः**—पुराऽपि नवः, पुरातन इत्यर्थः। तदुक्त**मीश्वरगीतायाम्**—

**स एव बन्धस्स च बन्धकर्ता स एव पाशः पशवस्स एव।**
**स एव सर्वं न च तस्य वेत्ता तमाहुराद्यं पुरुषं पुराणम्।** इति।

भगवताऽपि—

**कविं पुराणमनुशासितारं अणोरणीयांसमनुस्मरेद्यः।**
**सर्वस्य धातारमचिन्त्यरूपं आदित्यवर्णं तमसः परस्तात्।** इति।

**अजो नित्यः शाश्वतोऽयं पुराणः** इति श्रुतिः।

**पदम्**—पदनीयं, गमनीयं, देहादावहंबुद्धिं विहाय मुमुक्षुभिर्ब्रह्मैव प्रत्यगात्मतया गन्तव्यमित्यर्थः। तदुक्त**मादित्यपुराणे** मानवीयसंहितायां चतुःपञ्चाशाध्याये-हिमवन्तं प्रति उमा—

**कूटस्थमचलं सूक्ष्मं सत्यं निर्गुणमव्ययम्।**
**आनन्दमक्षरं ब्रह्म तात जानीहि मत्पदम्।**
**तत्पदं ते प्रपश्यन्ति येषां भक्तिर्मयि स्थिरा।**
**नान्यथा कर्मकाण्डैश्च तपोभिश्चातिदारुणैः।** इति।

वासिष्ठेऽपि—

अयमहमिति निश्चयो दृढो यस्तमलमपास्य महामते स्वबुद्ध्या।
यदितरदवलंब्य तत्पदं त्वं व्रज पिब भुङ्क्ष्व न बध्यसेऽमनस्कः। इति।

सर्वे वेदा यत्पदमामनन्तीति श्रुतिः।

परं पदम्—परमं - निरतिशयं नित्यानन्दत्वात् निरस्तनिखिलक्रियत्वाद्वा उत्कृष्टं पदं, मुमुक्षुभिर्विज्ञेयं निर्विशेषस्वरूपमित्यर्थः। तदुक्तं सर्वज्ञमुनिना—

अनृतजडविरोधिरूपमन्तत्रयमलबन्धनदुःखताविरुद्धम्।
अतिनिकटमविक्रियं मुरारेः परमपदं प्रणयादभिष्टवीमि। इति।

ब्रह्मगीतायामपि—

यदामनन्ति वेदाश्च तपांसि परमं पदम्।
ब्रह्मचर्यं यदिच्छन्तश्चरन्ति शिव एव सः।

तत्रैव—

पदं यत् परमं विष्णोस्तदेवाखिलदेहिनाम्।
परमं पदमद्वैतं स शिवस्सांबविग्रहः।
ब्रह्मविष्णुप्रजेशानामन्येषामपि देहिनाम्।
ऋते सांबं महादेवं किं भवेत् परमं पदम्। इति।

अस्यार्थः—यत्रनान्यत्पश्यतिनान्यच्छृणोतीत्येवं त्रिपुटीहीनं यदद्वितीयं तत्त्वं तदेवाखिलदेहिनां देवमनुष्यादीनां सर्वेषां परमं पदम्। निरतिशयानन्दस्वरूपतया सर्वैरभिलषितत्वात्। ईदृग्विधं परमं पदमेव लीलया अर्धनारीश्वरविग्रहशिवस्संपन्नः। एतदेव सच्चिदानन्दैकरसं परशिवस्वरूपं रुद्रविष्ण्वादीनां गुणमूर्तीनामन्येषामिन्द्रादीनाञ्च परमं पदं भवतीत्यर्थः।

तद्विष्णोः परमं पदमिति श्रुतिः।

पुरुषः—सर्वस्य कार्यप्रपञ्चस्य स्वरूपेण पूरयिता। यद्वा सर्वासु पूर्षु शेत इति पुरुषः। तदुक्तं वासिष्ठे—

किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम्।
आत्मना पूरितं विश्वं महाकल्पाम्बुना यथा। इति।

मुक्तिखण्डे च—

चण्डालदेहे पश्वादिशरीरे ब्रह्मविग्रहे
अन्येषु तारतम्येन स्थितेषु पुरुषोत्तम।
व्योमवत्सर्वदाव्याप्तस्सर्वसंबन्धवर्जितः
एकरूपो महादेवः स्थितस्सोऽहं परामृतः। इति।

ब्रह्मगीतायाम्—

पुरुषो नाम संपूर्णश्शिवस्सत्यादिलक्षणः।
सांबमूर्तिधरो नान्यो रुद्रो विष्णुरजोऽपि वा। इति।

गारुडपुराणे—

वेदाहमेतं पुरुषं चिद्रूपं तमसः परम्।
सोऽहमस्मीति मोक्षाय नान्यः पन्था विमुक्तये। इति।

अव्यक्तात् पुरुषः परः इति श्रुतिः।

परागतिः—परा-प्रकृष्टा गतिः गन्तव्यं-प्राप्तव्यं वस्तु। अन्यास्तु गतयः पुनरावृत्तिमत्त्वाद-पराः। उक्तविधा तु गतिः पुनरावृत्तिराहित्येन परा। अत एव भगवतोक्तम्

यद्गत्वा न निवर्तन्ते तद्धाम परमं मम। इति।

आनुशासनिके श्रीकृष्णं प्रति उपमन्युः—

यस्त्वां ध्रुवं वेदयते गुहाशयं प्रभुं पुराणं पुरुषं विश्वरूपम्।
हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान् बुद्धिमतीत्य तिष्ठति। इति।

सा काष्ठा सा परागतिरिति श्रुतिः।

प्रत्यगात्मा—प्रत्यक्चासावात्मा चेति प्रत्यगात्मा। प्रतीच्येव आत्मशब्दो रूढो लोके, नान्यस्मिन्। व्युत्पत्तिपक्षेऽपि तत्रैव आत्मशब्दः प्रवर्तते।

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावस्तस्मादात्मेति गीयते। इति।

तस्मात् प्रत्यगात्मैव परं ब्रह्म । तदुक्तं **ब्रह्मगीतायाम्**—

**प्रत्यगात्मानमद्वन्द्वमहंशब्दोपलक्षितम् ।**
**शिवरूपेण संपश्यन्नेव याति स्वपूर्णताम् ।** इति ।

**कश्चिद्धीरः प्रत्यगात्मानमैक्ष**दिति श्रुतिः ।

**परमं सुखम्**—निरतिशयं सुखं, आत्मभूतम् । नन्वात्मा निरतिशयसुखस्वरूपश्चेत् किमिति सर्वेषां न प्रतीयते - सत्यं - अविद्यावतां सुखरूपत्वेन आत्मनोऽप्रतिभानेऽपि विद्यावतां प्रतिभानात् । तथा चोक्तं **भाष्यकारैः**—

" अविद्याकल्पितनामरूपविशेषाकारापहृतबुद्धीनां, अत्यन्तप्रसिद्धं सुविज्ञेयं आसन्नतरमात्मभूतमपि अप्रसिद्धं दुर्विज्ञेयमतिदूरमन्यदिव च प्रतिभाति । बाह्याकारनिवृत्तबुद्धीनान्तु लब्धगुर्वात्मप्रसादादीनां नातः परं सुखं सुप्रसिद्धं सुविज्ञेयं स्वासन्नमस्ति । तथा चोक्तम् - प्रत्यक्षावगमं धर्म्यमित्यादीति । "

**तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुख**मिति श्रुतिः ।

**प्राणः**—परमात्मा । प्राणशब्दस्य परमात्मपरत्वं वर्णितं **सूत्रकारेण** - कंपनादिति । विवृतश्च **अधिकरणरत्नमालायाम्**—

**जगत्कम्पनकृत् प्राणोऽशनिर्वायुरुतेश्वरः ।**
**अशनिर्भयहेतुत्वात् वायुर्वा देहचालनात् ।**
**वेदनादमृतत्वोक्तेरीशोऽन्तर्यामिरूपतः ।**
**भयहेतुश्चालनन्तु सर्वशक्तियुतत्वतः** । इति ।

**यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृत**मिति श्रुतिः ।

**प्रश्नोपनिषदि**—

**परं ब्रह्म**—अपरब्रह्मभ्यो हिरण्यगर्भादिभ्यः परं सत्यज्ञानानन्तानन्दादिरूपं निष्कलं सर्वदृश्यविनिर्मुक्तं सर्वप्रत्यग्रूपं ब्रह्म । तदुक्तम्—

**सत्यं ज्ञानं शुद्धमनन्तं व्यतिरिक्तं शान्तं गूढं निष्कलमानन्दमनन्य**मिति ।

**विष्णुधर्मेऽपि**—

अहेयमक्षरं शुद्धमसंभूति निरञ्जनम् ।
विष्णवाख्यं परमं ब्रह्म तद्वै पश्यन्ति सूरयः । इति ।

ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परम्ब्रह्मान्वेषमाणाः इति श्रुतिः ।

<u>पर आत्मा</u>—परः—मुख्यः सच्चिदानन्दरूपः हृदयादिष्वभिव्यक्तः योगिभिरात्मत्वेन ज्ञेय इत्यर्थः । तदुक्तं **स्कान्दे**—

**नाभिकण्ठे प्रविष्टाय नमो हृद्देशवर्तिने ।**
**सच्चिदानन्दपूर्णाय नमस्साक्षाच्चिदात्मने ।** इति ।

ननु आत्मनः पर इति विशेषणं किमर्थं ? आत्मत्रैविध्यसंभवात् । तथा हि - आत्मा त्रिविधः । गौणो मिथ्याभूतो मुख्यश्चेति । यथा त्रिविधस्सिंहः तद्वत् । तद्यथा -सिंहदेवदत्तयोर्भेदं पश्यन्नेव सिंहगतक्रौर्यशौर्यादिगुणानां देवदत्ते सम्भवात् सिंहोऽयमिति व्यवहरति । सोऽयं गौणःसिंहः । अरण्ये मन्दान्धकारे धावन्तं हरिणं दृष्ट्वा भ्रान्त्या सिंहोऽयमिति निश्चित्य बिभेति । सोऽयं मिथ्यासिंहः । अहनि स्फीतालोकमध्यवर्तिनं मृगेन्द्रं दृष्ट्वा सिंहोऽयमिति प्रतिपद्यते सोऽयं मुख्यः सिंहः । एवं राजपित्रादिः भृत्यपुत्रादिषु स्वस्मात् भेदं पश्यन्नपि धनरक्षणादिकमध्ययनादिकञ्च दृष्ट्वा आत्मत्वेन व्यवहरति । पुत्रविषये श्रुतिरपि 'आत्मा वै पुत्रनामासी'ति । एवं भृत्यपुत्रादिःगौणात्मा । देहादिस्तु मिथ्यात्मा । आत्मापेक्षया देहादेर्भेदस्य विद्यमानत्वेऽप्यप्रतीयमानत्वात् । तथा हि-अहं मनुष्यो ब्राह्मणो ब्रह्मचारी स्थूलः कृशः गौरः कृष्णः इत्यादिप्रत्ययो देहविषयः । अहं प्राणिमि इति प्राणविषयः । अहं कामये सङ्कल्पयामीति मनोविषयः । अहंकर्तेति अहंकारविषयः । उक्तं च **विरूपाक्षपञ्चाशिकायाम्**—

**संपन्नोऽस्मि कृशोऽस्मि स्नेहोत्तारोऽस्मि मोदमानोऽस्मि ।**
**प्राणिमि शून्योऽस्मीति हि षट्सु पदेष्वस्मिता दृष्टा ।**

संपत् गृहक्षेत्रादेः विषयस्य धर्मः, कार्श्यं देहस्य, स्नेहश्चक्षुरादेरिन्द्रियस्य, मोदोऽन्तःकरणस्य, प्राणनं वायोः, शून्यता सुषुप्तपदस्य मायापर्यायपदस्य । एषु विषयादिषु षट्सु पदेषु अस्मिता दृष्टा-अहमभिमानःस्वानुभवसिद्धः । मुख्यात्मा तु पूर्वमेवोदाहृतः ।

**स यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते एवं ह वै तत् सर्वं परे आत्मनि संप्रतिष्ठते** इति श्रुतिः ।

**परः पुरुषः**—परमात्माख्यः पुरुषः। यो जगतः सृष्टिस्थितिलयकर्ता यस्सत्यज्ञानानन्दरूपः यमात्मत्वेन प्राप्नुवन्ति ज्ञानिनः स परः पुरुषः। तदुक्तं **प्रबोधचन्द्रोदये**—

**यस्माद्विश्वमुदेति यत्र रमते यस्मिन् पुनर्लीयते**
**भासा यस्य जगद्विभाति सहजानन्दोज्ज्वलं यन्महः**
**शान्तं शाश्वतमक्रियं यमपुनर्भावाय भूतेश्वरं**
**द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम्।** इति।

उक्तश्चाभियुक्तैः—

**जलधरधूमोद्गतिभिर्मलिनीक्रियते यथा न गगनतलम्।**
**तद्वत्प्रकृतिविकारैरपरामृष्टः परः पुरुषः।** इति।

**यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण पर पुरुषमभि ध्यायीतेति** श्रुति।

**परात्परः**—परात्-हिरण्यगर्भात् परः-श्रेष्ठः। **पराशरोपपुराणे** शुकं प्रति पराशरः—

**सर्वेषामेव जन्तूनां महादेवो महेश्वरः।**
**स्रष्टा भर्ता च संहर्ता जगतश्चाखिलस्य च।**
**तत्समो नाधिकश्चास्ति चेतनः स परात्परः।** इति।

**पुरिशयः**—सर्वशरीरानुप्रविष्टः। **परात्परं पुरिशयं पुरुषमीक्षते** इति श्रुतिः।

**परं**—निरतिशयपरमानन्दरूपं। अत एव श्रद्धापुरस्सरं प्रत्यगात्मत्वेन सदाऽनुसन्धेयं मोक्षार्थिभिः। **शिवधर्मे** द्वितीयाध्याये—

**पराय परमेशाय सर्वज्ञाय नमो नमः।**
**अतीतगुणसंगाय विश्वेशाय नमोऽस्तु ते।** इति।

**ईश्वरगीतायाम्**—

**यो ज्ञानान्मोचयेत् क्षिप्रं प्रसन्नो भक्तवत्सलः।**
**तमेव मोचकं रुद्रमाकाशे ददृशुः परम्।** इति।

उक्तञ्च **स्कान्दे**—

**निर्विकल्पे परे तत्त्वे श्रद्धा येषां प्रजायते।**
**अयत्नसिद्धा परमा मुक्तिस्तेषां न संशयः।**

निर्विकल्पं परं नाम तत्त्वं साक्षाच्छिवः परम्। इति।

उक्तञ्च वसिष्ठेन—

आद्यन्तरहितं सत्यं चिन्मात्रं निर्विकल्पकम्।
यत्तद्विद्धि परं रूपं जीवस्येदं तुरीयकम्।
एतत्तुर्यपदं शुद्धमत्र बद्धपदो भव। इति।

यत्तच्छान्तमजरममृतमभयं परं च इति श्रुतिः।

मुण्डकोपनिषदि—

**परामृतम्**—आपोक्षिकामृतात्कर्मफलादुत्कृष्टत्वेसत्यविनाशि। ईदृशमात्मस्वरूपं परमेश्वर-प्रसादलभ्यम्। तदुक्तं पराशरोपपुराणे—

कृपया मामकं रूपं परिपूर्णं परामृतम्।
आनन्दं सत्यचिद्रूपं तारकं तमसः परम्।
स्वयंभातं निराधारं दास्यामि प्रत्यगात्मनाम्। इति।

ईश्वरगीतायम्—

सर्वाधारं सदानन्दमव्यक्तं द्वैतवर्जितम्।
सर्वोपमानरहितं प्रमाणातीतगोचरम्।
निर्विकल्पं निराभासं सर्वाभासं परामृतम्।
अभिन्नं भिन्नसंस्थानं शाश्वतं ध्रुवमव्ययम्।
निर्गुणं परमं व्योम तज्ज्ञानं सूरयो विदुः। इति।

तपो ब्रह्म परामृतमिति श्रुतिः।

**प्राणशरीरनेता**—प्राणश्च शरीरञ्च तत् प्राणशरीरं तस्य नेता, प्राणशरीरयो र्वा नेता। मनोमयः प्राणशरीरनेता इति श्रुतिः।

**परावरः**—परश्च कारणात्मना अवरश्च कार्यात्मना वर्तत इति परावरः। परो-हिरण्यगर्भः अवरो-निष्कृष्टो यस्मात् स परावर इति वा। तस्मिन् दृष्टे परावरे इति श्रुतिः।

**प्रसृतम्**—व्याप्तं परिपूर्णमित्यर्थः। अधश्चोर्ध्वश्च प्रसृतं ब्रह्मैवेदं विश्वमिति श्रुतिः।

**परमं साम्यम्**—परमं प्रकृष्टं निरतिशयं साम्यं अद्वयलक्षणं ब्रह्मेत्यर्थः। **निरञ्जनः परमं साम्यमुपैति** इति श्रुतिः।

**परमं ब्रह्म**--परमं-उत्कृष्टं ब्रह्म-देशकालवस्तुकृतपरिच्छेदशून्यं, अत एव सर्वप्रत्यगात्मरूपं, यदज्ञातं सत् सकलजगद्रूपेण विवर्तते यच्च सर्ववेदान्तप्रतिपाद्यं यज्ज्ञानात् सकलसंसारबीजनिवृत्तिः यच्च सर्वैर्मुमुक्षुभिरात्मत्वेन सेव्यं तत् परं ब्रह्मेत्यर्थः। तदुक्तमभियुक्तैः—

**यदज्ञातं जीवैर्बहुविधजगद्विभ्रमधरं**
**वियद्यद्वद्बालैस्तलमलिनतायोगि कलितम्।**
**तदुन्मुद्रज्ञानप्रततसुखसद्ब्रह्म परमं**
**नमस्यामः प्रत्यक् श्रुतिशतशिरोभिः प्रकटितम्।** इति।

**स वेदैतत् परमं ब्रह्म धाम** इति श्रुतिः।

**माण्डूक्योपनिषदि—**

**प्रपञ्चोपशमः**—जाग्रदादिस्थानधर्मरहितः। **प्रपञ्चोपशमं शान्तं शिवमद्वैतं** इति श्रुतिः।

**तैत्तरीये—**

**पुच्छम्**—पुच्छवत् पुच्छं आधारमित्यर्थः।

**प्रतिष्ठा**—प्रतितिष्ठति सर्वमस्मिन् ब्रह्मणीति प्रतिष्ठा।

**ब्रह्म पुछं प्रतिष्ठा** इति श्रुतिः।

**प्रोतः**—सर्वत्र कार्ये अधिष्ठातृत्वेन अनुस्यूतः। **स ओतश्च प्रोतश्च विभुः प्रजासु** इति श्रुतिः।

**परमोऽक्षरः**—परमः - प्रकृष्टः अक्षरः - व्यापकः, परमव्यापक इत्यर्थः। **अक्षरं परमं प्रभुमिति** श्रुतिः।

**परमेष्ठी**—परमे - जगद्रक्षणभावे - स्थितः। **स परमेष्ठी ब्रह्मात्मेति** श्रुतिः।

**ऐतरेयके—**

**प्रज्ञानम्**—प्रकृष्टं-निरस्तसमस्तोपाधिकं सकलकल्पनास्पदं ज्ञानं-सर्वदा सर्ववस्त्वभासकं साक्षिरूपं साधकस्य हृदयमध्ये उपलभ्यमानं ब्रह्मैवेत्यर्थः। तदुक्तं **विद्याप्रकाशे—**

प्रज्ञानमेकं सर्वेषु यत् स आत्मेति निर्णयः ।
प्रकृष्टं निरुपाधित्वाच्चैतन्यं यत्तदीक्ष्यताम् ।
अहङ्कारो मनो बाह्यं करणञ्चाप्युपाधयः ।
तेषु सर्वेषु चिच्छाया संक्रान्ता चेतनान्यतः ।
न मुख्यं तेषु चैतन्यं नात्मत्वस्यापि मुख्यता ।
सुषुप्तौ तानि लुप्यन्ते न त्वात्मा तत्र लुप्यते ।
प्रज्ञानं निरुपाधित्वान्नित्यं तच्छोपभासकम् ।
प्रज्ञानस्यात्मता तस्मान्मुख्या नान्यस्य कस्यचित् ।
द्रष्ट्राद्या अपि दृष्ट्याद्याः शब्दा मुख्यात्मवस्तुनः ।
नामान्युपाधिमालंब्य तस्मादात्मोपलक्षकाः ।
यथैकस्यैव संबन्धविशेषोपाधितोऽखिलाः ।
पुत्रभ्रात्रादयः शब्दा नामत्वेनोपलक्षकाः ।
उपलक्ष्यं तु हस्तादियुक्तमेकं वपुस्तथा ।
चैतनैः कर्तृकरणैः प्रज्ञानमुपलक्ष्यते ।
प्रज्ञानं कर्तृदेहादिसाक्षिभूतं यदस्ति तत् ।
जीवस्य वास्तवं रूपमित्येवं निर्णयो भवेत् ।
प्रज्ञानं स्वशरीरेऽस्ति तथा देहान्तरेष्वपि ।
ब्रह्मादिस्थावरान्तेषु तस्य स्यात् परमात्मता ।
प्रज्ञानस्यास्य जीवत्वं प्राणधारणतो यथा ।
जगत्सृष्ट्यादिहेतुत्वाद्ब्रह्मत्वञ्च तथेष्यताम् ।
स्थावरं जंगमं सर्वं जगदित्यभिधीयते ।
तस्य प्रज्ञैव नेत्रं स्यात् सृष्ट्यादिनयनादसौ ।
प्रज्ञानं शुद्धचिद्रूपमासीद्यत् सृष्टितः पुरा ।
तस्मिन् प्रतिष्ठितं सर्वं माययोत्पादितत्वतः ।
उत्पत्तिस्थितिकालेऽसौ लोकः प्रज्ञाननेत्रकः ।
नेत्रत्वं व्यवहारस्य सुखादेर्नयनाद्भवेत् ।

लये प्रज्ञा प्रतिष्ठा स्यात्तत्र सर्वस्य संहृतेः ।
सृष्टिस्थितिलया इत्थं श्रुताः प्रज्ञानहेतुकाः ।
स्वप्नसृष्टिस्थितिलयाः जीवचैतन्यसाक्षिकाः ।
निर्जीवस्तम्भकुड्यादौ स्वप्नसृष्ट्यादयो न हि ।
जगत्सृष्टिस्थितिलयाः ब्रह्मचैतन्यसाक्षिकाः ।
ब्रह्मचैतन्यरहिते वन्ध्यापुत्रे न सन्ति ते ।
जगत्सृष्ट्याद्यधिष्ठानं शुद्धचैन्यमद्वयम् ।
परमात्मस्वरूपं स्यादिति तस्यापि निर्णयः ।
यत् प्रज्ञानं स्वात्मरूपं तद्ब्रह्मेति विबुध्यताम् ।
प्रज्ञानब्रह्मवित् सोऽयं तिष्ठेत् प्रज्ञात्मना सदा ।
जीवन्नेव स्थितप्रज्ञो मुक्तः स्याद्वामदेववत् । इति ।

**प्रज्ञः**—प्रत्यक् स्वप्रकाशः साक्षी चिद्रूपः ।

**प्रज्ञानं ब्रह्म स एतेन प्रज्ञेनात्मना** इति श्रुतिः ।

**छान्दोग्ये**—

**परायणम्**—परं अयनं - प्राप्यं परायणम् । यस्मिन्नधिगते भिद्यते हृदयग्रन्थिः, सर्वे संशयाच्छिद्यन्ते, सर्वाणि कर्माणि क्षीयन्ते, यस्य ज्ञानमात्रेण आनन्दलक्षणो मोक्षः प्राप्यते यद्विद्वान्न बिभेति कुतश्चन, यत्प्रविष्टस्य न विद्यते पुनर्भवः, यस्य च वेदनात् तदेव भवति, यद्विहाय अपरः पन्था नृणां नास्ति, तदेव परायणम् । उक्तञ्च **महाभारते**—

**परमं यो महत्तेजः परमं यो महत्तपः ।**
**परमं यो महद्ब्रह्म परमं यः परायणम्** । इति ।

यो देवः परमं तेज इत्यादि सर्वत्र संबन्धनीयम् ।

**आकाशो ह्येवैभ्यो ज्यायानाकाशः परायण**मिति श्रुतिः ।

**परोवरीयान्**—वरीयसोऽप्येष वर इति परोवरीयान् । **स एष परोवरीया**निति श्रुतिः ।

**पूर्णम्**—अनन्तमित्यर्थः । तथा च देहादिपरिच्छेदराहित्येन सर्वगतत्वेन सर्वात्मकतया च सदा अनुसन्धेय इति । तदुक्तं **प्रबोधचन्द्रोदये**—

पूर्णं तत् स्वप्रकाशं परतरममलं ज्योतिरानन्दसान्द्रं
शान्तात्मानो मुनीन्द्राः प्रमुदितमनसः सन्ततं भावयन्तु । इति ।

एवं बृहदारण्यके—

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । इति ।

सूतसंहितायामप्युक्तम्—

अन्यच्चास्तितया भातं तथा नास्तीति शब्दितम् ।
सर्वं पूर्णं शिवं पश्यन् स्वयं पूर्णः शिवो भवेत् ।
पूर्णमेव स्वकं रूपमपूर्णं भाति मायया ।
पूर्णरूपतयाऽऽत्मानं पश्यन् पूर्णं भवेत् स्वयम् ।
स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ।
न सन्ति नास्ति माया च तद्विशुद्धात्मवेदनम् ।
स्वपूर्णात्मशिवानन्दनिष्ठामासाद्य मानवः ।
तदैव लभते मुक्तिं स्वपूर्णात्मशिवात्मिकाम् ।
स्वपूर्णात्मशिवानन्दप्रकाशबलतः पुमान् ।
स्वच्छन्दं वर्तते लोके को वा तस्य निवारकः ।
सार्वभौमो यथा राजा स्वच्छन्दं वर्तते भुवि ।
स्वपूर्णात्मशिवज्ञानी स्वच्छन्दं वर्तते तथा । इति ।

वासिष्ठेऽपि—

अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवार्णवः । इति ।

तदेतत् पूर्णमप्रवर्तीति श्रुतिः ।

प्राणशरीरः—प्राणो लिङ्गात्मा विज्ञानक्रियाशक्तिद्वयसम्मूर्छितः । यो वै प्राणःसा प्रज्ञा या वा प्रज्ञा स प्राणः इति श्रुतिः । सः शरीरं यस्य सः प्राणशरीरः । मनोमयः प्राणशरीरो भारूपः इति श्रुतिः ।

**पृथिव्या ज्यायान्**—महत्तरः। **ज्यायान् पृथिव्या ज्यायानन्तरिक्षा**दिति श्रुतिः।

**प्रादेशमात्रः**—प्रदेशैर्द्युमूर्धादिभिः पृथिवीपादान्तैः अध्यात्मं मीयते इति प्रादेशमात्रः। मुखादिषु वा करणेषु प्रदेशेषु अत्तृत्वेन मीयत इति प्रादेशमात्रः। द्युलोकादिपृथिव्यन्तप्रदेश-परिमाणमात्रो वा प्रादेशमात्रः। प्रकर्षेण शास्त्रेण आदिश्यन्त इति प्रादेशाः द्युलोकादय एव, तावत्परिमाणो वा प्रादेशमात्रः। शाखान्तरे तु मूर्धादिचुबुकान्तप्रतिष्ठित इति प्रादेशमात्रं कल्पयन्ति। **सूत्रकारेणापि** प्रादेशमात्रशब्दस्य मतभेदेन अर्थविकल्पः प्रदर्शितः। **अभि-व्यक्तेरित्याश्मरथ्यः। अनुस्मृतेर्बादरिः। संपत्तेरिति जैमिनिस्तथा हि दर्शयति** इति।

**यस्त्वेतमेवं प्रादेशमात्रमभिविमान**मिति श्रुतिः।

**परादेवता**—परंब्रह्मेत्यर्थः। **तेजः परस्यां देवतायां** इति श्रुतिः।

**परंज्योतिः**—आदित्याद्यपेक्षया उत्कृष्टप्रकाशस्वरूपम्। उत्कृष्टप्रकाशत्वादेव बाह्यव्या-पारविनिर्मुक्तस्य एकान्तनिष्ठस्य आत्मध्यानपरस्य आत्मसाक्षात्कारः सुलभसाध्यः इत्युक्तं भवति। उक्तञ्च **हरिणा**—

**सिद्धानां गिरिकन्दरेषु वसतां ज्योतिः परं ध्यायता-**
**मानन्दाश्रुकणान् पिबन्ति शकुना निश्शङ्कमङ्केशयाः।**
**अस्माकं तु मनोरथोपरचितप्रासादवापीतट**
**क्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते।** इति।

**परंज्योतिरुपसंपद्य स्वेनरूपेणाभिनिष्पद्यते** इति श्रुतिः।

**बृहदारण्यके**—

**पुत्रात्प्रेयः**—प्रियतरम्। **तदेतत् प्रेयः पुत्रात् प्रेयो वित्ता**दिति श्रुतिः।

**पदनीयम्**— गमनीयम्। **तदेतत् पदनीयमस्य सर्वस्य** इति श्रुतिः।

**पुरुरूपः**—अनेकरूपः। **इन्द्रो मायाभिः पुरुरूप ईयते** इति श्रुतिः।

**पृथिव्यां तिष्ठन्। पृथिव्या अन्तरः। प्राणे तिष्ठन्। प्राणादन्तरः।** स्पष्टम्। **उक्तरूपैव** श्रुतिः।

**परमो लोकः**— उत्कृष्टः स्वरूपभूतो लोकः, कर्मासाध्यः, आत्मैवेत्यर्थः। **सोऽस्य परमो लोकः** इति श्रुतिः।

प्राज्ञः—परमार्थस्वभावः परमात्मा। **प्राज्ञेनात्मना संपरिष्वक्तः** इति श्रुतिः।

पुण्येनानन्वागतम्—पुण्येनासंस्पृष्टम्।

पापेनानन्वागतम्—पापेनासंबद्धम्।

**अनन्वागतं पुण्येनानन्वागतं पापेने**ति श्रुतिः।

पश्यन्—अलुप्तदृक्स्वभावः। **पश्यन् वै तन्न पश्यती**ति श्रुतिः।

परमा गतिः—परमा-ज्ञानकर्मसाध्यब्रह्मलोकाद्यपेक्षया उत्कृष्टा गतिः आत्मस्वरूपमित्यर्थः। **आनुशासनिके** युधिष्ठिरं प्रति श्रीकृष्णः। तण्डी—

**इयं सा परमा काष्ठा इयं सा परमा कला।**
**इयं सा परमा बुद्धिरियं सा परमा गतिः।**
**इयं सा परमा शान्तिः इयं सा निर्वृतिः परा।**
**यां प्राप्य कृतकृत्याः स्मः इत्यमन्यन्त वेधसः।** इति।

परमा संपत्—निरतिशयविभूतिस्वरूपा—

परम अनन्दः—नित्यनिरतिशयानन्दस्वरूपः, एषाऽस्य विज्ञानमयस्य परमा गतिः यास्त्वन्या देहग्रहणलक्षणाः ब्रह्मादिस्तम्बपर्यन्ता अविद्याकल्पिता गतयः ताः अपरमाः। अविद्याविषयत्वात्। इयन्तु देवत्वादिगतीनां कर्मविद्यासाध्यानां परमा उत्तमा यः समस्तात्मभावः यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति। एषैव परमा संपत्। सर्वासां संपदां विभूतीनामियं परमा स्वाभाविकत्वादस्याः। कृतका ह्यन्याः संपदः। तथा एषोऽस्य परमो लोकः। ये अन्ये कर्मफलाश्रया लोकाः ते अपरमाः। अयन्तु न केनचन कर्मणा मीयते, स्वाभाविकत्वात्। एषोऽस्य परमो लोकः। तथा एषोऽस्य परम आनन्दः। यान्यन्यानि विषयेन्द्रियसंबन्धजनितानि आनन्दजातानि तान्यपेक्ष्य एषोऽस्य परम आनन्दः, नित्यत्वात्। यो वै भूमा तत्सुखमिति श्रुत्यन्तरात्। यत्रान्यत्पश्यन्यद्विजानाति तदल्पं मर्त्यं अमुख्यं सुखं, इदन्तु तद्विपरीतम्। अत एव एषोऽस्य परम आनन्दः। तस्मान्निरतिशयपरमानन्दस्वरूपे आत्मनि मुमुक्षुभिर्मुक्तैश्च मोक्षार्थतया सुखार्थतया च मनःप्रणिधानं कार्यम्।

एतदुक्तमभियुक्तैः—

आपूर्यते विमलशारदपूर्णचन्द्रसन्दर्शनादिव पयोधिरुदीर्णवेगः ।
चेतो निरन्तरसुखात्मनिरीक्षणेन यस्य प्रसन्नवदनः स भवेद्विमुक्तः ।
चेतो निमग्नमचले हि निजे महिम्नि प्रक्षीणवीचिसलिलाढ्यसमुद्रतुल्ये ।
नोत्थातुमिच्छति रसातिशयादजस्रं यस्य प्रसन्नवदनः स भवेद्विमुक्तः ।
दैन्यं विहाय विषयैषणया प्रवृत्तं स्वभ्रान्तिकल्पितमवेक्ष्य जगत् समस्तम् ।
नित्याद्वयामृतनिरन्तरसेचनाय प्रव्रज्य शान्तिसहितं प्रवदन्ति मुक्तम् । इति ।

भगवता शेषेणाप्युक्तम्—

व्यापिनमभिन्नमित्थं सर्वात्मानं विधूतनानात्वम् ।
निरुपमपरमानन्दं यो वेद स तन्मयो भवति । इति ।

श्रुतिस्तु—एषाऽस्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः इति ।

प्रज्ञानघनः—चैतन्यघनः । चैतन्यैकस्वरूप इति यावत् । तदुक्तं सूत्रकारैः—आह च तन्मात्रमिति । विवृतञ्च भाष्यकारैः—आह च श्रुतिः चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरे अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इति । एतदुक्तं भवति—नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति । चैतन्यमेव तु निरन्तरमस्य रूपं यथा सैन्धवघनोऽन्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरं तथैवेति ।

अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः इति श्रुतिः ।

ब्रह्मोपनिषदि—

परं पदम्—सर्वोपाधिविनिर्मुक्तं प्रत्यगभिन्ननिरतिशयानन्दपरमात्मस्वरूपम् । एतादृशात्मप्राप्तिरतिसुलभेत्युक्तं वासिष्ठे—

ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति तत् ।
असंकल्पः परं श्रेयः स किमन्तर्न भाव्यते ।

किल तूष्णींस्थितेनैव तत् परं प्राप्यते पदम् ।
परमं यत्र साम्राज्यमपि राम तृणायते । इति ।
स्वं नाम परं पदं इति श्रुतिः ।

कैवल्योपनिषदि—

प्रशान्तम्—अविद्यादिदोषरहितम् । शिवं प्रशान्तममृतमिति श्रुतिः ।

परमेश्वरः—उत्कृष्टब्रह्मादिनियन्ता ।

शिवधर्मे सनत्कुमारं प्रति नन्दिकेश्वरवचनम्—

अनादिदेव देवेश विश्वेश्वर महेश्वर ।
सर्वप्रज्ञानविज्ञानप्रदानैक नमोऽस्तु ते ।
अनन्तकान्तिसंपन्न अनन्तासनसंस्थित ।
अनन्तशक्तिसंभोग परमेश नमोऽस्तु ते ।
परात्पर परातीत उत्पत्तिस्थितिकारण ।
सर्वार्थसाधनोपाय सर्वेश्वर नमोऽस्तु ते ।
बहुरूप महारूप सर्वरूपोत्तमोत्तम ।
पशुपाशार्णवातीत वरप्रद नमोऽस्तु ते ।
स्वभावनिर्मलातीत सर्वव्यापिन् महेश्वर ।
योगयोगिन् महायोगिन् योगीश्वर नमोऽस्तु ते ।
निरञ्जन निराधार स्वाधार निरुपप्लव ।
प्रसन्नपरमेशाय योगीन्द्राय नमोऽस्तु ते । इति ।

कूर्मपुराणे—

आरुरुक्षुस्तु सगुणं पूजयेत् परमेश्वरम् ।
पिनाकिनं त्रिणयनं जटिनं कृत्तिवाससं ।
पद्मासनस्थं रुक्माभं चिन्तयेद्वा इति श्रुतिः । इति ।

तत्रैव ईश्वरगीतायाम्—

स आत्मा सर्वभूतानां सबाह्याभ्यन्तरः परः।
सोऽहं सर्वगतःशान्तो ज्ञानात्मा परमेश्वरः। इति।

तत्रैव—त्वं विश्वनाभिः प्रकृतिः प्रतिष्ठा सर्वेश्वरस्त्वं परमेश्वरोऽसि।
त्वामेकमाहुः पुरुषं पुराणं आदित्यवर्णं तमसः परस्तात्। इति।

अहं ब्रह्ममयश्शान्तः शाश्वतो निर्मलोऽव्ययः।
एकाकी भगवान् रुद्रः केवलः परमेश्वरः। इति च।

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति। इति भगवद्गीतायाञ्च।

प्रभुः—समर्थः।

ब्रह्माण्डपुराणे त्र्यशीतितमाध्याये नृसिंहं प्रति वीरभद्रः—

सर्वात्मा सर्वकर्ता च प्रवर्तकनिवर्तकः।
स्थिरधन्वा क्षयद्वीरो रुद्रो विश्वाधिकः प्रभुः।
शास्ताऽशेषस्य जगतो न त्वं नैव चतुर्मुखः। इति।

उमासहायं परमेश्वरं प्रभुमिति श्रुतिः।

पुरातनः—चिरन्तनः। पुरातनोऽहं पुरुषोऽहमीशः इति श्रुतिः।

परमात्मरूपम्—प्रत्यगभिन्नब्रह्मस्वरूपम्। एवं विदित्वा परमात्मरूपमिति श्रुतिः।

श्वेताश्वतरोपनिषदि—

प्रेरिता—अन्तर्यामितया सर्वप्रवर्तकः। लैङ्गे पुराणे गौरीकल्याणे त्रिंशत्तमाध्याये शिवं प्रति ब्रह्मा—

स्रष्टा त्वं सर्वलोकानां प्रकृतेश्च प्रवर्तकः।
बुद्धिस्त्वं सर्वलोकानामहङ्कारस्त्वमीश्वर।
भूतानामिन्द्रियाणाञ्च त्वमेवैकः प्रवर्तकः। इति।

ब्रह्मगीतायां ब्रह्मा—

अस्ति देवः स्वतस्सिद्धः साक्षी सर्वस्य सर्वदा ।
संसारार्णवमग्नानां साक्षात् संसारमोचकः ।
सर्वेषान्तु मनस्तेन प्रेरितं नियमेन तु ।
विषये गच्छति प्राणश्चेष्टते वाग्वदत्यपि ।
चक्षुः पश्यति रूपाणि श्रोत्रं शब्दं शृणोत्यपि ।
अन्यानि खानि सर्वाणि तेनैव प्रेरितानि तु ।
स्वं स्वं विषयमुद्दिश्य प्रवर्तन्ते निरन्तरम् ।
प्रवर्तकत्वञ्चाप्यस्य मायया न स्वभावतः । इति ।

ईश्वरगीतायाम्—

आदिमध्यान्तनिर्मुक्तो मायातत्त्वप्रवर्तकः ।
क्षोभयामि च सर्गादौ प्रधानपुरुषावुभौ ।
ताभ्यां सञ्जायते विश्वं संयताभ्यां परस्परम् ।
महदादिक्रमेणैव मम तेजोविजृम्भितम् ।
यो हि सर्वजगत्साक्षी कालचक्रप्रवर्तकः ।
हिरण्यगर्भो मार्ताण्डः सोऽपि मद्देहसम्भवः ।
तस्मै दिव्यं स्वमैश्वर्यं ज्ञानं योगं सनातनम् ।
दत्तवानात्मजान् वेदान् कल्पादौ चतुरो द्विजाः ।
स मन्नियोगतो देवो ब्रह्मा मद्भावभावितः ।
दिव्यं तन्मामकैश्वर्यं सर्वदा वहति स्वयम् ।
स सर्वलोकनिर्माता मन्नियोगेन सर्ववित् ।
भूत्वा चतुर्मुखः सर्वं सृजत्येवात्मसम्भवः ।
योऽपि नारायणोऽनन्तो लोकानां प्रभुरव्ययः ।
ममैव च परा मूर्तिः करोति परिपालनम् ।
योऽन्तकः सर्वभूतानां रुद्रः कालात्मकः प्रभुः ।

मदाज्ञयाऽसौ सततं संहरिष्यति मे तनुः ।
हव्यं वहति देवानां कव्यं कव्याशिनामपि ।
पाकञ्च कुरुते वह्निःसोऽपि मच्छक्तिचोदितः ।
भुक्तमाहारजातं यत् पचत्यन्तरहर्निशम् ।
वैश्वानरोऽग्निर्भगवानीश्वरस्य नियोगतः ।
योऽपि सर्वाम्भसां योनिर्वरुणो देवपुङ्गवः ।
सोऽपि सञ्जीवयेत् कृत्स्नमीश्वरस्य नियोगतः ।
योऽन्तस्तिष्ठति देवानां बहिर्देवः प्रभञ्जनः ।
मदाज्ञयाऽसौ भूतानां शरीराणि बिभर्ति हि ।
योऽपि सञ्जीवनो नृणां देवानाममृताकरः ।
सोमः स मन्नियोगेन चोदितः किल वर्तते ।
यः स्वभासा जगत् कृत्स्नं प्रकाशयति सर्वदा ।
सूर्यो वृष्टिं वितनुते शासनेन स्वयंभुवः ।
योऽप्यशेषजगच्छास्ता शक्रः सर्वामरेश्वरः ।
यज्वनां फलदो देवो वर्तते वै मदाज्ञया ।
यः प्रशास्ता ह्यसाधूनां वर्तते नियमादिह ।
यमो वैवस्वतो देवो देवदेवनियोगतः ।
योऽपि सर्वधनाध्यक्षो धनानां संप्रदायकः ।
सोऽपीश्वरनियोगेन कुबेरो वर्तते सदा ।
यः सर्वरक्षसां नाथस्तामसानां फलप्रदः ।
मन्नियोगादसौ देवो निर्ऋतिर्वर्तते सदा ।
वेतालगणभूतानां स्वामी भोगफलप्रदः ।
ईशानः किल भक्तानां सोऽपि तिष्ठन्मदाज्ञया ।
यश्च सर्वजगत्पूज्यो वर्तते विघ्नकारकः ।
विनायको धर्मरतः सोऽपि मद्वचनात्किल ।

योऽपि ब्रह्मविदां श्रेष्ठो देवसेनापतिः प्रभुः ।
स्कन्दोऽसौ वर्तते नित्यं स्वयं भुवि नियोगतः ।
ये च प्रजानां पतयो मरीच्याद्या महर्षयः ।
सृजन्ति विविधं लोकं परस्य नियमान्मम ।
या च श्रीः सर्वभूतानां ददाति विपुलां श्रियम् ।
पत्नी नारायणस्येयं वर्तते मदनुग्रहात् ।
वाचं ददाति विपुलां या च देवी सरस्वती ।
साऽपीश्वरनियोगेन पूजिता संप्र[यच्छति]वर्तते ।
याऽशेषपुरुषान् पापान् नरकात्तारयिष्यति ।
सावित्री संस्कृता साऽपि देवाज्ञानुविधायिनी ।
पार्वती परमा देवी ब्रह्मविद्याप्रदायिनी ।
याऽभिध्याता विशेषेण साऽपि मद्वचनानुगा । इत्यादि ।
विधूय मोहकलिलं यया पश्यन्ति तत् परम् ।
सा विद्याऽपि महेशस्य नियोगवशवर्तिनी ।
बहुनाऽत्र किमुक्तेन मम शक्त्यात्मकं जगत् ।
मयैव प्रेर्यते कृत्स्नं मय्येव प्रलयं व्रजेत् ।
अहं हि भगवानीशः स्वयञ्ज्योतिस्सनातनः ।
परमात्मा परं ब्रह्म मत्तो ह्यन्यन्न विद्यते । इति च ।

पृथगात्मानं प्रेरितारञ्च मत्वा इति श्रुतिः ।

पूर्व्यम्—चिरन्तनम् । युजे वां ब्रह्म पूर्व्यमिति श्रुतिः ।

परमं व्योम—प्रकृष्टाकाशकल्पं परं ब्रह्म । ऋचो अक्षरे परमे व्योमन्निति श्रुतिः ।

पापनुत्—पापनिवर्तकः । धर्मावहं पापनुदं भगेशमिति श्रुतिः ।

पतीनां पतिः— पतिं पतीनां प्रथमं परस्तादिति श्रुतिः ।

प्रधानक्षेत्रज्ञपतिः—अव्यक्तविज्ञानात्मनोः पालयिता । महाभारते आनुशासनिके

युधिष्ठिरं प्रति श्रीकृष्णः । उपमन्युः—

यं वै ध्यायन्ति विद्वांसः परतत्त्वं सनातनम् ।
षड्विंशकमिति ख्यातं यत् परात्परमक्षयम् ।
स एष भगवान् देवः सर्वतत्त्वादिरव्ययः ।
सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः । इति ।

तत्रैव महाभारते—

सर्वदा यत् पशून् पाति तैश्चैव रमते पुनः ।
तेषां पतिश्च यस्तस्माद्रुद्रः पशुपतिः स्मृतः । इति ।

तत्रैव महाभारते कृष्णं प्रति जांबवती—

त्वया द्वादशवर्षाणि तपस्तप्त्वा जगद्गुरुम् ।
अराध्य पशुभर्तारं रुक्मिण्यां जनितःसुतः । इति च ।

ईशानसंहितायां शिवं प्रति विष्णुः—

जगत्स्थितिविनाशानां कर्ता त्वं सर्वदा शिव ।
त्वन्मायामोहितात्माऽहं न जाने त्वां जगत्पते ।
पशवो हि वयं सर्वे सदेवासुरमानुषाः ।
पतिस्त्वमेव सर्वेषां पशूनां पतिरीश्वर । इति ।

लैङ्गे—

ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः ।
पशवः परिकीर्त्यन्ते संसारवशवर्तिनः ।
तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः ।
शूलमायादिभिः पाशैः स बध्नाति पशून् पतिः ।
स एव मोचकस्तेषां भक्त्या सम्यगुपासितः । इति ।

प्रधानक्षेत्रज्ञपतिर्गुणेशः इति श्रुतिः ।

परमहंसोपनिषदि—

परंधाम—तदुक्तं भगवता—

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् । इति ।

अन्यत्रापि—

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम । इति च ।

ईश्वरगीतायां—

परात्परतरं ब्रह्म शाश्वतं ध्रुवमव्ययम् ।
नित्यानन्दं निर्विकल्पं तद्धाम परमं मम । इति ।

तदेव मम परं धाम इति श्रुतिः ।

पूर्णानन्दैकबोधः—अपरिच्छिन्नानन्दैकप्रकाशरूपः । यस्मादात्मस्वरूपमेवं तस्मादनात्मनिरसनपूर्वकं आत्मन्येव मनोलयः संपादनीयः । तदुक्तं वार्तिककारैः—

चिदात्माऽहं नित्यशुद्धबुद्धमुक्तसदद्वयः ।
परमानन्दसन्दोहवासुदेवोऽहमोमिति ।
ज्ञात्वा विवेचकं चित्तं चिदात्मनि विलापयेत् ।
चिदात्मनि विलीनश्चेत्तच्चित्तं न विचालयेत् ।
पूर्णबोधात्मनाऽऽसीत पूर्णाचलसमुद्रवत् ।
एवं समाहितो योगी श्रद्धाभक्तिसमन्वितः ।
जितेन्द्रियो जितक्रोधः पश्येदात्मानमद्वयम् ।
आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ।
तस्मात् सर्वं परित्यज्य तत्त्वनिष्ठो भवेत् सदा ।
यः पश्येत् सर्वगं शान्तमानन्दात्मानमव्ययम् ।

न तेन किञ्चिदाप्तव्यं ज्ञातव्यं वाऽवशिष्यते।
कृतकृत्यो भवेद्विद्वान् जीवन्मुक्तो भवेत् सदा। इति।

यत्पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मि इति श्रुतिः।

अमृतबिन्दूपनिषदि—

पक्षपातविनिर्मुक्तम् — हस्तिपुत्तिकादिशरीरेषु ऐकरूप्येण वर्तमानम्। तदुक्तं सूतसंहितायाम्—

देवदेवं जगन्नाथं देवेषु च नरेषु च।
क्रिमिकीटपतङ्गेषु समं सर्वत्र संस्थितम्।
सत्यज्ञानसुसंपूर्णसुखविज्ञानमव्ययम्।
स्वप्रकाशैकसंसिद्धं स्वविलक्षणवर्जितम्। इति।

वासिष्ठेऽप्युक्तम्—

शरीरमस्थिमांसञ्च त्यक्त्वा रक्ताद्यशोभनम्।
भूतमुक्तावलीतन्तुं चिन्मात्रमवलोकयेत्।
यैव चित् गगनाभोगभूषणे व्योम्नि भास्करे।
धराविवरकोशस्थे सैव चित् कीटकोदरे। इति।

भगवताऽप्युक्तम्—

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्। इति।
समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम्। इति।
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः। इति च।

पक्षपातविनिर्मुक्तं ब्रह्म संपद्यते तदेति तिः।

अथर्वशिरसि—

पुष्करम् पुष्कलम्।

पवित्रम्-पावनम्। परमस्तु पुमान् ध्यातः दृष्टः कीर्तितः श्रुतः पूजितः स्मृतः प्रणतः सर्वान् पाप्मनः उन्मूलयतीति पवित्रम्। तदुक्तं सूतसंहितायाम्

श्रुत्याचार्यप्रसादेन सर्वं ब्रह्मेति भावनात्।
मुच्यते पातकैः सर्वैर्घटिकामात्रतो नरः।
दिनार्धं सकलं ब्रह्म भावयन् गुरुपूर्वकम्।
बुद्धिपूर्वकृतैः सर्वैः पातकैर्मुच्यते नरः।
विग्रहं परतत्त्वस्य त्रिणेत्रं सांबमद्भुतम्।
मुहूर्तं चिन्तयेन्मर्त्यो मुच्यते सर्वपातकैः।
स्वस्वरूपानुसन्धानान्नृत्यन्तं सर्वकारणम्।
मुहूर्तं चिन्तयेन्मर्त्यो मुच्यते सर्वपातकैः।
नृत्यमानं महादेवं सांबमूर्तिंधरन्तु वा।
दिनार्धं चिन्तयेत् पापात्प्रसिद्धान्मुच्यतेऽखिलात्।
त्रिमूर्तीनान्तु रुद्रस्य विग्रहं चिन्तयन् दिनम्।
महापातकसंघैश्च मुच्यते पातकान्तरैः।
दिनत्रयमभिध्यायन् रुद्रमूर्तिमतन्द्रितः।
मुच्यते पातकैः सर्वैः प्रसिद्धैर्नात्र संशयः।
विष्णोश्च विग्रहं ध्यायन् मर्त्यः शुद्धो दिनत्रयम्।
महापातकसंघैश्च मुच्यते पातकान्तरैः।
पञ्चरात्रम्महाविष्णोर्विग्रहं चिन्तयन्नरः।
मुच्यते पातकैस्सर्वैः प्रसिद्धैर्नात्र संशयः।
ब्रह्मणो विग्रहं शुद्धं सप्तरात्रं विचिन्तयन्।
महापातकसंघैश्च मुच्यते पातकान्तरैः।
मासमात्रमभिध्यायन् ब्रह्मणो विग्रहं परम्।
मुच्यते पातकैस्सर्वैः प्रसिद्धैर्नात्र संशयः। इति।

अन्यत्रापि—

महादेवेति यो ब्रूयात्प्रातरुत्थाय नित्यशः ।
जन्मान्तरसहस्रेषु कृतं पापं विनश्यति ।
ब्राह्मे मुहूर्त उत्थाय शुचिर्भूत्वा समाहितः ।
शिवेति कीर्तयन् सर्वैः पातकैश्च प्रमुच्यते ।
पुण्या भागीरथी लोके पुण्या वाराणसी पुरी ।
पुण्या वेदाः शिवः पुण्यः पुण्यं तिर्यक्त्रिपुण्ड्रकम् ।
पञ्च पुण्यानि यो नित्यं प्रातरुत्थाय कीर्तयेत् ।
सर्वपापविनिर्मुक्तः स याति परमां गतिम् । इति ।

श्रीविष्णुपुराणेऽपि—

यन्नामकीर्तनं भक्त्या विलायनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ।
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्वृकै[र्मृगै]रिव ।
प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।
यानि तेषामशेषाणां कृष्णानुस्मरणं परम् । इति ।

आदित्यपुराणे मानवीयसंहितायां त्रिपञ्चाशाध्याये—

त्वां द्व्यक्षरं निर्गुणमप्रमेयं ज्योतिःस्वरूपं प्रवदन्ति सूरयः ।
दूरङ्गतं देवमानन्दमूर्तिं नमामि सूक्ष्मं परमं पवित्रम् । इति ।

पुष्करमहं पवित्रमहमिति श्रुतिः ।

प्राजापत्यम्—प्रजापतिना हिरण्यगर्भेणाऽऽगतं, प्रजापतिपदप्रदात् वा । प्राजापत्यं सूक्ष्मं सौम्यं पुरुषमिति श्रुतिः ।

प्रणवः सर्वपुरुषार्थान् प्रणामयति प्रापयतीति प्रणवः । तदुक्तं **सूतसंहितायाम्**—

**परापरविभागेन प्रणवस्तु द्विधा मतः ।**
**परः परतरं ब्रह्म प्रज्ञानन्दादिलक्षणम् ।**
**प्रकर्षेण नवं यस्मात् परं ब्रह्म स्वभावतः ।** इति ।

सत्यज्ञानानन्दैकरसं मायातत्कार्यासंस्पृष्टं यत् परमशिवस्वरूपं स परः प्रणवः । कस्मात् । यस्मात् परशिवस्वरूपं कारणान्तरमनपेक्ष्य प्रकर्षेण नवं अशेषविक्रियारहितं कूटस्थनित्यं सत् परमानन्दप्रकाशनात् सर्वदा अभिनवं, तस्मात् तथाविधस्वरूपं प्रणवशब्दाभिधेयमित्यर्थः ।

**अपरः प्रणवस्साक्षाच्छब्दरूपस्सुनिर्मलः ।**
**प्रकर्षेण नवत्वस्य हेतुत्वात् प्रणवः स्मृतः ।**
**परमप्रणवप्राप्तिहेतुत्वात् प्रणवोऽथवा ।** इति ।

अनेन मन्त्रेण यथोक्तपरशिवस्वरूपं स्वात्मतया विदुषः पुंसोऽभिनवत्वप्राप्तिहेतुत्वात् प्रकर्षेण नवो भवत्यनेनेति व्युत्पत्त्या प्रणवः । यद्वा-यः प्रागुक्तः प्रणवः परमः तद्वाचकत्वेन तत्प्राप्त्युपायत्वात् शब्दात्मकस्यास्य प्रणवाभिधेयतेति ।

**य ओङ्कारः स प्रणवो यः प्रणवः स सर्वव्यापी**ति श्रुतिः ।

प्रत्यक्—अनृतजडदुःखान्तवद्भ्यः शरीरेन्द्रियादिभ्यः इदंकारास्पदेभ्यः प्रातिकूल्येन अञ्चति गच्छति इति प्रत्यक् । सर्वान्तर इत्यर्थः । तदुक्तं **वासिष्ठे**—

**सर्वभावान्तरस्थाय चेत्यमुक्तचिदात्मने ।**
**प्रत्यक्चेतनरूपाय मह्यमेव नमो नमः ।** इति ।

**पराशरोपपुराणेपि**—

**प्रतीचि सच्चिदानन्दे केवले परमाद्वये ।**
**निमग्नो निभृतस्तूष्णीमास्ते केवलमास्तिकः ।** इति ।

**प्रत्यङ्जनास्तिष्ठति संचुकोचा[युगस्या]न्तकाले** इति श्रुतिः ।

अथर्वशिखायाम्—

परमात्मा—परश्चासावात्मा चेति परमात्मा, कार्यकारणविलक्षणो नित्यशुद्धबुद्धमुक्तस्वभावः। गीतासु स्मर्यते—

उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः। इति।

वासिष्ठे परमात्मनिरूपणं प्रश्नपूर्वं कृतम्। श्रीरामः—

परमार्थस्य किं रूपं तस्यानन्तचिदाकृतेः।
पुनरेतन्ममाचक्ष्व निपुणं बोधवृद्धये।

वसिष्ठः—

महाप्रलयसंपत्तौ सर्वकारणकारणम्।
शिष्यते परमं ब्रह्म वर्ण्यते तदिदं शृणु।
नाशयित्वा स्वमात्मानं मनसो वृत्तिसंक्षये।
सद्रूपं यदनाख्येयं तद्रूपं तस्य वस्तुनः।
चितेर्जीवस्वभावस्य यदचेत्योन्मुखं वपुः।
चिन्मात्रं निर्मलं शान्तं तद्रूपं परमात्मनः।
अङ्गलग्नेऽपि वातादौ स्पर्शाद्यनुभवं विना।
जीवतश्चेतसो रूपं यत्तत् परममात्मनः।
अस्वप्नाया अनन्ताया अजडाया महामते।
यद्रूपश्चिरनिद्रायास्तद्रूपं परमात्मनः।
वेदनस्य प्रकाशस्य दृश्यस्य मनसस्तथा।
वेदनं यदनाद्यन्तं तद्रूपं परमात्मनः।
व्यवहारपरस्यापि यत् पाषाणवदासनम्
अव्योम्न एव व्योमत्वं तद्रूपं परमात्मनः।

वेद्यवेदनवेत्तृत्वरूपं त्रयमिदं पुनः ।
यत्रोदेत्यस्तमायाति तद्रूपं परमात्मनः ।
स्थावराणां हि यद्रूपं तच्चेद्बोधमयं भवेत् ।
मनोबुध्यादिनिर्मुक्तं तत् परेणोपमीयते । इति ।

सर्वान् प्राणान् परमात्मनि इति श्रुतिः ।

प्रकाशः—दीपवत् प्रकाशयतीति प्रकाशः ।

प्रकाशेभ्यः प्रकाशः—अग्न्यादित्येभ्योऽपि प्रकाशस्वरूपः । उक्तञ्च भगवद्गीतायाम्—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् । इति ।

सूतसंहितायामपि—

अतस्साक्षी शिवः साम्बः स्वप्रकाशैकलक्षणः ।
तेन सर्वमिदं गम्यं गम्यतेऽसौ न गम्यते ।
स्वयञ्ज्योतिरिति प्राह श्रुतिः साध्वी महेश्वरम् ।
तस्य भासा सर्वमिदं विभातीत्यपि चाह हि ।
अतश्शिवः सर्वजगद्विभासकः स्वयंप्रकाशः स्वयमेव केवलः । इति ।

आत्मनः स्वयंप्रकाशस्य अनुभवप्रकारस्तात्पर्यदीपिकायां वर्णितः-श्रोत्रादीनीन्द्रियाणि समनस्कानि स्वस्वविषयेभ्यो व्यावर्त्य विक्षेपवासनारहिते अन्तःकरणे अन्तर्मुखे तद्भासकप्रत्यक्चैतन्यं ब्रह्म स्वयमेव प्रकाशते-इति ।

प्रकाशः प्रकाशेभ्यः इति श्रुतिः ।

प्रध्यायितव्यः—प्रकर्षेण ध्यातव्यो मुमुक्षुभिरित्यर्थः । तदुक्तं पराशरोपपुराणे—

सर्वपापविशुद्ध्यर्थं ध्यायेद्देवं त्र्यम्बकम् ।
साम्बं चन्द्रकलाचूडं नीलग्रीवं शुचिस्मितम् ।

वरदाभयहस्तञ्च लसत्केयूरमण्डितम् ।
सर्वालंकारसंयुक्तं शुद्धस्फटिकसन्निभम् ।
अर्धयामं मुहूर्तं वा हृदयाम्बुजमध्यमे ।
जपन् पञ्चाक्षरीं विद्यां प्रणवेन समन्विताम् ।
शिवध्यानानलेनैव पापसंघातकाननम् ।
क्षणाद्दग्धं भवेद्ध्यानात् भवनाशश्च सिद्ध्यति ।
बहवः खलु रुद्रस्य ध्यानेन ब्रह्मवित्तमाः ।
अनायासेन संसाराद्विमुक्ता मानवा भुवि ।
किं पुनः पापसंघाताद्विमोक्षः शङ्करस्य तु ।
ध्यानेन मनुजस्तस्माद्ध्यानमेव सदाऽभ्यसेत् ।
विष्ण्वादिदेवताध्यानमपि पापविनाशनम् ।
तद्भक्तः पापशुद्ध्यर्थं तद्ध्याने यत्नवान् भवेत् ।
शिवध्यानसमं ध्यानं नास्ति नास्ति श्रुतौ स्मृतौ ।
अतः सर्वमपि त्यक्त्वा शिवमेव विचिन्तयेत् ।
देवानामपि सर्वेषामात्मभूतो हि शङ्करः ।
अतः सर्वान् परित्यज्य ध्यायेदीशानमव्ययम् ।
अयत्नेनैव पापेभ्यो मोक्षमिच्छति चेत् पुमान् ।
शिवमेव सदा ध्यायेत् सांबं चन्द्रार्धशेखरम् । इति ।

सूतसंहितायामपि—

कर्ता कारयिता कर्म करणं कार्यमेव च
ब्रह्मरूपतया सर्वमुपास्यं चेतनोत्तमैः ।
प्रमाता च प्रमाणञ्च प्रमेयं प्रमितिस्तथा ।
ब्रह्मरूपतया सर्वमुपास्यं मानमानिभिः ।
विधयश्च निषेधाश्च विद्याविद्ये तथैव च ।

ब्रह्मरूपतया सर्वमुपास्यं वेदवादिभिः।
यद्यदस्तितया भाति यद्यन्नास्तितयाऽपि च।
तत्तद्ब्रह्मतया नित्यमुपास्यं ब्रह्मवित्तमैः।
इत्थं सर्वत्र यः साक्षाद्ब्रह्मोपास्ते सनातनम्।
स याति ध्यानयज्ञेन साक्षाद्विज्ञानमैश्वरम्। इति।

ध्यायीतेशानं प्रध्यायितव्यमिति श्रुतिः।

मैत्रायण्याम्—

पूतः—अविद्यादिदोषरहितः। शुद्धः पूतश्शून्यश्शान्तः इति श्रुतिः।

प्रचोदयिता—प्रेरयिता सर्वान्तर्यामितया। प्रचोदयिता चैष इति श्रुतिः।

पुरुषसंज्ञः—पुरुषनामा। सूक्ष्मोऽदृश्यः पुरुषसंज्ञः इति श्रुतिः।

कौषीतकिब्राह्मणोपनिषदि—

प्रज्ञात्मा—परमात्मा। प्राणोऽस्मि प्रज्ञात्मेति श्रुतिः।

पुरुषाणां कर्ता—आदित्यादिपुरुषाणां कर्तेत्यर्थः। यो वै बालाके एतेषां पुरुषाणां कर्ता इति श्रुतिः।

तापनीयोपनिषदि—

प्राणस्य द्रष्टा—प्राणस्य साक्षी। स्पष्टम्। श्रुतिरप्युक्तरूपैव।

परिभवासहः—न लौकिकमन्दपुरुषवत् अयं मन्दप्रस्थानः परिभवसहिष्णुः। अतः संहरत्येव सदासंहार्यमविद्यादिलक्षणं जगत्। सर्वसंहारसमर्थःपरिभवासहः इति श्रुतिः।

परंभृङ्गम्—अत्र शृंगशब्देन प्रणवस्यांशो लक्ष्यते। यच्छन्दसामृषभो विश्वरूप इति प्रणवस्य ऋषभत्वेन वर्णितत्वात्। तथा च ब्रह्मशब्दान्त्यमकारात्मकप्रणवमकारार्थभूतं ब्रह्मेत्यर्थः। भृङ्गमेनं परे भृङ्गे इति श्रुतिः।

प्रत्यगेकरसः—प्रत्यगात्मस्वभावः। आनन्दः परः प्रत्यगेकरसः इति श्रुतिः।

परिपूर्णः—परितः-समन्तात् पूर्णः। आपेक्षिकपूर्णादाकाशादेरपि पूर्णःइत्यर्थः।

तदुक्तं वासिष्ठे—

त्वत्ताहन्तात्मता यत्र परता नास्ति काचन ।
न क्वचिद्भेदकलना न भावाभावरञ्जना ।
सर्वं शान्तं निरालंबं व्योमस्थं शाश्वतं शिवम् ।
अनामयमनाभासमनामकमकारणम् ।
न सन्नासन्न मध्यान्तं न सर्वं सर्वमेव च ।
मनोवचोभिरग्राह्यं पूर्णात्पूर्णं सुखात्सुखम् ।
असंवेदनमाशान्तमात्मवेदनमाततम् । इति ।

अस्यार्थः—त्वत्ता-युष्मत्प्रत्ययविषयता । अहन्ता-अहमितिभावः । आत्मता-आत्मेतिभावः । परता-परोऽयमितिभावः । आत्मशब्दस्सर्वशब्दपर्यायः । तत्र त्वन्ताहन्ते प्रत्यक्षविषये । आत्मतापरते परोक्षव्यवहारविषये । भेदकलना-भेदप्रतीतिः । भावाभावरञ्जना-भावाभावनिबन्धनो विशेषः । सर्वं-सर्वात्मकम् । शान्तं-निर्विकारम् । निरालंबं-निर्विषयम् । व्योमस्थं-चिदाकाशरूपे स्वात्मनि वर्तमानम् । अनामयं-निर्दोषम् । अनाभासं-अनारोपितम् । अनामकं-नामजात्यादिरहितम् । अकारणं-कारणरहितम् न सत्-कार्यं नासत्-कारणं न मध्यान्तं-मध्यान्तशून्यम् । न सर्वं कल्पितनामरूपप्रपञ्चविलक्षणत्वात् । सर्वमेव तु सर्वप्रपञ्चाधिष्ठानत्वात् । पूर्णात्-आकाशादेरपि पूर्णं पूर्णतरम् । सुखाद्विषयसुखादपि सुखम् । निरतिशयानन्दरूपत्वात् । असंवेदनं-संवेदकप्रमाणान्तरशून्यम् । आशान्तं-सर्वासामाशानां मनोरथानां निवर्तकं ब्रह्मानन्दात् परस्य अपेक्षणीयत्वाभावात् । आत्मवेदनं-स्वयमेव सर्वस्य प्रमाणभूतम् । आततं-व्याप्तम् ।

परिपूर्णमद्वयमिति श्रुतिः ।

गर्भोपनिषदि—

फलमुक्तिप्रदायी—श्रवणमननादिफलभूतमोक्षप्रदाता । संसारमोचक इत्यर्थः । उक्तञ्च सूतसंहितायाम्—

ब्रह्माद्याः स्थावरान्ताश्च पशवः परिकीर्तिताः ।
तेषां पतिरहं देवि स्मृतः पशुपतिर्बुधैः ।

मायापाशेन बध्नामि पशूनेतान् सरस्वति ।
तेषां पशूनां सर्वेषां मोचकोऽहं सुलोचने ।
मामेव मोचकं प्राह श्रुतिः साध्वी सनातनी ।
सर्वेषामात्मभूतोऽहमेव संसारमोचकः ।
मामृते सांबमीशानं मोचकोऽन्यो न विद्यते ।
अहमप्राप्तसंसारः सर्वज्ञश्च स्वभावतः ।
मदन्ये त्वात्मविज्ञानविहीना माययाऽऽवृताः ।
सदा संसारिणो मोच्याः प्रकृतिः केवलञ्जडम् ।
तस्मात् पशूनां सर्वेषामहं संसारमोचकः ।
न मत्तोऽन्यः पुमान् दक्ष इत्येषा शाश्वती श्रुतिः । इति ।

मृगेन्द्रसंहितायामपि—

अथानादिमलापेतः सर्वदृक् सर्वकृच्छिवः ।
पूर्वव्यत्यासितस्याणोः पाशजालमपोहति । इति ।

अशुभक्षयकर्तारं फलमुक्तिप्रदायिनमिति श्रुतिः ।

केनोपनिषदि—

ब्रह्म—वृद्धतमम् । नित्यं परिपूर्णं सर्वाधिष्ठानं प्रत्यगभिन्नम् । प्रत्यगभिन्नत्वञ्च स्फुटीकृतमभियुक्तैः—

अहमस्मि सदा भामि कदाचिन्नाहमप्रियः ।
ब्रह्मैवाहमतस्सिद्धस्सच्चिदानन्दलक्षणः । इति ।

भाष्यकारैरपि—श्रुत्यर्थप्रदर्शनद्वारा ब्रह्मस्वरूपनिरूपणं कृतम्—

यज्ज्ञानात् सर्वविज्ञानं श्रुतिषु प्रतिपादितम् ।
मृदाद्यनेकदृष्टान्तैस्तद्ब्रह्मेत्यवधारय ।
विजिज्ञास्यतया यच्च वेदान्तेषु मुमुक्षुभिः ।
समर्थ्यतेऽतियत्नेन तद्ब्रह्मेत्यवधारय । इति ।

अन्यत्रापि—

यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम् ।
यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत् ।
यद्दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः ।
यज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत् ।
तिर्यगूर्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम् ।
अनन्तं नित्यमेकं यत् तद्ब्रह्मेत्यवधारयेत् । इत्यादिना ।

वासिष्ठेऽपि—

ब्रह्मचिद्भुवनं ब्रह्म ब्रह्म भूतपरंपरा ।
ब्रह्माऽहं ब्रह्म मच्छत्रु ब्रह्म मन्मित्रबान्धवाः । इति ।

उक्तश्च **सूत्रकारैः** ब्रह्मणस्सर्वात्मकत्वं सूत्रैकदेशेन **दाशकितवादित्वमधीयत एके** इति ।

विवृतश्च **भाष्यकारैः** श्रुत्युदाहरणपुरस्सरम्—

**ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः** इत्यादिना । दाशाः य एते कैवर्ताः प्रसिद्धाः ये चामी दासाः स्वामिष्वात्मानमुपक्षपयन्ति ये चान्ये कितवाः द्यूतकृतः ते सर्वे ब्रह्मैवेति हीनजन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसंघातप्रविष्टानाञ्जीवानां ब्रह्मत्वमाह । अन्यत्रापि ब्रह्मप्रक्रियायामयमेवार्थः प्रपञ्च्यते-**त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वञ्जीर्णो दण्डेन वञ्चसि त्वञ्जातो भवसि विश्वतोमुखः** इति । **सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते** इति च । **नान्योऽतोऽस्ति द्रष्टे**त्यादिश्रुतिभ्यश्च अस्यार्थस्य सिद्धिरिति ।

**ब्रह्म ह देवेभ्यो विजिग्ये** इति श्रुतिः ।

**काठकोपनिषदि**—

**बहुधा चिन्त्यमानः**—बहुधा अस्ति नास्ति, कर्ताऽकर्ता, शुद्धोऽशुद्धः, इत्याद्यनेकधा वादिभिश्चिन्त्यमानः । चैतन्यविशिष्टः स्थूलदेहः आत्मेति **लोकायतभेदाः** । प्राण एव आत्मेति

**हैरण्यगर्भाः** । मन एव आत्मेति केचिदुपासकाः । क्षणिकं विज्ञानं स्वप्रकाशमात्मेति **बौद्धाः**। शून्यमेवात्मेति **माध्यमिकाः** । **केचिदात्मानमणुपरिमाणं वदन्ति** । **दिगंबरास्तु** मध्यमपरिमाण आत्मेति वदन्ति । **नैय्यायिकाः प्राभाकराश्च** विभुत्वं जडत्वं कर्तृत्वादिकञ्च आत्मनो वर्णयन्ति। **भाट्टास्तु** चिदचिद्रूपत्वमात्मन आहुः । **योगास्तु** क्लेशकर्मविपाकाशयैरपरामृष्टं जीवभिन्नमीश्वरमाहुः । **नैय्यायिकास्तु** नित्यज्ञानप्रयत्नेच्छागुणवानिति मन्यन्ते । **हिरण्यगर्भोपासकास्तु** हिरण्यगर्भ एव ईश्वर इत्याहुः । हिरण्यगर्भस्तु मायोपाधिकः परमात्मा समष्टिलिङ्गशरीराभिमानी। अविद्याकामकर्मरहितः । **विराडुपासकास्तु** समष्टिस्थूलशरीराभिमानी सर्वतश्शिरःपाण्यादिमान् विराड्रूप ईश्वर इत्याहुः । गुणमूर्तित्रयमध्ये चतुर्मुख एव ईश्वर इति **ब्रह्मागमिकाः** । विष्णुरेवेश्वर इति **भागवताः** । शिव इति **शैवाः** । मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमिति यः श्रुतिप्रतिपादितः सर्वान्तर्यामी सर्वजगत्कारणं सर्वप्रत्यगात्मभूतश्च स एव ईश्वर इति **सिद्धान्तिनः**। उक्तञ्च **भाष्यकारैः**—देहमात्रञ्चैतन्यविशिष्टं आत्मेति प्राकृता जना लोकायतिकाश्च प्रतिपन्नाः । इन्द्रियाण्येव चेतनान्यात्मेत्यपरे। मन इत्यन्ये। विज्ञानमात्रं क्षणिकमित्येके। शून्यमित्यपरे । अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्ता इत्यपरे। भोक्तैव केवलं न कर्तेत्यन्ये । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति केचित् । आत्मा स भोक्तुरित्यपरे इति ।

सूतसंहितायामपि—

तं हरं केचिदिच्छन्ति केचिद्विष्णुं सुरोत्तमाः ।
केचिन्मामेव चेच्छन्ति केचिदिन्द्रादिदेवताः ।
केचित् प्रधानं त्रिगुणं स्वतन्त्रं केवलं जडम् ।
अणवः केचिदिच्छन्ति शब्दं केचन मोहिताः ।
क्षणप्रध्वंसि विज्ञानं केचन भ्रान्तचेतसः ।
शून्यसंज्ञं सुराः केचित् निरुपाख्यं विमोहिताः ।
केचिद्भूतानि चेच्छन्ति निसर्गं केचन भ्रमात् ।
तत्र तत्रैव तर्कांश्च प्रवदन्ति यथाबलम् । इति ।

**शब्दं केचनेति ।** वैय्याकरणास्तु शब्दब्रह्मैव अर्थब्रह्मप्रपञ्चात्मना विवर्तत इति शब्दस्यैव कारणत्वं वर्णयन्ति । उक्तं हि—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।** इति ।

**निसर्गं केचनेति ।** अपरे तु भ्रान्ताः न कदाचिदनीदृशञ्जगदिति सर्ग एव नास्तीति मन्यन्ते । श्रुतावपि जगत्कारणे विप्रतिपत्तिर्दर्शिता—

**कालः स्वभावो नियति र्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् ।** इति ।

कालः सर्वभूतानां विपरिणामहेतुः । स्वभावो नाम पदार्थानां प्रतिनियता शक्तिः अग्नेरौष्ण्यमिव । नियतिः पुण्यपापलक्षणं कर्म । यदृच्छा आकस्मिकी प्राप्तिः । भूतानि आकाशादीनि । योनिः प्रकृतिः । पुरुषः विज्ञानात्मा । **शैवे** वायवीयसंहितायां श्रीकृष्णं प्रत्युपमन्युः—

**विराड्ढिरण्यगर्भात्मा कैश्चिदीशो निगद्यते ।**
**हिरण्यगर्भो लोकानां हेतुर्विश्वेश्वरो विराट् ।**
**अन्तर्यामी परश्चेति कथ्यते कविभिस्सह ।**
**प्राज्ञतैजसविश्वात्मेत्यपरे संप्रचक्षते ।**
**माता मानञ्च मेयञ्च मितञ्चाहुरथापरे ।**
**कर्ता क्रिया च कार्यञ्च करणं कारणं परे ।**
**जाग्रत्स्वप्नसुषुप्त्यात्मेत्यपरे संप्रचक्षते ।**
**तुरीयमितरे प्राहुस्तुर्यातीतमितीतरे ।**
**तमाहुर्निर्गुणं केचित् गुणवन्तं परे विदुः ।**
**केचित् संसारिणं प्राहुरस्वतन्त्रं परे विदुः ।**
**घोरमित्यपरे प्राहुः सौम्यमित्यपरे विदुः ।**
**रागवन्तं परे प्राहुर्वीतरागमथापरे ।**

निष्क्रियं तं परे प्राहुः सक्रियञ्चापरे जनाः ।
निरिन्द्रियं परे प्राहुस्तमध्रुवमितीतरे ।
अरूपं केचिदाहुर्वै रूपवन्तं परे विदुः ।
दृश्यमित्यपरे प्राहुस्तमदृश्यमथापरे ।
वाच्यमित्यपरे प्राहुः शब्दातीतमथापरे ।
केचिच्चिन्तामयं प्राहुश्चिन्तया रहितं परे ।
ज्ञानात्मकं परे प्राहुर्विज्ञानमिति चापरे ।
केचिज्ज्ञेयमिति प्राहुरज्ञेयमिति केचन ।
एके तमेकं वा प्राहुरनेकञ्च परे विदुः ।
एवं विकल्प्यमानेषु याथार्थ्यं परमेष्ठिनः ।
नाध्यवस्यन्ति मुनयो नानाप्रत्ययकारणात् ।
ये पुनः सर्वभावेन प्रपन्नाः परमेश्वरम् ।
ते विजानन्त्ययत्नेन शिवः परमकारणम् । इति ।

ननु उक्तरीत्या अनेकविरुद्धमतप्रदर्शनात् कथं सिद्धान्तसिद्धिरिति चेत्।

सूत्रभाष्यकाराभ्यां तत्र तत्र परिहृत्वात् । **ईक्षतेर्नाशब्दं, रचनानुपपत्तेश्च नानुमानं, एतेन सर्वे व्याख्याता व्याख्याताः, एक आत्मनश्शरीरे भावात्** इत्याद्यधिकरणेषु। अयमर्थः **सूतसंहितायामपि** वर्णितः—

सर्वे भेदाः श्रुतिस्मृत्योर्विरुद्धा इति मे मतिः ।
पापिष्ठानाञ्च जन्तूनां तत्र तत्र सुरर्षभाः ।
प्राक्संस्कारवशादेव जायते रुचिरास्तिका इत्यादिना ।

मतान्तरविरोधपरिहाररहस्यन्तु वह्निखण्डे **समः इति नामनिरूपणावसरे** स्फुटीभविष्यति ।

**एष सुविज्ञेयो बहुधा चिन्त्यमानः** इति श्रुतिः ।

**बृहत्**—परिपूर्णं सर्वकारणत्वात् ।

अब्जा गोजा ऋतजा अद्रिजा ऋतं बृहदिति श्रुतिः ।

मुण्डकोपनिषदि—

**ब्रह्मयोनिः**—ब्रह्म च तद्योनिश्च ब्रह्मयोनिः । अपरस्य ब्रह्मणः वेदानां वा योनिः ।
तदुक्तम्—

अस्य पूर्वमुखं सौम्यं बालार्कसदृशप्रभम् ।
त्रिलोचनारविन्दास्यं बालेन्दुकृतशेखरम् ।
अस्मादेवमुखात् पूर्वमृचः सर्वाः प्रजज्ञिरे ।
दक्षिणं नीलजीमूतसमानरुचिरप्रभम् ।
भ्रुकुटीकुटिलं घोरं रक्तवृत्तेक्षणत्रयम् ।
दंष्ट्राकरालं दुर्धर्षं स्फुरिताधरपल्लवम् ।
इन्दुरेखाकृतोत्तंसमूर्ध्वज्वलितमूर्धजम् ।
अस्मादेव मुखात् पूर्वं यजुर्वेदाः प्रजज्ञिरे ।
पश्चिमं दुग्धसंकाशं बालचन्द्रशिखामणि ।
मुक्ताफलमयैर्हारैर्भूषितं तिलकोज्ज्वलम् ।
अस्मादेव मुखात् पूर्वमथर्वांगिरसोऽभवन् ।
उत्तमं विद्रुमप्रख्यं नीलालकविभूषितम् ।
सविलासं त्रिणयनं चन्द्राभरणभास्वरम् ।
अस्मादेव मुखात् पूर्वं सामवेदाः प्रजज्ञिरे ।
पञ्चमं स्फटिकप्रख्यं शुद्धविद्यासमुज्ज्वलम् ।
अतीवसौम्यमुत्फुल्ललोचनं चन्द्रभूषणम् ।
अस्मादेव मुखात् पूर्वमोङ्काराख्यः समुद्गतः । इति ।

कर्तारमीशं पुरुषं ब्रह्मयोनिम् इति श्रुतिः ।

तैत्तरीये—

**बलविकरणः**—बलस्य विविधं कर्ता। कृत्यल्युटो बहुळमिति कर्तरि ल्युट्। बलवैचित्र्यकारीति यावत्। यद्वा कर्मणि ल्युटि बहुव्रीहिः। बलं विकरणीयं यस्य स तथा। तथा च पूर्वप्रकृतिस्वरश्च उपपन्नो भवति। बलशब्दः पचाद्यचि वृषादिर्द्रष्टव्यः।

**बलप्रमथनः**—बलानि प्रमथनीयानि लोडयितव्यानि परिपाचयितव्यानि यस्य सः तथा।

**बलविकरणाय नमो बलप्रमथनाय** इति श्रुतिः।

**ब्रह्माधिपतिः। ब्रह्मणोऽधिपतिः**। ब्रह्म चासावधिपतिः—अधिकं पालयिता। ब्रह्मणोऽधिपतिः—ब्रह्मणो हिरण्यगर्भस्य पतिः उपलक्षणत्वात् जगत्पतीनामपि पतिः।

**ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवः** इति श्रुतिः।

छान्दोग्ये—

**ब्रह्मपुरम्**—ब्रह्मैव पुरं ब्रह्मपुरम्। पुरमिव पुरं सर्वव्यवहारास्पदत्वात्। **एतत् सत्यं ब्रह्मपुरमिति** श्रुतिः।

**ब्रह्मलोकः**—ब्रह्मैव लोको ब्रह्मलोकः। **सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति** श्रुतिः।

ब्रह्मोपनिषदि—

**ब्रह्मभावम्**—ब्रह्मस्वरूपम्। **ब्रह्मभावमिदं स्थलमिति** श्रुतिः।

श्वेताश्वतरोपनिषदि—

**ब्रह्मतत्त्वम्**—तत्त्वभूतं ब्रह्मेत्यर्थः। ब्रह्मणस्तत्त्वरूपत्वं द्वेधा-अध्यस्तस्य सर्वस्य प्रपञ्चस्य अरोपाधिष्ठानत्वेन बाधावधित्वेन च। उक्तञ्च **भाष्यकृता-शून्यवादनिराकरणप्रस्तावे**-न ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारःअन्यत्तत्वमनधिगम्य शक्यते अपह्नोतुं अपवादाभावे उत्सर्गप्रसिद्धेरिति। विवृतश्चा**चार्यवाचस्पतिमिश्रैः**—आरोपितं निषेधनीयं, आरोपश्च तत्त्वाधीनो दृष्टः, यथा शुक्तिकादिषु रजतादेः, न चेत्किञ्चिदस्ति तत्त्वं कस्य कस्मिन्नारोपः, तस्मान्निष्प्रपञ्चं परमार्थसत् ब्रह्म अनिर्वाच्यप्रपञ्चात्मना आरोप्यते। तच्च तत्त्वं व्यवस्थाप्य अतात्त्विकत्वेन सांव्यवहारिकत्वं प्रमाणानां बाधकेनोपपाद्यत इति युक्तमुत्पश्यामः इति। तदुक्तं **वासिष्ठे**—

यत् सर्वशास्त्रसिद्धान्तो यत् सर्वहृदयानुगम् ।
यत् सर्वं सर्वगं वस्तु यत्तत्वं तदसौ स्थितः ।
यदनुत्तमनिष्पन्दं भासकं तेजसामपि ।
स्वानुभूत्येकमानश्च यत्तत्वं तदसौ स्थितः ।
यदेकश्चाप्यनेकश्च साञ्जनश्च निरञ्जनम् ।
यत् सर्वश्चाप्यसर्वश्च यत्तत्वं तदसौ स्थितः । इति ।

अनेन ब्रह्मतत्त्वनिरूपणेन वीतहव्यस्य मुक्तिः प्रदर्शिता ।

**यदात्मतत्त्वेन तु ब्रह्मतत्त्व**मिति श्रुतिः ।

**ब्रह्मपरम्**—ब्रह्मणो हिरण्यगर्भात् परम् । **ततः परं ब्रह्मपरं बृहन्त**मिति श्रुतिः ।

**बहुधा विकुर्वन्**—सुरनरतिर्यगादिरूपेण बहुधा प्रपञ्चं सृजन् । **एकैकं जालं बहुधा विकुर्वन्**निति श्रुतिः ।

**बृहज्जाबालोपनिषदि**—

**ब्रह्मादिवन्दितः** । वन्दनं स्तुत्यर्चनादेरुपलक्षणम् । तदुक्तं **सूतसंहितायाम्**—

ब्रह्मविष्ण्वादयः सर्वे प्रणम्य भुवि दण्डवत् ।
शिरस्यञ्जलिमाधाय प्रसन्नेन्द्रियमानसाः ।
अस्तुवन्मुक्तिदं भक्त्या भुक्तिदं भवभेषजम् । इति ।

**तत्रैव**—

अथ तेषां प्रसादार्थं पशूनां पतिरीश्वरः ।
उमार्धविग्रहः श्रीमान् सोमार्धकृतशेखरः ।
नीलकण्ठो निराधारो निर्मलो निरुपप्लवः ।
ब्रह्मविष्णुमहेशानैरुपास्यः परमेश्वरः ।
सान्निध्यमकरोद्रुद्रः साक्षात्संसारनाशकः । इति ।
भक्त्या पूज्य महेश्वराख्यममलं मुक्तिप्रदं भुक्तिदं
शक्त्या युक्तमतिप्रसन्नवदनं ब्रह्मेन्द्रपूर्वाः सुराः ।

नित्यानन्दनिरञ्जनामृतपरज्ञानानुभूत्या सदा
नृत्यन्तं परमेश्वरं पशुपतिं भक्त्यैव लभ्यं परम् ।
लौकिकेन वचसा मुनीश्वरा वैदिकेन वचसा च तुष्टुवुः ।
देवदेवमखिलार्तिहारिणं ब्रह्मवज्रधरपूर्वकाःसुराः ।
निर्विकल्पं परं तत्त्वं नाम साक्षाच्छिवः परः ।
सोऽयं सांबःत्रिणेत्रश्च सोमार्धकृतशेखरः ।
स्वात्मतत्त्वसुखस्फूर्तिप्रमोदात् ताण्डवप्रियः ।
रुद्रविष्णुप्रजानाथैरुपास्यो गुणमूर्तिभिः । इति ।
उमार्धविग्रहा शुद्धा त्रिणेत्रा चन्द्रशेखरा ।
ब्रह्मविष्णुमहेशानैरुपास्या गुणमूर्तिभिः । इति ।
अस्मिन्नवसरे श्रीमान् शंकरः शशिशेखरः ।
नीलकण्ठो विरूपाक्षः सांबः साक्षाद्घृणानिधिः ।
ब्रह्मविष्णुमहेशानैरुपास्यो गुणमूर्तिभिः ।
आविर्बभूव सर्वज्ञस्तत्रैव सुरसन्निधौ । इति ।
त्रिमूर्तीनात्तु रुद्रोऽपि शिवं परमकारणम् ।
सदा मूर्त्यात्मना प्रीत्या ध्यायति द्विजपुङ्गवाः ।
त्रिमूर्तीनाञ्च विष्णुश्च शिवं परमकारणम् ।
सदामूर्त्यात्मना प्रीत्या ध्यायति द्विजपुङ्गवाः ।
त्रिमूर्तिनां विरिञ्चोऽपि शिवं परमकारणम् ।
सदा मूर्त्यात्मना प्रीत्या ध्यायति द्विजपुङ्गवाः ।
ब्रह्मविष्णुमहेशानां त्रिमूर्तीनां विचक्षणाः ।
विभूतिरूपा देवाश्च ध्यायन्ति प्रीतिसंयुताः । इति च ।

वासिष्ठलैङ्गेऽपि—

शिव एव परं तत्त्वं तस्मान्नास्त्यधिकं मुने ।

तल्लक्षणं महाप्राज्ञ श्रुतिषु श्रूयते सदा।
सत्यं ज्ञानं सदानन्दं जगत्सर्गादिकारणम् ।
मूर्तिस्तस्य मुनिश्रेष्ठ शिरसि श्रूयते श्रुतेः ।
उमया सहिता नित्या नीलग्रीवा त्रिलोचना ।
स्वात्मतत्त्वसुखस्फूर्तिमुदिता ताण्डवप्रिया ।
ब्रह्मविष्णुमहेशानैरुपास्या गुणमूर्तिभिः ।
भोगमोक्षप्रदा पुण्या पुंसां वेदविदां वर । इति ।

पराशरोपपुराणेऽपि—

वरदाभयहस्ताय त्रिणेत्राय त्रिमूर्तिभिः ।
हृदि ध्येयाय नित्याय नमस्सांबाय साक्षिणे । इति ।

तत्रैव—

उमार्धविग्रहा शुक्ला त्रिणेत्रा चन्द्रशेखरा ।
नीलग्रीवा परानन्दप्रमोदात् ताण्डवप्रिया ।
ब्रह्मविष्णुमहादेवैरुपास्या गुणमूर्तिभिः ।
सर्वमूर्तिविहीनस्य सर्वा मूर्तिः शिवस्य तु ।
तथाऽप्येषा परा मूर्तिरित्येषा शाश्वती श्रुतिः । इति ।
साक्षात्परतरस्यैव वस्तुनः सर्वसाक्षिणः ।
अस्ति मूर्तिः परा शुद्धा स्वतन्त्रा पापनाशिनी ।
तस्यासाधारणी मूर्तिः सांबा चन्द्रार्धशेखरा ।
इत्यारभ्य ब्रह्मविष्णुमहेशानास्तां ध्यायन्ति निरन्तरम् । इति च ।

ईशानसंहितायाम्—

लिङ्गमध्याद्विनिष्क्रम्य शङ्करःस्वात्मनो वपुः ।
अर्धनारीश्वरं दिव्यं त्रिणेत्रं नीललोहितम् ।
वरदाभयहस्तञ्च मृगटंकधरं विभुम् ।

सर्वाभरणसंयुक्तं गणकोटिसमन्वितम् ।
सूर्यकोटिप्रतीकाशमर्धचन्द्रावतंसकम् ।
दृष्ट्वा विस्मयमापन्नौ भक्त्या संपूज्य शङ्करम् ।
नीलरुद्रेण रुद्रेण त्वरितेन महेश्वरम् ।
शिखयाऽथर्वशिरसा सूक्तैर्बहुविधैरपि ।
स्तुत्वा बहुविधैःस्तोत्रैः कृताञ्जलिपुटौ स्थितौ ।
हरिकेशस्तदा ताभ्यां भक्त्या परमयाऽर्चितः ।
उवाच वचनं चारु परिपूर्णार्थमन्थरम् ।
शृणु पद्मज मद्वाक्यं त्वं विष्णो गरुडध्वज ।
अहमेव जगत्कर्ता युवयोः कारणन्त्विति ।

**पाद्मे पुराणे** चतुर्थाध्याये शिवाराधनतत्परं रामभद्रं प्रति उमया सह वृषभारुढस्य शिवस्याविर्भावकाले—

बृहद्रथन्तरादीनि सामानि परिगायतः ।
स्वस्वकान्तासमायुक्तान् दिक्पालान् परितः स्थितान् ।
अग्रतो गरुडारूढं शंखचक्रगदाधरम् ।
कालाम्बुदप्रतीकाशं विद्युत्कान्त्या श्रिया युतम् ।
जपन्तमेकमनसा रुद्राध्यायं जनार्दनम् ।
पश्चाच्चतुर्मुखं देवं ब्रह्माणं हंसवाहनम् ।
चतुर्वक्त्रैश्चतुर्वेदै रुद्रसूक्तै र्महेश्वरम् ।
स्तुवन्तं भारतीयुक्तं कूर्चयुक्तं जटाधरम् ।
अथर्वशिरसा देवं स्तुवन्तं मुनिमण्डलम् ।
गंगादितटिनीयुक्तमम्बुधिं नीलविग्रहम् ।
श्वेताश्वतरमन्त्रेण स्तुवन्तं गिरिजापतिम् ।
अनन्तादीन् महानागान् कैलासगिरिसन्निभान् ।

कैवल्योपनिषत्पाठरतान् मणिविभूषितान् ।
सुवर्णवेत्रहस्ताढ्यं नन्दिनं पुरतः स्थितम् ।
दक्षिणे मूषिकारूढं गणेशं पर्वतोपमम् ।
मयूरवाहनारूढमुत्तरे षण्मुखं तथा । इति ।

वायवीयसंहितायां मुनीन् प्रति ब्रह्मवचनम् —

एष देवो महादेवो विज्ञेयस्तु महेश्वरः ।
न तस्य परमं किञ्चित् पदं समभिगम्यते ।
अयमादिरनाद्यन्तः स्वभावादेव निर्मलः ।
स्वतन्त्रः परिपूर्णश्च स्वेच्छाधीनचराचरः ।

इति प्रस्तुत्य—

हरिश्चाहञ्च शर्वश्च तथान्ये च सुरासुराः ।
तपोभिरुग्रैरद्यापि तस्य दर्शनकांक्षिणः । इति ।

तत्रैव दक्षशिक्षावरप्रसादानन्तरम्—

ततो ब्रह्मा महादेवमभिवन्द्य कृताञ्जलिः ।
तुष्टाव शुभया वाचा देवीञ्च गिरिजामुमाम् ।
ततो विष्णुस्ततो देवास्ततस्सर्वे महर्षयः ।
तुष्टुवुर्देवदेवेशं देवेशीञ्च पृथक् पृथक् ।
अथ तदा हरिशक्रपितामहप्रभृतयःसुरलोकमहेश्वराः ।
सकललोकमहेश्वरमीश्वरं शरणमेत्य कृताञ्जलयोऽस्तुवन् ।
स च पुनस्त्रिदशाञ्छरणागतान् परमकारुणिकः परमेश्वरः ।
अनुगतस्मितलक्षणया गिरा शमितसर्वभयं समभाषत ।
यदिदमाहवमाचरितं सुरैः विधिनियोगवशादिव यन्त्रितैः ।
शरणमेत्य गतानवलोकय वः तदखिलं किल विस्मितमेव नः । इति ।

पाद्मे कल्याणकाण्डे वृद्धवेषधरं शिवं प्रति सखीवचनम्—

यत्पादपद्मं विधिविष्णुरुद्राः शक्रादयस्सर्वसुरासुराश्च।
रत्नैर्विचित्रैः कृतमौलिमाल्यैः संरञ्जयन्तः प्रणता भवन्ति। इति।

शैवे एकादशरुद्रसंहितायां विष्णुतपश्चर्यानन्तरम्—

आरुह्य वृषभं देवः सहोमः सगणेश्वरः।
ब्रह्मादिभिः स्तूयमानो वन्द्यमानो मरुद्गणैः।
जगाम तत्र यत्रास्ते तपस्यभिरतोऽच्युतः। इति।

स्कान्दे कमलालयमाहात्म्ये विश्वामित्रः—

नमोऽस्तु तस्मै हरिवल्लभाय नमोऽस्तु तस्मै सुरवन्दिताय।
नमोऽस्तु पाशादिनिकृन्तनाय नमोऽस्तु खट्वाङ्गविभूषणाय।
ब्रह्मेन्द्रपूज्याय सुरेश्वराय तस्मै नमः पापविनाशनाय।
तस्मै नमः शूलवरायुधाय पिनाकहस्ताय नमः शिवाय। इति।

शिवधर्मे सनत्कुमारं प्रति श्रीनन्दिकेश्वरवचनम्—

सर्वैः प्रणतदेहाय स्वयमप्रणतात्मने
पूज्यानामपि पूज्याय अनन्ताय नमोऽस्तु ते।
ब्रह्मेन्द्रविष्णुवन्द्याय उत्पत्तिस्थितिहेतवे।
भुक्तिमुक्तिप्रदात्रे च संस्तुताय नमोऽस्तु ते। इति।

शिवपुराणे—अप्राकृतवपुः श्रीमान् लक्ष्यलक्षणवर्जितः। इत्यादिना तन्महिमविशेषमुपवर्णयता कमलासनेन—

हरिश्चाहञ्च रुद्रश्च तथाऽन्ये च सुरासुराः।
तपोभिरुग्रैरद्यापि तस्य दर्शनकाङ्क्षिणः। इत्युक्तम्।

स्कान्दे सनत्कुमारसंहितायां चतुर्थाध्याये दुर्वासाः—

देवदेव जगन्नाथ सर्वज्ञ करुणानिधे।
मेरुचाप फणीन्द्रज्य विष्णुबाण महीरथ।

रविचन्द्ररथांगेश वेदाश्व ब्रह्मसारथे ।
वृषभध्वज विश्वेश सर्वालंकारभूषित ।
स्मितेन सहसा दग्धत्रिपुर त्रिदशेश्वर ।
अन्धकासुरसंहार दक्षयज्ञविनाशन ।
मारसौन्दर्यसन्दोहदाहदक्ष यमान्तक ।
मदोन्मत्तगजं हत्वा लोकनाशकरं परम् ।
तद्रक्तबिन्दुसंपूर्णत्वग्विशालपट प्रभो ।
भक्तसङ्गत........ब्रह्मविष्णुदेवादिवन्दित । इति ।

तत्रैव ब्रह्मादयः—

ज्योतींषि सञ्चरन्ते च चेष्टन्ते तव शासनात् ।
ब्रह्मविष्णू च जगतां सर्गसन्त्राणयोरलम् ।
विहायः कल्पते वृष्टयै सूते सस्यादि मेदिनी ।
नाक्रमन्त्यब्धयो भूमिं तव यन्महिमैव सः ।
विभुत्वेऽपि स्मरामस्त्वां स्मरामः सङ्कटेऽपि च ।
न रोषो जातु भक्तेषु ततोऽस्मासु प्रसीद भो ।
इति स्तुतः साञ्जलिभिः पशूनां पति र्हरिब्रह्मसुरेन्द्रदेवैः ।
समीपमागत्य च कालकूटे स्थितेऽब्रवीद्धृष्टमनाः सहर्षीन् । इति ।

आदित्यपुराणे मानवीयसंहितायाम्—

नमाम्यहं देववरं पुराणं उपेन्द्रदेवेन्द्रसुरादिजुष्टम् ।
शशाङ्कसूर्याग्निमयत्रिलोचनं ध्यानाभिगम्यं जगतः प्रकाशम् । इति ।

महाभारते आनुशासनिके सप्तचत्वारिंशाध्याये शिवं प्रस्तुत्य तण्डिः—

अतः प्रवर्तते सर्वमस्मिन् सर्वं प्रतिष्ठितम् ।
अस्मिंश्च प्रलयं याति सोऽयमेको ह्यनामयः ।
अयञ्च सत्यकामानां सत्यलोकः परः सताम् ।

अपवर्गश्च मुक्तानां कैवल्यश्चात्मवेदिनाम् ।
अयं ब्रह्मादिभिः सिद्धैःगुहायां गोपितः प्रभुः ।
देवासुरमनुष्याणां न प्रकाशो भवेदिति।
तेन देवासुरनराः तत्त्वेन न विदुर्भवम्।
मोहिताः खल्वनेनैव हृदिस्थेन प्रचोदिताः।
ये चैनं संप्रपद्यन्ते भक्तियोगेन भारत।
तेषामेवात्मनाऽऽत्मानं दर्शयत्येष हृच्छयः ।
यं ज्ञात्वा न पुनर्जन्म मरणं वाऽपि विद्यते ।
यं विदित्वा परं वेद्यं वेदितव्यं न विद्यते ।
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं पुनः । इति ।

तत्रैव पर्वणि श्रीकृष्णं प्रत्युपमन्युः—

सौरभेयगतं सौम्यं विधूममिव पावकम् ।
प्रशान्तमनसं देवं त्रिनेत्रमपराजितम् ।
सहितं चारुसर्वाङ्ग्या पार्वत्या परमेश्वरम् ।
नीलकण्ठं महात्मानं हर्यक्षं तेजसां निधिम् ।
अष्टादशभुजं देवं सर्वाभरणभूषितम् । इत्यादिना सायुधं सपरिवारमुपवर्ण्य
ब्रह्मा भवं तदाऽस्तौषीत् रथन्तरमुदीरयन् ।
ज्येष्ठसाम्ना च देवेशं जगौ नारायणः प्रभुः ।
जगौ शक्रः परं ब्रह्म शतरुद्रीयमुत्तमम् ।
यं विष्णुरिन्द्रश्शम्भुश्च ब्रह्मा लोकपितामहः ।
स्तुवन्ति विविधैः स्तोत्रैर्देवदेवं महेश्वरम् ।
तमर्चयन्ति ये शश्वद्दुर्गाण्यतितरन्ति ते । इति ।

अभियुक्तैरपि—

वृषाधिरूढं देवेशं सर्वलोकैककारणम् ।
ध्यायेद्ब्रह्मादिभिः स्तुत्यं पार्वतीसहितं शिवम् । इति ।

भाष्यकारैरप्युक्तम्—

अनाद्यन्तमाद्यं परं तत्त्वमर्थं चिदाकारमेकं तुरीयं त्वमेयम्।
हरिब्रह्ममृग्यं परब्रह्मरूपं मनोवागतीतं महः शैवमीडे । इति ।

शान्तं शाश्वतं ब्रह्मादिवन्दितमिति श्रुतिः ।

तापनीयोपनिषदि—

बुद्धेर्द्रष्टा । बुद्धेस्साक्षी । स्पष्टम् । बुद्धेर्द्रष्टा प्राणस्य द्रष्टेति श्रुतिः । बुद्धेस्साक्षी प्राणस्य साक्षीति श्रुतिः ।

बलम्— चैतन्यरूपम् । सर्वद्वैतपरिभवसंहारसामर्थ्यरूपत्वात् । आत्मचैतन्यरूपं बलमवष्टभ्येति श्रुतिः ।

बुद्धः—बोधः । प्रपञ्चासंस्पृष्ट इत्यर्थः । तदुक्तं प्रबोधचन्द्रोदये—

किं वाऽऽप्तं किमपोहितं किमुदितं किं वा समुत्सारितं
स्यूतं किन्नु विलासितं नु किमिदं किञ्चि न्न वा किञ्चन ।
यस्मिन्नभ्युदिते वितर्कपदवीं नैवं समारोहति
त्रैलोक्यं सहजप्रकाशदलितं सोऽहं प्रबोधोदयः । इति ।

नित्यश्शुद्धो बुद्धः सत्यः इति श्रुतिः ।

काठकोपनिषदि—

भूतभव्यस्येशानः । उपलक्षणमेतत् । कालत्रयवर्तिपदार्थानां नियन्तेत्यर्थः । ईशानो भूतभव्यस्य इति श्रुतिः ।

भान् । भाः । स्वप्रकाशरूपः । स्वेनैव आत्मरूपेण प्रकाशते न त्वनात्मना दृश्येन प्रकाश्यते । आत्मव्यतिरिक्तस्य सर्वस्य दृश्यस्य स्वयमेवावभासकमित्यर्थः । तदुक्तं सूतसंहितायाम्—

भातं भानं सदा स्वेन भासा भाति न चान्यतः ।
यत्स्वयं भाति तद्भानं खलु भास्यस्य भासकम् ।
अतस्सर्वस्य साक्ष्यस्य साक्षिभूतः स्वयंप्रभः ।

आत्मा साक्ष्यगतैर्धर्मैः कर्मभिर्न स बध्यते। इति।

तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति इति श्रुतिः।

मुण्डकोपनिषदि—

भूतयोनिः। भूतकारणम्। यद्भूतयोनिं परिपश्यन्ति धीराः इति श्रुतिः।

तैत्तरीयके-

भुवनस्यनाभिः भुवनस्य—भूतजातस्य नाभिः-उपादानमित्यर्थः। विश्वं बिभर्ति भुवनस्य नाभिः इति श्रुतिः।

भवोद्भवः—भवस्य-संसारस्य उद्भावयिता यस्मादुद्भावयिता तस्मात् स एव भवमोचकश्च। अतःस एव संसारपाशमुमुक्षुभिः सेव्य इति भावः। उक्तञ्च सूतसंहितायाम्—

ब्रह्माद्याः स्थावरान्ताश्च पशवः परिकीर्तिताः।
तेषां पतिरहं देवि स्मृतः पशुपति र्बुधैः।
मायापाशेन बध्नामि पशूनेतान् सरस्वति।
तेषां पशूनां सर्वेषां मोचकोऽहं सुलोचने।
मामेव मोचकं प्राह श्रुतिः साध्वी सनातनी। इति।

भवे भवे नाति भवे भज [भव] स्व मां भवोद्भवाय नमः इति श्रुतिः।

छान्दोग्ये—

भारूपः—भा-दीप्तिश्चैनन्यलक्षणा रूपं यस्य स भारूपः। भारूपःसत्यसंकल्पः इति श्रुतिः।

भामनीः—एष हि यस्मात् सर्वेषु लोकेषु आदित्यचन्द्राग्न्यादिरूपैर्भाति-दीप्यते, अतो भामानि नयतीति भामनीः। एष उ एव भामनीरेष हि सर्वेषु लोकेषु भातीति श्रुतिः।

भूमा—महान् निरतिशयस्वरूपः। परमात्मेत्यर्थः। उक्तं सूत्रकारैः भूमा संप्रसादादध्युपदेशादिति। विवृतश्चाधिकरणरत्नमालायाम्—

भूमा प्राणः परेशो वा प्रश्नप्रत्युक्तिवर्जनात्।
अनुवर्त्यातिवादित्वं भूमोक्तश्चासुरेव सः।

विच्छिद्यैषत्विति प्राणं सत्यस्योपक्रमात् तथा।
महोपक्रम आत्मोक्तेरीशोऽयं द्वैतवारणात्। इति।

अनुभूतिप्रकाशेऽपि भूम्नः स्वरूपं निरूपितम्—

सुखं किमिति चेद्भूमा सुखमल्पे तु तन्नहि।
क्लिश्यत्यल्पधनोऽन्यस्मिन् धनबाहुल्यदर्शनात्।
भूम्नः सुखत्वे भूमा कः किमल्पमिति चेत् शृणु।
ज्ञातृज्ञानज्ञेयहीनो भूमा विच्छेदवर्जनात्।
ज्ञातृज्ञानज्ञेयरूपं मायाकार्यमिदञ्जगत्।
बहुविच्छेदयुक्तत्वादल्पमित्यभिधीयते।
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव हि।
भूमा तस्मादमर्त्योऽयमल्पं मर्त्यमतद्विधम्।
संसारकाल एवास्ते न मुक्तावल्पता ततः।
मुक्तौ ज्ञाननिवर्त्यत्वान्मर्त्यञ्जगदितीर्यते।
संसारमोक्षयो भूमा विद्यते सोऽमृतस्ततः।
अखण्डैकरसानन्दस्सोऽयमात्मा स्वयंप्रभः।
समाधिसुप्तिमूर्छासु भासते साधनं विना।
मूर्छासुप्त्योस्तादृशोऽयमज्ञानेन तिरोहितः।
मेघेनाच्छादितस्सूर्यो यथा तद्वत् स्वयंप्रभः।
अज्ञानेनावृतो भूमा प्राणिभिर्न विभाव्यते।
स्वप्रकाशात्मचैतन्यमज्ञानस्य न बाधकम्।
भासकं प्रत्युतैतस्य स्वानन्दस्य यथा तथा।
आनन्दाज्ञानयोस्सुप्तौ चैतन्येनावभासनात्।
उत्थितः सुखमस्वाप्सं न जानेऽन्यदिति स्मरेत्।
अरणिस्थो यथा वह्नि र्न दहेदरणिं तथा।

पश्चान्मथनजातोऽसौ साकल्येनारणिं दहेत् ।
तथा वेदान्तवाक्योत्थधीवृत्तौ प्रतिबिंबितम् ।
स्वप्रकाशात्मचैतन्यं कृत्स्नाज्ञानस्य बाधकम् ।
तस्माद्विज्ञानसहितः समाधावनुभूय हि ।
भूमानन्दं यथाशास्त्रं स्मृत्वा व्युत्थाय वक्ति च ।
ज्ञातृज्ञानज्ञेयरूपा त्रिपुटी स्वप्नजाग्रतोः ।
भूमानन्दं तिरोधत्ते विद्वांस्त्वभिभवत्यमुम् ।
चिच्छायावानहंकारो ज्ञाता स्याच्चक्षुरादिजा ।
बुद्धिवृत्तिर्भवेज्ज्ञानं ज्ञेया रूपरसादयः ।
त्रिपुटी मायिकी मिथ्येत्येवं विज्ञाय तत्त्ववित् ।
तामुपेक्ष्य करोत्येव भूमानन्दे भरं सदा ।

यो वै भूमा तत् सुखमिति श्रुतिः ।

बृहदारण्यके—

भूताधिपतिः । भूतपालः । भूतनियन्ता, भूतरक्षकश्च । एष भूताधिपतिरेष भूतपालः इति श्रुतिः ।

श्वेताश्वतरोपनिषदि—

भगवान्-निरतिशयैश्वर्यादिसंपन्नः ।

उक्तञ्च—

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा । इति ।
उत्पत्तिश्च विनाशञ्च भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति । इति च ।

सर्वव्यापी च भगवान् तस्मात् सर्वगतश्शिवः इति श्रुतिः ।

भुवनस्य गोप्ता-लोकरक्षिता । स एव काले भुवनस्य गोप्ता इति श्रुतिः ।

भावग्राह्यः—भावेन-विशुद्धान्तःकरणेन गृह्यत इति भावग्राह्यः। उक्तञ्च श्रुत्यन्तरे—

ज्ञानप्रकाशेन विशुद्धसत्वः ततस्तु तं पश्यते निष्कलं ध्यायमानः इति।

विशुद्धान्तःकरणैरेव भक्तिमद्भिर्योगिभिरात्मा ज्ञेय इत्याचार्यैरुक्तम्।

आचार्येभ्यो लब्धसुसूक्ष्माच्युततत्त्वाः वैराग्येणाभ्यासबलाच्चैव द्रढिम्ना।

भक्त्यैकाग्रध्यानपरा यं विदुरीशं तं संसारध्वान्तविनाशं हरिमीडे। इति।

वायवीयसंहितायाम्—

कृतकृत्यस्य तृप्तस्य मम किं क्रियते नरैः।

बहिर्वाऽभ्यन्तरे वाऽथ मया भावो हि गृह्यते। इति।

भावलक्षणञ्च तत्रैवोक्तम्—

भाव आत्मा क्रिया देहो मम धर्मः सनातनः।

मनसा कर्मणा वाचाऽप्यनपेक्ष्य फलं क्वचित्।

फलोद्देशेन देवेशि लघुर्मयि समाश्रयः।

फलार्थी तद्भावे मां परित्यक्तुं क्षमो यतः।

फलार्थिनोऽपि यस्यैव मयि चित्तं प्रतिष्ठितम्।

भावानुरूपफलदस्तस्याप्यहमनिन्दिते।

फलानपेक्षया येषाम्मनो मत्प्रवणं भवेत्।

प्रार्थयेच्च फलं पश्चात् भक्तास्तेऽपि मम प्रियाः।

प्राक्संस्कारवशादेव योऽविचिन्त्य फलाफले।

विवशा मां प्रपद्यन्ते मम प्रियतमा मताः।

मल्लाभान्नापरो लाभः तेषामस्ति यथा तथा।

ममापि लाभस्तल्लाभान्नापरः परमेश्वरि।

मदनुग्रहतस्तेषां भावो मयि समर्पितः

फलं परमनिर्वाणं प्रयच्छति बलादिव।

महात्मनामनन्यानां मयि विन्यस्तचेतसाम् ।
अष्टधा लक्षणं प्राहुर्मम धर्माधिकारिणाम् ।
मद्भक्तजनवात्सल्यं पूजायाश्चानुमोदनम् ।
स्वयमभ्यर्चनञ्चैव मदर्थे चांगचेष्टनम् ।
मत्कथाश्रवणञ्चैव स्वरनेत्राङ्गविक्रिया ।
ममानुस्मरणं नित्यं यश्च माञ्चोपजीवति ।
एतदष्टविधश्चिह्नं यस्मिन् म्लेच्छेऽपि वर्तते ।
स विप्रेन्द्रो मुनिः श्रीमान् स यतिः स च पण्डितः ।
न मे प्रियश्चतुर्वेदी मद्भक्तः श्वपचोऽपि यः ।
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ।

स्कान्दे शिवरात्रिमाहात्म्ये यमं प्रति शिवः-

शृणु धर्मं प्रवक्ष्यामि भक्तानां लक्षणं महत् ।
भस्मोद्धूलितसर्वाङ्गाः त्रिपुण्ड्राङ्कितमस्तकाः ।
रुद्राक्षमालाभरणाः शिवपूजापरायणाः ।
बाह्यलक्षणसंयुक्ताः पूज्याः सर्वे त्वया यम ।
प्रणवाभ्यासनिरताः त्रयीसारपरायणाः ।
शिवसूक्तजपासक्ताः शतरुद्रीयपाठकाः ।
आथर्वणीं शिखां ये च पठन्ति शिरसाश्रिताम्
पौरुषेयं पठेत् सूक्तं पावमानीश्च यः पठेत् ।
त्वरितं नीलरुद्रं वा शिवसङ्कल्पमेव वा ।
नमकञ्चमकञ्चापि ये पठन्ति द्विजातयः ।
महादेवादिनामानि येषामास्ये भवन्ति हि ।
मम प्रियतरा ह्येते पूज्याः सर्वे त्वयाऽनघ ।

त्रिकालमेककालं वा ये मां ध्यायन्ति शङ्करम् ।
नृत्यमानं त्रयीनेत्रं चन्द्रार्धकृतशेखरम् ।
उमामहेश्वरं देवं दक्षिणामूर्तिमेव वा ।
मृगटङ्कधरं देवं नीलकण्ठमथापि वा ।
पञ्चाननमयीं मूर्तिं हृदि ध्यायन्ति ये जनाः ।
मम पूज्यमा ह्येते यदि पापान्विता अपि । इति ।

आदित्यपुराणे त्रिषष्टितमाध्याये नारदं प्रति ब्रह्मवचनम्—
भवव्यालमुखस्थानां भीरूणां देहिनां मुने ।
तस्माद्विमोचकः श्रीमानुमापतिरिति श्रुतिः ।
भक्तिश्शिवे यदि भवेन्न कस्मात् कस्य चिद्भयम् ।
भवार्णवं तरन्त्येव प्रसादात् परमेष्ठिनः ।
स्वर्गार्थिनां मुमुक्षूणां ब्रह्मत्वमभिकाङ्क्षताम् ।
भ..रेव विरूपाक्षे नान्यः पन्था इति श्रुतिः ।
सदा मनीषिभिः कार्या भक्तिरेव हि नारद ।
सर्वमन्यत् परित्यज्य भक्तो भव भवे मुने ।
मुक्तो भविष्यसि क्षिप्रं तस्य शंभोरनुग्रहात् । इति ।

भावग्राह्यमनीडाख्यमिति श्रुतिः ।

भावाभावकरः—भावानां सर्वेषां अभावकरः । नाशकरः उपलक्षणमेतत् । सृष्टिस्थित्योरपि तदधीनत्वात् । तथा च सृष्टिस्थितिसंहारकर्तेत्यर्थः । भावाभावकरं शिवमिति श्रुतिः ।

भवः—भवत्यस्मात् सर्वमिदञ्जगदिति भवः । शिवधर्मे प्रथमाध्याये—
भवभक्तिपरा ये तु भवप्रणतचेतसः ।
भवसंस्मरणोद्युक्ता न ते दुःखस्य भाजनम् । इति ।

**महाभारते द्रोणपर्वणि** व्यासः—

**देवदेवस्त्वचिन्त्यात्मा अजय्यो विष्णुरव्ययः।**
**सर्वरूपं भवं ज्ञात्वा लिंगेऽर्चयति तं प्रभुम्।**
**तस्मिन्नत्यधिकां प्रीतिं करोति वृषभध्वजः।** इति।

**भूतम्**—अवितथस्वरूपं सदा एकरूपं नित्यनिर्वृत्तं नान्याधीनं ब्रह्मेत्यर्थः। उक्तञ्च **भाष्यकारैः**—इह तु भूतं ब्रह्म जिज्ञास्यं नित्यनिर्वृत्तत्वात्, न पुरुषव्यापारतन्त्रमिति। विवृतं **भामत्याम्**-भूतं-सत्यं, सदेकान्ततः, न कदाचिदसदित्यर्थ इति।

**तं विश्वरूपं भवभूतमीड्य**मिति श्रुतिः।

**भगेशः**। भगस्य-ऐश्वर्यादेः ईशः-स्वामी। **धर्मावहं पापनुदं भगेशं** इति श्रुतिः।

**भुवनेशः**—भुवनानां लोकानां ईशः। **विदाम देवं भुवनेशमीड्य**मिति श्रुतिः।

**अमृतबिन्दूपनिषदि**—

**भूतात्मा**—स्थावरजंगमानामात्मा, परमात्मेत्यर्थः। उक्तञ्च **श्रीविष्णुपुराणेऽपि**—

**सर्वभूतात्मके तात जगन्नाथे जगन्मये।**
**परमात्मनि गोविन्दे मित्रामित्रकथा कुतः।** इति।

**भूते भूते व्यवस्थितः** तस्मिन् तस्मिन् शरीरे, भूताभ्यासश्चतुर्विधशरीरसंग्रहार्थः, व्यवस्थितः-विविधं तत्र तत्र शरीरान्तःकरणादिसादृश्यमवलम्ब्य अवस्थितः-अवस्थानं प्राप्तः। तथा च परमात्मा एक एव सन् सर्वेष्वपि स्थावरजङ्गमशरीरेषु प्रत्यगात्मतया स्थावराद्युपाधिनाशेऽपि नित्यतया अवस्थित इत्येवमात्मानं सदा पश्येत्। तथा चोक्तं **भगवता**—

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति।** इति।

श्रुतिस्तु—**एक एव हि भूतात्मा भूते भूते व्यवस्थितः।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत्।** इति।

**तापनीयोपनिषदि**—

**भीषणः**—महावाक्यजन्यवृत्त्यारूढः सन् अज्ञानतत्कार्यभयंकरः । अथवा महास्फुरण-स्वभावत्वात् कदाचिदपि तमआदिकं न स्पृशतीति ।

**भद्रः**—मङ्गलस्वरूपः । परमानन्दानुभवरूपत्वात् ।

**एष एव भीषण एष एव भद्रः** इति श्रुतिः ।

**ईशावास्योपनिषदि**—

**मनसो जवीयः**—मनसःसंकल्पादिलक्षणात् जवीयः—जववत्तरम् । इह देहस्थस्य मनसः ब्रह्मलोकादिदूरसंकल्पनं क्षणमात्रादित्यतो मनो जविष्ठमिति लोकप्रसिद्धं, तस्मिन् मनसि ब्रह्मलोकादि द्रुतं गच्छति सति प्रथमप्राप्त इवात्मचैतन्याभासो गृह्यते, अतो मनसो जवीयः इति। **अनेजदेकं मनसो जवीयः** इति श्रुतिः।

**मनीषी**- मनस ईशिता, सर्वज्ञ ईश्वर इत्यर्थः। **कविर्मनीषी परिभूः स्वयंभू**रिति श्रुतिः।

**तलवकारोपनिषदि**—

**मनसोमनः**—मनसः- अन्तःकरणस्य मनः। न ह्यन्तःकरणं अन्तरेण चैतन्यज्योतिषो दीधितिं स्वविषयसंकल्पाध्यवसायादिसमर्थं स्यात्। तस्मात् मनसः संकल्पाध्यवसायादिसाम-र्थ्यरूपं चैतन्यमेव मनसो मन इत्युच्यते। **मनसो मनो यद्वाचो ह वाच** मिति श्रुतिः।

**काठकोपनिषदि**—

**मोदनीयम्**- हर्षणीयं, परमानन्दस्वरूपत्वात्। ननु आत्मनः परमानन्दस्वरूपत्वे किमिति सर्वैं र्नानुभूयते, प्रत्युत दुःखादिकमनुभूयते इति चेत्, वैराग्यादिपुरस्सरं चित्तवृत्तिनिरोधा भावादिति ब्रूमः। अत एवोक्तं **भाष्यकारैः**-

**यत्सौख्यांबुधिलेशलेशत इमे शक्रादयो निर्वृताः**
**यच्चित्ते नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः।**
**यस्मिन्नित्यसुखांबुधौ गलितधीः ब्रह्मैव न ब्रह्मवित्**
**यः कश्चित् स सुरेन्द्रवन्दितपदो नूनं मनीषा मम।** इति।

अन्यत्राप्युक्तम्—"बाह्यानन्दसाधनरहिता अपि अनीहा निरेषणा ब्राह्मणाः बाह्यरसला-भादिव सानन्दा दृश्यन्ते विद्वांसः, नूनं ब्रह्मैव रसस्तेषा"मिति।

**स मोदते मोदनीयं हि लब्ध्वे**ति श्रुतिः

**महतो महीयान्**-महतः परिमाणात् पृथिव्या यो महत्तरः। **अणोरणीयान्महतो महीयान्** इति श्रुतिः

**मदामदः**—सहर्षोऽहर्षश्च। सहर्षः निरतिशयस्वरूपत्वात्, अहर्षः स्वव्यतिरिक्त वस्त्वन्तराभावात्, अत एव मूर्तिमत्त्वाभावात् आकाररहित्यात् अशक्यज्ञान आत्मेत्युक्तं भवति। ननु तर्हि आत्मज्ञानार्थं यत्नो न कर्तव्य इति चेत्-सत्यम्-अनात्मतिरस्करणे एव यत्नः कर्तव्यः। तदुक्तं **भाष्यकारैः**- "तस्मादविद्याध्यारोपितनिराकरणमात्रं ब्रह्मणि कर्तव्यम्। न तु ब्रह्मज्ञाने यत्नः, अत्यन्तप्रसिद्धत्वात्। अविद्याकल्पितनामरूपविशेषाकारापहृतबुद्धीनां, अत्यन्तप्रसिद्धं सुविज्ञेयमासन्नतरमात्मभूतमपि अप्रसिद्धं दुर्विज्ञेयमतिदूरमन्य एव च प्रतिभाति। बाह्याकारनिवृत्तबुद्धीनान्तु लब्धगुर्वात्मप्रसादानां नातः परं सुख सुप्रसिद्धं सुविज्ञेयं स्वासन्नमस्ति-तथा चोक्तम्-प्रत्यक्षावगमंधर्म्यमित्यादि। केचित्तु पण्डितम्मन्याः- निराकारत्वादात्मवस्तु नोपैति बुद्धिः, अतो दुस्साध्या सम्यज्ञाननिष्ठेत्याहुः। सत्यमेवं गुरुप्रसादरहितानां अश्रुतवेदान्तानां अन्तर्बहिर्विषयासक्तबुद्धीनां सक्यक् प्रमाणेषु अकृतश्रमानां, तद्विपरीतानान्तु लौकिकग्राह्यग्राहकद्वैतवस्तुनि बुद्धिर्नितरां दुस्संपादा। आत्मचैतन्यव्यतिरेकेण वस्त्वन्तरस्यानुपलब्धेः। यथा चैतदेवमेव नान्यथा इत्यवोचाम। उक्तञ्च भगवता-**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः**। इति। तस्मात् बाह्याकारभेदबुद्धिनिवृत्तिरेव आत्मस्वरूपालम्बनकारणम्। न ह्यात्मा नाम कस्यचिदप्रसिद्धः प्राप्यो हेय उपादेयो भवति"।

श्रुतिस्तु-**कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति** इति।

**महान्**—परिपूर्णः—**महान्तं विभुमात्मान**मिति श्रुतिः।

**महतः परः**-महतः महत्तत्त्वात् बुद्ध्याख्यात् परः विलक्षणः नित्यविज्ञप्तिस्वरूपः। **अनाद्यनन्तं महतः परं ध्रुव**मिति श्रुतिः

**महद्भयम्** - बिभेत्यस्मादिति भयं महच्च तद्भयञ्च महद्भयम् अविदुषां भयहेतुत्वेऽपि विदुषामभयकारणं ब्रह्म। तदुक्तं श्रुत्या- "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति, यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति इति। उक्तञ्च **भाष्यकारैः** एतच्छ्रुतिविवरणावसरे-सर्वतो निर्भया ब्राह्मणा दृश्यन्ते सत्सु भयहेतुषु, तच्चायुक्तमसति भयत्राणे ब्रह्मणि, तस्मात्तेषामभयदर्शनादस्ति तदभयकारणं ब्रह्म" इति।

**महद्भयं वज्रमुद्यत**मिति श्रुतिः।

**मनसाऽभिक्लृप्तः**—मनसा-मननरूपेण सम्यग्दर्शनेन अभिक्लृप्तः—अभिसमर्थितः—अभिप्रकाशित इत्येतत्। **हृदा मनीषा मनसाऽभिक्लृप्तः** इति श्रुतिः।

**मुण्डकोपनिषदि**—

**महत्पदम्**—पद्यते सर्वेणेति पदं महच्च तत् पदं चेति महत्पदम्। **गुहाचरं नाम महत्पद**मिति श्रुतिः।

**मनोमयः**—मनोवृत्तिभिरेव विभाव्यत इति मनोमयः। **मनोमयः प्राणशरीरनेता** इति श्रुतिः।

**तैत्तरीयके**—

**महद्यशः**—महायशोहेतुः, तद्धेतुत्वात् ताच्छब्द्यम्। **तस्य नाम महद्यश** इति श्रुतिः।

**महादेवः**—

ध्यानादियोग्यविग्रहपरिग्रहादिक्रीडावन्तो देवाः, तेषां प्रशस्तो महादेवः। क्रियाशक्तिमधिष्ठाय योऽम्बिकया सह जगदनुगृह्णाति स महादेवः। अथवा यः सर्वान् भावान् परित्यज्य आत्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेव इति। अस्यायमर्थः—सर्वान् भावान्—सकलपदार्थान् परित्यज्य—समन्तात् त्यक्त्वा आत्मज्ञानयोगैश्वर्ये—अहं ब्रह्मास्मीत्यात्मज्ञानं तदेव योगैश्वर्यं तस्मिन् महति-प्रौढे निष्ठां लब्ध्वा परमानन्दरूपस्वात्मतत्त्वस्फूर्तिवशात् महीयते। अथवा सर्वान् भावान् परित्यज्य-बाह्यविषयासक्तिं परित्यज्य आत्मज्ञानयोगैश्वर्ये विषयीकृतः सन् योगिभिर्महीयते-पूज्यते, योगिनां यो वेदान्तमहावाक्यजन्यसाक्षात्कारः तस्य विषयो भवति। योगिभिः ज्ञानेन सर्वदा पूज्यत इत्यर्थः। **ज्ञानमेव शिवार्चनमिष्यते** इति स्मरणात्। अथवा महांश्चासौ देवश्च महादेवः। दीव्यत इति देवः स्वप्रकाशः। महान् कालदेशवस्तुकृतपरिच्छेदरहितः। नित्यपरिपूर्णसर्वचैतन्यस्वरूप इत्यर्थः। तदुक्तं **सूतसंहितायाम्**—

**नामतश्चार्थतश्चापि महादेवो यदि प्रभुः।**
**किञ्जहाति महाविद्वान किं गृह्णाति सुरर्षभाः।**
**ग्राह्यं वा शङ्करादन्यत् त्याज्यं वा यदि विद्यते।**
**महत्त्वं तस्य हीयेत स्वभावो न विभज्यते।**
**महत्वं नैव धर्मोऽस्य भेदाभावात् परात्मनः।**
**धर्मे धर्मित्ववार्ता च भेदे सति हि पद्यते।**

भेदोऽभेदस्तथा भेदाभेदः साक्षात् परात्मनः ।
नास्ति स्वात्मातिरेकेण स्वयमेवास्ति सर्वदा ।
ब्रह्मैव विद्यते साक्षाद्वस्तुतोऽवस्तुतोपि च ।
तथा सति शिवज्ञानी किं गृह्णाति जहाति किम् ।
मायया विद्यते सर्वमिति केचन मोहिताः ।
शिवरूपातिरेकेण नास्ति माया च वस्तुतः ।
मायया वा शिवादन्यद्विद्यते चेच्छिवस्य तु ।
महत्त्वं परमं साक्षाद्धीयते सुरपुङ्गवाः ।
महत्त्वस्य तु संकोचो नास्ति सम्यङ्निरूपणे ।
अस्ति चेदप्रमाणं स्याच्छ्रुतिस्सत्यार्थवादिनी ।
तस्मादस्ति महादेव एव साक्षात् स्वयम्प्रभः ।
आनन्दरूपः संपूर्णः न ततोऽन्यत्तु किञ्चन । इति ।

अस्यार्थः—महादेवशब्दार्थपर्यालोचनयाऽपि न विदुषां स्वस्मादन्यत् किञ्चिद्धेयमुपादेयं वा संभवतीत्याह-**नामत** इति । **महत्त्वं तस्येति ।** त्रिविधपरिच्छेदराहित्यं हि तस्य महत्त्वं, तच्च तस्मात् सर्वप्रत्यग्भूतात् परशिवादन्यस्मिन् हेयोपादेयवस्तुनि स्वीक्रियमाणे विहन्येतेत्यर्थः। इष्टापत्तिशङ्कां वारयति-**स्वभाव** इति । तद्धि परमं महत्त्वं परमेश्वरस्य स्वरूपं न च तद्विहन्तुं युज्यते, तस्यैव अभावप्रसङ्गादित्यर्थः । ननु महत्त्वं परमेश्वरस्य न स्वभावः, अपि तु तस्य धर्म इति नोक्तदोषापत्तिरित्याशङ्क्याह **महत्त्वन्नैवेति। भेदाभावादिति** । परमात्मनः एकमेवाद्वितीयमिति स्वगतसजातीयविजातीयभेदनिरासस्य श्रुत्या प्रतिपादितत्वादित्यर्थः । **धर्मधर्मित्वेति।** न हि स्वयमेव स्वस्य धर्मो भवति । धर्मधर्मिभावो नियमेन भेदसापेक्ष इति व्यापकभेदाभावात् तद्व्याप्यधर्मधर्मिभावोऽपि न संभवतीत्यर्थः। ननु कुतश्चिदप्यात्मनो भेदो नास्ति चेत् दृश्यप्रपञ्चतादात्म्यलक्षणोऽभेदः प्राप्नोतीति सविशेषत्वं ब्रह्मण इत्याशङ्क्याह-**भेद इति** । भेदवदभेदादेरप्याध्यासिकत्वात् आत्मस्वरूपव्यतिरेकेण सम्भवो नास्तीत्यर्थः । हेयोपादेयभेदप्रतिभासराहित्यं विदुषो निगमयति-**ब्रह्मैवेति।** अध्यस्तप्रपञ्चस्य सदसद्विलक्षणत्वेन वस्तुतोऽवस्तुतश्चाधिष्ठानात् ब्रह्मणः पृथगभावात् अद्वितीयं ब्रह्मैव सर्वतः प्रतिभातीति ज्ञानी किञ्जह्यात् किंवा उपाददीतेत्यर्थः।

**नास्ति मायेति**। प्रपञ्चवत् तत्कारणत्वेन परिकल्प्यमानमायाया अपि सदसद्विलक्षणत्वात् मायामयञ्जगदस्तीति विरुद्धाभिधानमित्यर्थः। **माययेति**। यदि मायायाः सत्त्वमंगीकृत्य तन्मयञ्जगदस्तीति स्वीक्रियेत तर्हि पूर्वोक्तं परशिवस्य त्रिविधपरिच्छेदराहित्यलक्षणमहत्त्वं भज्येतेत्यर्थः। **अस्तिचेदिति**। आकाशादीनामिव परशिवस्य महत्वमापेक्षिकञ्चेत् तर्हि सत्यं ज्ञानमनन्तं ब्रह्म एकमेवाद्वितीयमिति त्रिविधपरिच्छेदराहित्यप्रतिपादिका श्रुतिः अप्रमाणं स्यादित्यर्थः। प्रतिपादितमर्थं निगमयति-**तस्मादिति**। **आदित्यपुराणे** द्वितीयाध्याये मनुं प्रति सूर्यः—

**विश्वं तस्माद्धि संभूतं तस्मिंस्तिष्ठति शङ्करे।**
**लयमेष्यति तत्रैव क्रियते तच्च लीलया।**
**स एवात्मा महादेवः सर्वेषामेव देहिनाम्।**
**ज्ञानेन भक्तियुक्तेन ज्ञातव्यः परमेश्वरः।**
**न पश्यामि महादेवादधिकं देवतान्तरम्।**
**देवा अपि तमेवार्थं प्राहुः स्वायंभुवेऽन्तरे** इति। **महाभारते आरण्यपर्वणि**

तपस्यन्तमर्जुनं प्रति देवेन्द्रवचनम्—

**स्थिरोऽसि वत्स कल्याण जयोपायमिमं शृणु।**
**उपास्यतां महादेवो विश्वेशस्त्रिपुरान्तकः।**
**श्रीकण्ठो मेरुकोदण्डश्चण्डपापहरो हरः।**
**एतावताऽपि तपसा तीव्रेणातितरेण वा।**
**यथाऽपरोक्ष्यते शर्वस्तथा कुरु तपोऽर्जुन।**
**तस्य प्रसादतो लब्धो विजयश्शाश्वतो भवेत्।**
**समूलोन्मूलनसहो युष्मत्तादृशविद्विषाम्।**
**अविघ्नमस्तु ते विद्वन् माभैषीरचिरेण सः।**
**प्रसीदतु महादेवो देवदेवस्तथाऽर्जुन।** इति।

**आदित्यपुराणे** षष्टितमाध्याये—

**भवव्यालमुखस्थानां भीरूणां देहिनां मुने।**
**तस्माद्विमोचकस्तेषां महादेव इति श्रुतिः।** इति।

**स्कान्दे** मुनीन् प्रति ब्रह्मवचनम्—

एष देवो महादेवो विज्ञेयस्तु महेश्वरः ।
न तस्मात् परमं किञ्चित् पदं समधिगम्यते । इति ।

**स्कान्दे** सनत्कुमारं प्रति नन्दिकेश्वरवचनम्—

संहृत्य च क्रतून् सर्वान् गृहीत्वा व्रतमुत्तमम् ।
ध्यायन्ति ये महादेवं लीनास्तद्भावभाविताः ।
उत्तरेणार्यपन्थानं तेऽमृतत्वमवाप्नुयुः । इति ।

**तत्रैव** दधीचिं प्रति भार्गवः—

हे दधीचे महाभाग महादेवमुमापतिम् ।
संपूज्य पूज्यं ब्रह्माद्यैर्देवदेवं निरञ्जनम् ।
अवध्यो भव विप्रर्षे प्रसादात् त्र्यम्बकस्य तु । इति ।

**शिवरहस्ये** अष्टमाध्याये देवीं प्रति शिववचनम्—

तत्रैव विमलस्थाने दण्डपाणिरयं शुभे ।
पञ्चवत्सरिको बालस्तपश्चक्रे दृढव्रतः ।
पुरा हिमालये देवि नानाधातुविराजिते ।
तपस्तप्तमनेनैव महच्चिरतरं मुदा ।
रुद्राध्यायजपासक्तः शिवलिंगैकपूजकः ।
निमीलिताक्षो नियतो निस्सङ्गश्शिवचिन्तकः ।
एकेनैवांघ्रिणा स्थित्वा चक्रे घोरतरं तपः ।
सर्वोत्तमं वेदवेद्यं सर्वाधारं जगत्प्रभुम् ।
ध्यायन्नेव महादेवं गौरीरमणमव्ययम् । इति ।

**कूर्मपुराणे** पञ्चविंशाध्याये—

स तेन मुनिवर्येण व्याहृतो मधुसूदनः ।
तथैव तपसा देवो रुद्रमाराधयत् प्रभुः ।

भस्मोद्धूलितसर्वाङ्गो जटावल्कलसंयुतः ।
जजाप रुद्रमैशानं शिवैकगतमानसः ।
गते बहुतिथे काले सोमः सोमार्धभूषणः ।
अदृश्यत महादेवो व्योम्नि देव्या समागतः ।
किरीटिनं जटिनं साक्षमालं पिनाकिनं शूलिनं देवदेवम् ।
शार्दूलचर्मावृतसर्वगात्रं देव्या महादेवमसौ ददर्श ।
प्रभुं पुराणं पुरुषं पुरस्तात् सनातनं योगिनमीशितारम् ।
प्राणेश्वरं शुभ्रमनन्तरूपं देव्या महादेवमसौ ददर्श ।

कूर्मपुराणे अष्टमाध्याये ईश्वरगीतायाम्—

अणोरणीयान् महतो महीयान् महादेवः प्रोच्यते विश्वरूपः ।
एवं हि यो वेद गुहाशयं परं प्रभुं पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां पुरातनं स बुद्धिमान् बुद्धिमतीत्य तिष्ठति ।

तत्रैव दशमे—तस्मादनादिमध्यान्तं वस्त्वेकः परमश्शिवः ।
स ईश्वरो महादेवः तं विज्ञाय विमुच्यते । इति ।

ब्रह्माण्डपुराणे ब्रह्माणं प्रति सामवेदः—

येनेदं भ्राम्यते चक्रं यदाकाशान्तरं महत् ।
योगिभिर्विद्यते तत्त्वं महादेवः स शङ्करः । इति ।

लिङ्गपुराणे अष्टमाध्याये—

निर्मलं निष्कलं ब्रह्म सुशान्तं ज्ञानरूपिणम् ।
अलक्षणमनिर्देश्यमणोरल्पतरं शुभम् ।
निरालंबमतर्क्यञ्च विनाशोत्पत्तिवर्जितम् ।
कैवल्यञ्चैव निर्वाणं निश्श्रेयसमनूपमम् ।
अमृतञ्चाक्षरं ब्रह्मन् अपुनर्भवमद्भुतम् ।
महानन्दं परानन्दं योगानन्दमनामयम् ।

हेयोपादेयरहितं सूक्ष्मात् सूक्ष्मतरं शुभम्।
स्वसंवेद्यमवेद्यं तं शिवं ज्ञानमयं परम्।
अतीन्द्रियमनाभासं परं तत्त्वं परात्परम्।
सर्वोपाधिविनिर्मुक्तं ध्यानगम्यं विचारतः।
अद्वयं तमसश्चैव परस्तात् संस्थितं परम्।
मनसैव महादेवं हृत्पद्मे वाऽथ चिन्तयेत्। इति।

ब्रह्मोत्तरखण्डे—

तत्र देवैर्महादेवं सेव्यमानं सनातनम्।
गणेशैर्वीरभृङ्गीशनन्दिचण्डेश्वरादिभिः।
उपास्यमानं विश्वेशं विद्युत्पुञ्जनिभप्रभम्।
त्रिलोचनं पञ्चमुखं नीलग्रीवं सदाशिवम्।
वामांगे बिभ्रतं गौरीं विद्युत्पुञ्जनिभप्रभाम्। इति।

वायवीयसंहितायां सप्तदशाध्याये दक्षं प्रति दधीचिः—

कथं देवादिदेवेशः कर्मसाक्षी सनातनः।
विश्वेश्वरो महादेवः त्वया दक्ष न पूज्यते।
अन्तर्यामी स विश्वेशः सर्वेषामेव देहिनाम्।
भोक्ता हि सर्वयज्ञानां शङ्करः परमार्थतः।
एते च मुनयः सर्वे तव साहाय्यकारिणः।
न जानन्ति परं भावं महादेवस्य शूलिनः। इति।

पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि इति श्रुतिः।

महिमा—महत्त्वं निरतिशयैश्वर्यरूपम्। भावभवित्रोरभेदविवक्षया महानित्यर्थः धातुः प्रसादान्महिमानमीशम् इति श्रुतिः।

महर्षिः—महाद्रष्टा। सर्वार्थसाधनदृष्टिः। सर्वज्ञ इत्यर्थः। विश्वाधिको रुद्रो महर्षिरिति श्रुतिः।

**महेश्वरः**—महांश्चासावीश्वरश्च महेश्वरः । पूजनार्थं महत्त्वविशेषणं, नाऽपेश्वरत्व निवृत्यर्थं, पदश्रुत्यैव निरतिशयैश्वर्यवति तस्य वृत्तेः । सन्महदित्यादिना समासः । आन्महदित्यादिना आत्वम् । एवञ्च स एव सर्वदा प्रत्यगात्मत्वेन उपास्यो मोक्षार्थिभिः । स एव च जगतः सृष्टिस्थितिसंहारकारणभूतः ।

उक्तञ्च **भाष्यकारैः**—सर्वज्ञस्सर्वेश्वरो जगत उत्पत्तिकारणं मृत्सुवर्णादिवत् घटरुचकादीनाम् । उत्पन्नस्य जगतो नियन्तृत्वेन स्थितिकारणं मायावीव मायायाः । प्रसारितस्य च जगतः पुनः स्वात्मन्येव उपसंहारकारणमवनिरिव चतुर्विधभूतग्रामस्य । स एव च सर्वेषां न आत्मेत्येतद्वेदान्तवाक्यसमन्वयप्रतिपादनेन प्रतिपादितमिति ।

**आदित्यपुराणे** द्वितीयाध्याये वेदाः—

**यं प्रपश्यन्ति विद्वांसो योगेन क्षालिताशयाः ।**
**नियम्य करणग्रामं स एवातो महेश्वरः ।** इति ।

**महाभारते** आनुशासनिके षट्चत्वारिंशाध्याये श्रीकृष्णं प्रत्युपमन्युः—

**अथापश्यं स्थितं तात भगवन्तं महेश्वरम् ।**
**सौरभेयगतं सौम्यं विधूममिव पावकम् ।**
**प्रशान्तमनसं देवं त्रिशंकुमपराजितम् ।**
**चारुसर्वाङ्ग्या देव्या पार्वत्या परमेश्वरम्**
**नीलकण्ठं महात्मानं हर्यक्षं तेजसान्निधिम् ।**
**अष्टादशभुजोपेतं सर्वाभरणभूषितम् ।**
**शुक्लाम्बरधरं देवं शुक्लमाल्यानुलेपनम् ।**
**शुक्लध्वजमनाधृष्यं शुक्लयज्ञोपवितिनम् ।**
**गायद्भिर्नृत्यमानैश्च उत्पतद्भिरितस्ततः ।**
**वृतश्च पार्षदैर्दिव्यैरात्मतुल्यपराक्रमैः ।**
**बालेन्दुकुमुदापाण्डुशरच्चन्द्रमिवोदितम् ।**
**त्रिभिर्नेत्रैः कृतोद्योतं त्रिभिस्सूर्यैरिवोदितैः ।**
**सर्वविद्याधिपं देवं शरच्चन्द्रसमप्रभम् ।**
**नयनाह्लादसौम्याङ्गमपश्यं परमेश्वरम् ।** इति ।

तस्मिन्नेव पर्वणि—यावच्छशाङ्कशकलामलबद्धमौलिः
न प्रीयते पशुपतिर्भगवान् महेशः ।
तावज्जरामरणजन्मशताभिघातैः
दुःखानि देहविहितानि समुद्वहामि । इति ।

आदित्यपुराणे
क्रमेण लभ्यतेऽन्येषां मुक्तिराराधनात् द्विज ।
आराधनान्महेशस्य तस्मिन् जन्मनि मुच्यते । इति ।

वायवीयसंहितायां चतुर्थाध्याये—
अणोरणीयान् महतो महीयानयमव्ययः ।
गुहायां निहितश्चापि जन्तोरस्य महेश्वरः ।
तमक्रतुः क्रतुप्राप्यमहिमातिशयान्वितम् ।
धातुः प्रसादादीशानं वीतशोकः प्रपश्यति ।
वेदाहमेतमजरं पुराणं सर्वगं प्रभुम् ।
निरोधं जन्मनो यस्य वदन्ति ब्रह्मवादिनः ।
एकोऽनेकानिमान् वर्णान् बहुधा शक्तियोगतः ।
विदधाति विचैतन्यं विश्वमादौ महेश्वरः । इति ।
एष एव परो देवो विश्वकर्मा महेश्वरः ।
हृदये सन्निविष्टं तं ज्ञात्वैवामृतमश्नुते । इति ।
द्वे अक्षरे ब्रह्म परे त्वनन्ते समुदाहृते ।
विद्याविद्ये समाख्याते निहिते यत्र गूढवत् ।
क्षरं त्वविद्या ह्यमृतं विद्येति परिकीर्त्यते ।
ते उभे ईशते यस्तु सोऽन्यः खलु महेश्वरः । इति ।

तत्रैव सप्तमाध्याये—
जगच्च कर्तृसापेक्षं सर्वं सावयवं यतः ।
तस्माच्छश्वत् स्वतन्त्रो यः सर्वशक्तिश्च सर्ववित् ।
अनादिनिधनश्चाथ महदैश्वर्यसंयुतः ।
स एव जगतः कर्ता महादेवो महेश्वरः । इति ।

**तत्रैव** अष्टाविंशाध्याये—

**त्रयोविंशतितत्त्वेभ्यः परा प्रकृतिरुच्यते।**
**प्रकृतेस्तु परं प्राहुः पुरुषं पञ्चविंशकम्।**
**यं वेदादौ स्वरं प्राहुर्वाच्यवाचकभावतः।**
**वेदैकवेद्ययाथार्थ्याद्वेदान्तेषु प्रतिष्ठितः।**
**स एव प्रकृतौ लीनो भर्ताऽयं प्रकृतेर्यतः।**
**तस्य प्रकृतिलीनस्य यः परः स महेश्वरः।**
**तदधीनप्रवृत्तत्वात् प्रकृतेः पुरुषस्य च।**
**अथवा त्रिगुणं तत्त्वं मायेदमिदमव्ययम्।**
**मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्।** इति।

**पाद्मपुराणे शिवगीतायां** द्वितीयाध्याये श्रीरामं प्रति अगस्त्यः-

**दुर्ज्ञेया शांभवी माया तया सम्मोह्यते जगत्।**
**मायां तु प्रकृतिं विद्धि मायिनन्तु महेश्वरम्।**
**तस्यावयवभूतेन व्याप्तं सर्वमिदञ्जगत्।**
**सत्यज्ञानात्मकोऽनन्तो विभुरात्मा महेश्वरः।**
**तस्यैवांशो जीवलोकः प्राणिनां हृदये स्थितः।**
**विस्फुलिङ्गा यथा वह्नेर्जायन्ते काष्ठयोगतः।**
**अनादिकर्मसंबन्धात् तद्वदंशा महेशितुः।**
**अनादिवासनायुक्ताः क्षेत्रज्ञा इति ते स्मृताः।** इति।

**तत्रैव** चतुर्थाध्याये सूतः—

**एवमुक्त्वा मुनिश्रेष्ठे गते तस्मिन्निजाश्रमं।**
**अथ रामगिरौ रामः पुण्ये गोदावरीतटे।**
**शिवलिंगं प्रतिष्ठाप्य कृत्वा दीक्षां यथाविधि।**
**भूतिभूषितसर्वांगो रुद्राक्षाभरणान्वितः।**
**अभिषिच्य जलैः पुण्यैः गौतमीसिन्धुसम्भवैः।**
**अर्चयित्वा वन्यपुष्पैः तद्वदन्यफलैरपि।**

भस्मच्छन्नो भस्मशायी व्याघ्रचर्मासने स्थितः ।
नाम्नां सहस्रं प्रजपन्नक्तन्दिवमनन्यधीः ।
मासमेकं फलाहारो मासं पर्णाशनस्थितः ।
मासमेकञ्जलाहारो मासञ्च पवनाशनः ।
शान्तो दान्तः प्रसन्नात्मा ध्यायन्नेव महेश्वरम् ।
हृत्पङ्कजे समासीनमुमादेहार्धधारिणम् ।
चतुर्भुजं त्रिणयनं विद्युत्पिङ्गजटाधरम् ।
कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
सर्वाभरणसंयुक्तं नागयज्ञोपवीतिनम् ।
व्याघ्रचर्माम्बरधरं वरदाभयधारिणम् ।
व्याघ्रचर्मोत्तरीयञ्च सुरासुरनमस्कृतम् ।
पञ्चवक्त्रश्चन्द्रमौलिं त्रिशूलडमरूधरम् ।
नित्यञ्च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् । इति ।

**स्कान्दे** सनत्कुमारसंहितायां कालिकाखण्डे अष्टचत्वारिंशाध्याये व्यासं प्रति विष्णुः—
यज्ञकर्ता च देवेन्द्रस्सृष्टिकर्ता च वाक्पतिः ।
अहमेव जगत्कर्ता मम कर्ता महेश्वरः ।
तस्य देवाधिदेवस्य कर्ता कोऽपि न विद्यते । इति ।

**ब्रह्माण्डपुराणे** ब्रह्माणं प्रति ऋग्वेदः—
यस्यान्तःस्थानि भूतानि यस्मात् सर्वं प्रवर्तते ।
यमाहुस्तत्परं तत्त्वं स देवः स्यान्महेश्वरः । इति ।

**ब्रह्माण्डपुराणे** उत्तरभागे हयग्रीवागस्त्यसंवादे नवमाध्याये वीरभद्रं प्रति विष्णुः-
यादृगाज्ञा महेशस्य तादृगेव ममापि सा ।
नावयोर्विद्यते भेदः पुराणेष्वागमेषु वा ।
अहं शक्तिश्शक्तिमान् स विश्वव्यापी महेश्वरः ।
शक्तिशक्तिमदोर्भेदं को जनः प्रतिपद्यते ।
वह्नेश्च दाहिकायाश्च भेदः केन समीक्ष्यते ।
आद्या शक्तिर्महेशस्य चतुर्धा भिन्नविग्रहा ।

भोगे भवानीरूपा सा दुर्गारूपा च सङ्गरे।
कोपे च कालिकावेषा पुंरूपेच मदात्मिका।
तस्मान्मम च शंभोश्च अभेदमवधारय।
शंभोराज्ञा ममैवाज्ञा दक्षम्मर्दय निर्दयम्। इति।

**यः परः स महेश्वरः** इति श्रुतिः।

**महाज्ञेयः**—सर्वज्ञेयसमष्टिभूतः। यद्वा प्रशस्तो ज्ञेयः। अपवर्गहेतुत्वात्। **नारायणं महाज्ञेय**मिति श्रुतिः।

**मीढुष्टमः**—सेक्तृतमः, जगतां पिता। **मीढुष्टमाय तव्यसे** इति श्रुतिः।

**मनोन्मनः**—मनः - मन्ता जीवः, तस्य उन्मानयिता उद्बोधकः, चैतन्योद्दीपकः। **सर्वभूतदमनाय नमो मनोन्मनाय** इति श्रुतिः।

**छान्दोग्ये—**

**मध्येस्थाता**—मध्ये-स्वास्मन्येवावस्थाता। **एकल एव मध्ये स्थाते**ति श्रुतिः।

**बृहदारण्यके—**

**मन्तव्यः**—श्रुत्यनुमतया असंभावनादिनिरसनक्षमया युक्त्या सदा अनुसन्धेय इत्यर्थः।

उक्तञ्च वासिष्ठे—

शृणु तावदिदानीं त्वं वक्ष्यमाणमिदम्मया।
राघव ज्ञानविस्तारं बुद्धिसारान्तरान्तरम्।
युक्तियुक्तमुपादेयं वचनं बालकादपि।
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मजन्मना।
यैर्यैः काकुत्स्थ दृष्टान्तैस्त्वम्मयेहावबोध्यसे।
सर्वे सकारणास्ते हि प्राप्यं तु सदकारणम्।
न तु तार्किकतामेत्य नाशनीया प्रबुद्धता।
अनुभूत्यपलापान्तैरपवित्रैर्विकल्पितैः। इति।

बुद्धिसारान्तरान्तरं—बुद्धेः सारोऽन्तरे येषां तेषामन्तरं-हृदये वर्तमानमित्यर्थः। **भाष्यकारैरप्युक्तम्**—दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयतामिति।
**श्रोतव्यो मन्तव्य** इति श्रुतिः।

महद्भूतम्—महच्च तत् भूतश्च महद्भूतं, सर्वमहत्तरत्वादाकाशादिकारणत्वाच्च, भूतं त्रिष्वपि कालेषु, स्वरूपाव्यभिचारात् । 'इदम्महद्भूतमनन्तमपारम्' इति श्रुतिः ।

मतेर्मन्ता—मतेः मनोवृत्तेः मन्ता-प्रकाशयिता न मतेर्मन्तारं मन्वीथाः इति श्रुतिः

मनसितिष्ठन् - मनसोऽन्तरः—स्पष्टम् । श्रुतिरुक्तरूपैव ।

मन्ता—मनस्सन्निहितः, मनोव्यापारसाक्षी । अमतोमन्तेति श्रुतिः ।

मन्वानः—मनआद्युपाध्यभावेऽपि स्वयं मनआदिव्यापारप्रकाशनस्वभावः ।

मन्तुर्मतिः—नित्यचैतन्यस्वरूपः । मन्वानो वै तन्न मनुते । न हि मन्तुर्मतेर्विपरिलोपोविद्यते इति श्रुतिः ।

श्वेताश्वतरोपनिषदि—

महान् प्रभुः—बन्धमोक्षकारणत्वात् महान् प्रभुर्वै इति श्रुतिः ।

मायी—मायाधिष्ठाता । आदित्यपुराणे द्वितीयाध्याये मनुं प्रति आदित्यः—

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
भर्गाद्विश्व स्य भरणाद्विश्वयोनेरुमापतेः ।
तस्य ज्ञानमयी शक्तिरव्यया गिरिजा शिवा ।
तया सह महादेवः सृजत्येव निहन्ति च ।
आचक्षते तयोर्भेदं अज्ञानात्, परमार्थतः ।
अभेदश्शिवयोर्बन्धो वह्निदाहकयोरिव ।
माया सा परमा शक्तिरव्यया गिरिजा शिवा ।
मायी विश्वाधिको रुद्रस्तं ज्ञात्वा स मुनिर्भवेत् । इति ।

मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरमिति श्रुतिः ।

महात्मा—सर्वेषां प्रत्यगात्मा । एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये सन्निविष्टः । इति श्रुतिः ।

अथर्वशिरसि—

महाग्रासः—सर्वजगद्भक्षकः । स्वसत्ताचैतन्याभ्यां स्वाध्यस्तसर्वजगद्व्यापनेन स्वात्मतिरोधायकत्वात् । सद्धीदं सर्वं सत्सदिति चिद्धीदं सर्वं काशते काशते च इति श्रुतेः ।

महाग्रासाय वै नमो नमः इति श्रुतिः ।

तापनीयोपनिषदि—

**मनसो द्रष्टा। मनसस्साक्षी**—स्पष्टम्। श्रुतिस्तु **उक्तरूपा**।

**महाचैतन्यः**—परिपूर्णचिद्रूपः। **ततोऽविक्रियो महाचैतन्यः** इति श्रुतिः।

**मृत्युमृत्युः**—पूर्वमृत्युशब्देन मरणशीलं सर्वात्मकमज्ञानमुच्यते। तस्याज्ञानस्य तत्त्वमस्यादिवाक्यजन्यवृत्त्यारूढस्सन् संहरतीति मृत्युमृत्युः **एष एव मृत्युमृत्युरिति** श्रुतिः।

**महामायम्**—सर्वजगदुपादाननिमित्तभूतं सर्वात्मकं सर्वनियन्तृ सर्वपालयितृ सर्वोपसंहारकमेकमद्वितीयन्निष्क्रियन्निरवयवं शान्तं सर्वदोषरहितं परिपूर्णशिवमित्यर्थः। अत एवोक्तं **सूत्रकृता**—सर्वधर्मोपपत्तेश्चेति। विवृतश्च **भाष्यकारैः**—चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यस्मिन्नवधारिते वेदार्थे परैरुपक्षिप्तान्विलक्षणत्वादिदोषान् पर्यहार्षीदाचार्यः। इदानीं परपक्षप्रतिषेधप्रधानं प्रकरणमारीप्समानः स्वपक्षपरिग्रहप्रधानं प्रकरणमुपसंहरति। यस्मादस्मिन् ब्रह्मणि कारणे परिगृह्यमाणे प्रदर्शितेन प्रकारेण सर्वे कारणधर्मा उपपद्यन्ते सर्वज्ञं सर्वशक्ति महामायञ्च ब्रह्मेति, तस्मादनतिशङ्कनीयमिदमौपनिषदं दर्शनमिति।

भगवताप्युक्तम्—

**मया ततमिदं सर्वञ्जगदव्यक्तमूर्तिना।**
**मत्स्थानि सर्वभूतानि....पश्यमे योगमैश्वरम्।** इति।

**महाविभूतिः**—ब्रह्मादिस्तंबपर्यन्तचेतनरूपेण आकाशाद्यणुपर्यन्ताचेतनरूपेण सच्चिदानन्दपरिपूर्णरूपेण च स्थितं। **एतदेव ब्रह्मापि सर्वज्ञम्महामायम्महाविभूतीति** श्रुतिः।

**महः**—चित्तेजोरूपं सर्वदृश्यविनिर्मुक्तमित्युक्तं भवति।

उक्तञ्चाभियुक्तैः—

**उपशान्तजगज्जीवशिष्याचार्येश्वरभ्रमम्।**
**स्वतस्सिद्धमनाद्यन्तं परिपूर्णमहम्महः।** इति।

**मानम्**—सर्वसाधकप्रमाणरूपम्। तदुक्तं **भाष्यकारैः**—

**यद्भासा भास्यतेऽर्कादिर्भास्यैर्यत्तु न भास्यते।**
**येन सर्वमिदं भाति तद्ब्रह्मेत्यवधारयेत्।**
**स्वयमन्तर्बहिर्व्याप्य भासयन्नखिलञ्जगत्।**
**ब्रह्म प्रकाशते वह्निप्रतप्तायसपिण्डवत्।**

वासिष्ठेऽपि—मयैव चेतनेनेमे सर्वे घटपटादयः ।

सूर्यान्ता अवभासन्ते दीपेनेवात्मतेजसा । इति ।

<u>मुक्तम्</u>—पारवश्यरहितम् । अत एव शुद्धं बुद्धञ्च । तदुक्तं सूतसंहितायाम्—

नित्यशुद्धाय बुद्धाय मुक्ताय सुखरूपिणे ।

नमो वाचामतीताय मनोऽगम्याय ते नमः । इति ।

<u>महासत्</u>—अपरिच्छिन्नसद्रूपः

<u>महाचित्</u>—अपरिच्छिन्नचिद्रूपः ।

<u>महानन्दः</u>—अपरिच्छिन्नानन्दरूपः ।

<u>महाप्रभुः</u>—स्वसन्निधिसत्तामात्रेण सर्वप्रवर्तकस्वरूपः । महस्त्वान्मानत्वादित्यादि श्रुतिः ।

<u>मनआद्यविता । मनआदिसाक्षी ।</u> स्पष्टम् । मनआद्यवितारम्मनआदिसाक्षिणमन्विच्छेदिति श्रुतिः ।

इति श्रीमत्परमहंसपरिव्राजकाचार्याभिनवनारायणेन्द्रसरस्वतीपूज्यपादशिष्य श्रीमत्परमशिवेन्द्रसरस्वतीविरचिते वेदान्तनामरत्नसहस्रव्याख्याने

स्वरूपानुसन्धानाख्ये

द्वितीयः खण्डः

श्रीसाम्बसदाशिवाय नमः

श्रीगुरुभ्यो नमः

शुभमस्तु

ओम्

## ॥ तृतीयः खण्डः ॥

* न भाषन्ते तत्त्वं परममुपदिशन्तोऽपि च पितृ ष्वसुः
पुत्रान् दारान् प्रतिमपि शिष्यान्विदधने ।
तदस्मै सर्वस्मै स्फुटमुपदिशन्नेषवदन
द्वयानामेतेषान्नमयतिहि नारायणयतिः ॥

**केनोपनिषदि**—

**यक्षम्**—पूज्यम् । परमेश्वरस्य सर्वपूज्यत्वं प्रश्नोत्तराभ्यां **सूतसंहितायां** प्रपञ्चितम्—

**नैमिशीया** ऊचुः—

**भगवन् कस्सुरैस्सर्वैरसुरैः सिद्धकिन्नरैः ।**
**मुनिभिर्यक्षगन्धर्वैस्तथान्यैस्सर्वजन्तुभिः ।**
**मुक्त्यर्थञ्च विमुक्त्यर्थं पूज्यः पुण्यवतां वर ।**
**तमस्माकम्महाभाग ब्रूहि सर्वार्थवित्तम ।** इत्युपक्रम्य
**विष्णो विश्वजगन्नाथश्शङ्करः परमेश्वरः ।**
**सर्वसाक्षी महानन्दस्सर्वात्मत्वेन संस्थितः ।**
**स एव सर्वजन्तूनां आत्मा सर्वावभासकः ।**
**अस्य प्रसादलेशस्य कणलेशलवेन तु ।**
**इदं विष्णुपदं लब्धं त्वया नान्येन हेतुना ।**
**अन्येषामपि सर्वेषां पदमस्य प्रसादतः ।**
**अनेनेदञ्जगत्सर्वं विना न भवति स्वयम् ।**
**अयं धाता विधाता च सर्वदा सर्ववस्तुनः ।**
**यथा वैश्वानरेणोद्धमयो दहति भाति च**
**तथाऽनेन भवत्येतज्जगत्सर्वं विभाति च ।**
**अस्यानन्दस्य भूतानि लेशमन्यानि सर्वदा ।**

---

* अस्य पद्यस्य विशुद्धं स्वरूपं ग्रन्थान्तिमपृष्ठे द्रष्टव्यम्

लब्ध्वा सन्तोषमापन्नान्यतीव ब्रह्मवित्तमाः।
अस्यैवाज्ञालवाकृष्टञ्जगन्नित्यं प्रवर्तते।

इति तस्य स्वरूपमुक्त्वा—

आराधयादरेणैव सह दैवैरुमापतिम्। इत्यन्तेन तत्रैव विष्ण्वादि देवता पूजितत्वमप्युक्तम्।

ततो विश्वाधिकं रुद्रं महर्षिं सर्वसाक्षिणम्।
ब्रह्मविष्ण्वादयो देवाः पूजयामासुरादरात्।
तथा लक्ष्म्यादयो देव्यस्तथान्ये सर्वजन्तवः।
पूजयामासुरीशानं पुरुषं कृष्णपिङ्गलम्। इति।

तथा पराशरोपपुराणेऽपि—

जन्मना लब्धजातीनामाश्रमाणान्तथैव च।
प्राधान्येन महादेवः पूज्यो नान्योऽस्ति सिद्धये। इति।

तत्रैव—

रुद्रलिङ्गम्महाविष्णुः भक्त्या शुद्धं शिलामयम्।
चारु चित्रं समभ्यर्च्य लब्धवान् परमं पदम्।
सा च लक्ष्मीस्समाख्याता महाविष्णोस्तु वल्लभा।
यस्य लिंगं समभ्यर्च्य स पूज्यस्सर्वचैतनैः।
ब्रह्मा सर्वजगत्कर्ता यस्य लिंगार्चनेन तु।
भारतीं प्राप्तवाञ्छुभ्रस्स पूज्यस्सर्वचेतनैः।
यस्य लिंगं समभ्यर्च्य मरुतस्सकला अपि।
लब्धवन्तः क्रियां पूर्णां स पूज्यस्सर्वचैतनैः। इति।

एवं वासिष्ठलैङ्गेऽपि—

एवं संक्षोभिते....मुनयः संशितव्रताः।
परस्परं समालोक्य ब्रह्मलोकं समाययुः।

तस्मिन्दिव्यासनासीनं कोटिसूर्यसमप्रभम् ।
ब्रह्माणं मुनयो दृष्ट्वा स्तोत्रैः स्तुत्वाऽभिवन्द्य च ।
ज्ञापयाञ्चक्रिरे सर्वं मुनयो मुनिपुङ्गवाः ।
कश्चित् सभार्यश्शान्तात्मा नग्नो विकृतवेषधृत् ।
वर्णाश्रमविनिर्मुक्तो देवदारुवनं गतः ।
मोहयामास सौन्दर्याद्दूषयामास पुत्रकान् ।
दत्ताश्शापाः परन्धाम ते च शापाः पराहताः ।
आभिचारः कृतोऽस्माभिः सोऽपि देवपराहतः ।
अस्माभिर्मुष्टिभिर्दण्डैस्ताडितश्च परात्परः ।
स्वकीयं लिंगमुत्पाट्य त्यक्तकायो मुनीश्वर ।
तत्रैव भार्यया सार्धं क्षणादन्तर्हितोऽभवत् ।
उत्पाताश्चाभवन् देव वयं भीताश्च शङ्कया ।
कोऽयं सभार्यः पुरुषो देवदारुवनं गतः ।
भवन्तमेव शरणं प्रपन्ना वयमीश्वर ।
कारुण्यतस्त्वमस्माकं ब्रूहि सर्वज्ञ शाश्वत ।
एवं विज्ञापितो ब्रह्मा ध्यात्वा मां त्रिपुरान्तकम् ।
स्तोत्रैः स्तुत्वा पुनर्बुध्वा मुनिभ्यः प्रत्यभाषत ।
अहो महेश्वरः साक्षात् सर्वलोकैकनायकः ।
विष्णुना च भुवं प्राप्तो देवदारुवनं बुधाः ।
भाग्यहीना भवन्तो हि दृष्ट्वा विपरिमोहिताः ।
भवद्भिः किं कृतं कर्म भवद्भिः किं श्रुतं बुधाः ।
जन्मान्तरसहस्रेषु कृतं पुण्यफलं द्विजाः ।
अमुं विसृज्य मां प्राप्ता वृथाऽहो मोहवैभवः ।
यस्माज्जातं जगत्सर्वं यस्मिन्नेव विलीयते ।
तमागतं शिवं दृष्ट्वा कथं मूढैरुपेक्षितम् ।

वातादयो भयादस्य स्वकार्ये च निरन्तरम् ।
प्रवर्तन्ते स ईशानो हा भवद्भिरुपेक्षितः ।
यमासाद्य निवर्तन्ते विकल्पा मोहसम्भवाः ।
तस्याभिचारो मोहेन हा भवद्भिः कृतो द्विजाः ।
कामक्रोधमहालोभविषवेगस्य भेषजम् ।
आगतं वेदकान्तारात् हा भवद्भिरुपेक्षितम् ।
ध्यायन्ति योगिनो नित्यं हृदये विजितेन्द्रियाः ।
तमागतं समासाद्य हा भवद्भिरुपेक्षितम् ।
यस्तु सर्वजगत्साक्षी नित्यानन्दो निरञ्जनः ।
तमागतं स्वयं मूढै हा भवद्भिरुपेक्षितम् ।
एष ब्रह्मैष एवेन्द्र एष एव प्रजापतिः ।
एष धाता विधाता च सर्वात्मा सर्ववर्जितः ।
शिवरुद्रमहेशानशङ्करब्रह्मसंज्ञितः ।
अभिधानाभिधेयादिभावहीनो निरास्पदः ।
प्रत्यङ्मात्रः सदा स्वस्य भासा सर्वविभासकः ।
सर्ववस्तुतया साक्षात् स्वयमेव विजृंभितः ।
पञ्चकोशविनिर्मुक्तः श्रीमत्पञ्चाक्षरप्रियः ।
कृपया केवलं विप्रा अमूर्तो मूर्तिमाश्रितः ।
देवदारुवनं प्राप्तो विष्णुना विश्वयोनिना ।
तमेव मुक्तिदं बुध्वा व्रजध्वं शरणं बुधाः ।
इतः पूर्वं कृतं कर्म भवद्भिरखिलम्मुधा ।
लिङ्गार्चनं विना तेन मोहिता देवमायया ।
तस्माद्भवद्भिर्दृष्टं यल्लिंगं भूमौ निपातितम्
तल्लिंगसदृशं लिंगं कृत्वा श्रद्धापुरस्सरम् ।
योन्यां तच्च प्रतिष्ठाप्य पूजयध्वम्मुनीश्वराः । इति ।

व्यासस्मृतावपि—

ब्रह्माणं शङ्करं सूर्यं तथैव मधुसूदनम् ।
अन्यांश्चाभिमतान् देवान् पूजयेद्भक्तितो द्विजः ।

इति समुच्चयेन पूजामुक्त्वा अनन्तरं केवलशिवपूजामाह—

अपि वा देवमीशानं भगवन्तं सनातनम् ।
आराधयेन्महादेवमेव पूतो महेश्वरम् ।
मन्त्रेण रुद्रगायत्र्या प्रणवेनाथवा पुनः ।
ईशानेनाथवा रुद्रैस्त्र्यंबकेन समाहितः ।
पुष्पैःपत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम् ।
अथोन्नमश्शिवायेति मन्त्रेणानेन वाऽर्चयेत् ।
नमस्कुर्यान्महादेवमृतं सत्यमितीश्वरम् ।
निवेदयीत स्वात्मानं यो ब्रह्माणमितीरयन् ।
प्रदक्षिणं ततः कुर्यात्ततो ब्रह्माणि वै जपेत् ।
ध्यायेत्तमेवमीशानं व्योममध्यगतं शिवम् । इति ।

महाभारतेऽपि—

इष्टं दत्तमधीतञ्च यज्ञाश्च बहुदक्षिणाः ।
शिवलिंगप्रणामस्य कलान्नार्हति षोडशीम् । इति ।
जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः ।
आभ्यां लिङ्गेऽर्चितो देवस्त्वयार्चायां युगेयुगे । इति ।

तत्रैव द्रोणपर्वणि व्यासः—

देवदेवस्त्वचिन्त्यात्मा अजय्यो विष्णुरव्ययः ।
सर्वरूपं भवं ज्ञात्वा लिंगेऽर्चयति तं प्रभुम् । इति ।

आनुशासनिके इन्द्रं प्रति उपमन्युः—

यस्य ब्रह्मा च विष्णुश्च त्वञ्च शक्र सहामरैः ।
अर्चयध्वे सदा लिङ्गं तस्माच्छ्रेष्ठतरो हि सः । इति ।

काशीखण्डे एकपञ्चाशाध्याये आदित्यं प्रति विष्णुः—

त्रैलोक्यैश्वर्यसंप्राप्ति मया प्राप्ता सहस्रगो ।
शिवलिंगार्चनादेकात् सत्यं सत्यं पुनः पुनः । इति ।

स्कान्दे सनत्कुमारसंहितायां कालिकाखण्डे अष्टचत्वारिंशाध्याये व्यासं प्रति विष्णुः—

यज्ञकर्ता च देवेन्द्रः सृष्टिकर्ता च वाक्पतिः ।
अहमेव जगत्कर्ता मम कर्ता महेश्वरः ।
तस्य देवादिदेवस्य कर्ता कोऽपि न विद्यते ।
शिवस्य पूज्यते लिंगं सर्वैर्देवासुरैरपि ।
शिवेन पूजितः को वा वदन्तु प्रतिवादिनः ।
स्वनाम्ना ब्रह्मणा लिङ्गं मया कृष्णेश्वरम्मुने ।
सर्वापेक्षितसिद्ध्यर्थं वाराणस्यां प्रतिष्ठितम् ।
ओन्नमो वासुदेवाय शिवशास्त्रावतारिणे ।
शिवलिंगार्चनव्यग्रचेतसे शिवजन्मने ।
यथार्थवचसाऽनेन यो मां स्तौति प्रहर्षितः ।
तस्याहं सुलभो व्यास नान्यस्याब्दशतैरपि । इति ।

आदित्यपुराणे मानवीयसंहितायां द्विपञ्चाशाध्याये—

अपश्यत्तत्रमदनसूर्यकोटिमिवोदितम् ।
सहस्रशिरसं देवं सहस्रतनुमीश्वरम् ।
नीलकण्ठम्महाबाहुं कालकण्ठेन्दुशेखरम् ।
जगदुत्पत्तिसंहारस्थित्यनुग्रहकारकम् ।
शुद्धस्फटिकसङ्काशं विधूममिव पावकम् ।
उडुमूलार्चितन्देवं सूर्यमालाविभूषितम् ।
अनौपम्यमनावेश्यमप्रमेयमनाकुलम् ।
जगच्चक्षुं जगद्वाहुं जगद्बन्धुञ्जगन्मयम् ।

जगत्पादञ्जगच्छ्रोत्रं स्थूलं सूक्ष्मं परात्परम् ।
रुद्रं पशुपतिश्चोग्रं भीमं भर्गं भवद्दढम् ।
महादेवम्महेशानमष्टमूर्तिञ्जगत्पतिम् ।
व्यक्ताव्यक्तन्त्रिलोकेशं पूजितं तं सुरासुरैः । इति :

तत्रैव त्रिषष्टितमाध्याये परमेश्वरस्य पूज्यत्वमुक्तम्—

ब्रह्मा—

यस्य प्रसादलेशेन ब्रह्मत्वं प्राप्तवानहम् ।
विष्णुत्वपि विष्णुश्च स शिवः किन्न पूज्यते ।
शिवे दानं शिवे ध्यानं शिवे परमकं तपः ।
कुरुक्षेत्रे निवसतां यत्फल नैमिशे तथा ।
प्रयागे च प्रभासे च गंगासागरसङ्गमे ।
रुद्रकोटौ गयायाश्च सालग्रामस्थले परे ।
पुष्करे भारतीतीरे गोकर्णे मण्डलेश्वरे ।
तत्फलं दिवसेनैव भक्त्या पूजयतो भवेत् ।
नास्ति लिङ्गार्चनात्पुण्यमधिकं भुवनत्रये ।
लिंगेऽर्चितेऽखिलं विश्वं पूजितं स्यान्नसंशयः ।
मायया मोहितात्मानो न जानन्ति महेश्वरम् ।
अनुग्रहाद्भगवतो जानन्त्येव हि नारद ।
यः पूजितं शिवं दृष्ट्वा प्रणमेद्भक्तिभावितः ।
पौण्डरीकस्य यज्ञस्य फलं प्राप्नोति निश्चितम् ।
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
शिवलिंगे वसन्त्येव तानि सर्वाणि नारद ।
तस्माल्लिंगं सदा पूज्यं भक्तिभावेन नित्यशः ।
स स्नातस्सर्वतीर्थेषु सर्वस्मादधिकश्च सः ।

यस्तु लिङ्गार्चनं भक्त्या महेशस्य करोति वै ।
यस्तु लिङ्गार्चनं त्यक्त्वा देवानन्यान् प्रपूजयेत् ।
रत्नं विहाय मूढात्मा स तु काचमपेक्षते ।
चतुर्दश्यां तथाऽष्टम्यां पौर्णमास्यांतथैव च ।
अमयाश्चैव यो भक्त्या पूजयेदिन्दुशेखरम् ।
स स्नातःसर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः ।
शिवलोकमवाप्नोति देहान्ते दुर्लभम्मुने ।
शिवार्चनरतो नित्यम्महापातकसम्भवैः ।
दोषैःकृतै र्न लिप्येत पद्मपत्रमिवांभसा ।
दर्शनाच्छिवभक्तानां सकृत्संभाषणादपि ।
अतिरात्रस्य यज्ञस्य फलं भवति नारद । इति ।

तत्रैव—

बिल्पत्रैरखण्डैस्तु पूजयेदिन्दुशेखरम् ।
भक्ष्य बिल्वदलम्मौनी हरनाम जपन्निशि ।
सर्वपापविनिर्मुक्तो याति शैवं परं पदम् ।
शुष्कैः पर्युषितैः पत्रैरपि बिल्वस्य नारद ।
पूजयेद्गिरिजानाथम्मुच्यते सर्वपातकैः । इति

शिवरहस्ये सप्तमांशे षष्ठाध्याये-

पुरा ब्रह्मादिभिस्सार्धं विष्णुः काशीदिदृक्षया ।
समाययौ ततो दृष्ट्वा दूरात् काशीं मनोहराम् ।
प्रणम्य दण्डवद्भूमौ भूयोभूयःकृताञ्जलिः ।
अवाप परमानन्दं दृष्टा काशीति सादरम् ।
इदमक्षियुगं धन्यं पुण्डरीकनिभम्मम ।
यतश्शिवस्वरूपेयं काशी दृष्टा मयाऽधुना ।
रक्तपङ्कजसङ्काशमिदं धन्यं करद्वयम् ।

येन काशी मया पूज्या महेशस्यापरा तनुः ।
इदं धन्यं शरीरं मे येन काशी शिवात्मिका ।
आलिंगनीया यत्नेन सर्वपापपनोदिनी ।
धन्योऽस्म्यहं प्रसीदोऽस्मि भाग्यवानस्मि सर्वथा ।
यतश्शिवस्वरूपेयं काशी संप्राप्यते मया ।
मदन्यो भाग्यवान् लोके नास्ति नास्त्येव सर्वथा ।
यतो मोक्षप्रदा विद्या काशी संप्राप्यते मया ।
कृतार्थोस्मि कृतार्थोस्मि कृतार्थोस्मि न संशयः ।
यतस्सांबमयी काशी प्राप्यते पुण्यसंश्रयात् ।
महद्भाग्यंमहद्भाग्यम्महद्भाग्यम्ममाधुना ।
यतो मया शिवाकारा काशी संप्राप्यते शिवा ।
सकृत्काशीति नामैव स्मृत्वा पातकिनः पुरा ।
शिवसायुज्यमापन्नास्सा काशी दृश्यते मया ।
यस्यां सर्वेश्वरश्शम्भु
ज्योतीरूपं सनातनम् ।
निवसत्यनिशं श्रेष्ठं सा काशी दृश्यते मया ।
यस्यां भागीरथी नित्यं ज्ञानवारिमनोहरा ।
तिष्ठत्यमलकल्लोला सा काशी दृश्यते मया ।
यस्यां पूर्णेन्दुवदना परमान्नप्रदायिनी ।
अन्नपूर्णा स्थितिश्चक्रे सा काशी दृश्यते मया ।
यस्यां तिष्ठति डुण्डीशः सर्वेष्टफलदायकः ।
सर्वविघ्नहरो नित्यं सा काशी दृश्यते मया ।
यस्यां शिवरतो नित्यं दण्डपाणि शिवप्रियः ।
तिष्ठत्यतीव सन्तुष्टः सा काशी दृश्यते मया ।

यस्यां विश्वेश्वरः श्रीमानतीव करुणानिधिः।
चकार वसतिं नित्यं सा काशी दृश्यते मया।
यस्यां तिष्ठति देवेन्द्रस्सदा पशुपतीश्वरः।
पशुपाशविमोक्षाय सा काशी दृश्यते ममा।
यस्यां तिष्ठति सर्वेषां शासकः कालभैरवः।
भक्तकारुण्यतः श्रीमान् सा काशी दृश्यते मया।
यस्यां त्यक्ततनुर्मर्त्यश्शैवश्शिवपरायणः।
शिवाकारमवाप्नोति सा काशी दृश्यते मया।
यस्यां मोक्षार्थिनश्शैवा निराहाराश्शिवार्चकाः।
निवसन्त्यनिशं शुद्धाः सा काशी दृश्यते मया।
यस्यां आत्ययिकं कर्म कृत्वा तिष्ठन्ति सादरम्।
पापशैलविहीनाश्च सा काशी दृश्यते मया।
यस्याः प्रभावं वेदाश्च न जानन्त्येव सर्वथा।
किमुतान्यपुराणानि सा काशी दृश्यते मया।
यया तुलयितुं वस्तु नास्ति ब्रह्माण्डगोलके।
सर्वार्तिनाशिनी धन्या सा काशी दृश्यते मया।
एवं वदन् ययौ विष्णुः काशीनिकटमादरात्।
ततश्चक्रे प्रणामानि दण्डवत् स पुनः पुनः।
ततो नानाविधैः पुष्पैर्दिव्यगन्धैर्मनोहरैः।
नानाविधोपचारैश्च काशीपूजाञ्चकार सः।
ततो नानाविधान् क्रूरान् काशीसंरक्षकान् गणान्।
संपूज्य तदनुज्ञातः काशीं सोऽविशदंबिके।
ततस्स शिवगंगायां यथाशास्त्रं यथाक्रमम्।
स्नानं कृत्वा प्रयत्नेन चकारोद्धूलनं ततः।

त्रिपुण्ड्रधारणं कृत्वा मन्त्रपूतेन भस्मना।
रुद्राक्षधारणञ्चक्रे सर्वपातकनाशनम्।
अग्नीध्रेश्वरमाराध्य पूजाद्रव्येण सादरम्।
संपूज्य नत्वा विविधैः स्तोत्रैः स्तुत्वा सदाशिवम्।
ततस्तदाज्ञया विष्णुर्वक्रतुण्डमुपागतः। इति।

तत्रैवाध्याये भानुविष्ण्वोः प्रश्नोत्तराभ्यां परमशिवस्य पूज्यत्वमुक्तम्—

भानुरुवाच—जनार्दन तपोनिष्ठ सर्वदा सर्वदेहिभिः।
कः पूजनीयो यत्नेन को वा देवोत्तमः परः।
देवानां ब्राह्मणानाञ्च को वा पूज्यो विशेषतः।
सर्ववेदेषु विख्यातस्सर्वदैवैरतु कः स्तुतः।
कः स्मर्तव्यो मुक्तिकामैः को वा जप्यो मनुः सदा।
एतत् सर्वमशेषेण वक्तुमर्हसि सादरम्।

विष्णुरुवाच—देवोत्तमो महादेवः पूजनीयः प्रयत्नतः।
स एव सर्वदेवेशस्स एव जगदीश्वरः।
न तस्मादधिको देवस्स एवाखिलपुङ्गवः।
वेदवेदान्तसंवेद्यः स एव श्रुतिसंश्रुतः।
स एव सर्वलोकानां मोक्षदो मुक्तिनायकः।
स एव सर्वभावेन पूजनीयो द्विजामरैः।
जगदुत्पद्यते तस्मात् तस्मिन्नेव प्रलीयते।
तस्यैश्वर्याण्यनन्तानि स एव परमेश्वरः।
शङ्करादधिको देवो नास्ति न श्रूयतेऽपि च।
शङ्करस्सर्वदेवानामधिकः शङ्करो ध्रुवम्।
पुनः पुनर्विचार्यैव वेदशास्त्राणि तत्त्वतः।
शिव एव सदा पूज्य इति पूर्वं विनिश्चितम्।

सत्यं सत्यं पुनस्सत्यं सत्यमेवोच्यते मया ।
शिव एव सदा सेव्यश्शिवस्सेव्यो न संशयः ।
शिव एव सदा पूज्यःस्मर्तव्यश्शिव एव हि ।
शिव एव सदा ध्येयो मुक्तिरूपफलेप्सुभिः ।
शिवान्यो मुक्तिदो नास्ति शिव एव ततो जनैः ।
संप्राप्यस्सर्वभावेन यत्नैश्च विविधैनयैः ।
देवैरपि शिवो ध्येयो न ज्ञातस्तत्वतोऽनघैः
स एव सर्वदा पूज्यो ध्येयःस्मर्तव्य एव च ।
शिवो धनं शिवस्त्राता शिवो बन्धुः शिवः पिता ।
शिवः प्रभुश्शिवो दाता शिवान्नास्त्यधिकः परः ।
शिवलिङ्गम्मयापूर्वमर्चितं बहुसाधनैः ।
इदानीमपि पश्यैतल्लिंगं संपूज्यते मया ।
लिंगार्चनजपुण्येन काशी संप्राप्यते मया ।
नो चेच्छिवस्वरूपेयं काशी संप्राप्यते कथम् ।
शिवलिंगं बिल्वपत्रैः कोमलैरमलैश्शुभैः ।
नियतं पूजयेद्यस्तु स धन्यः पुरुषर्षभः ।
अभिषिच्य महादेवं लिब्धा तु स्नपनोदकम् ।
पिबेत् सर्वार्थसिद्ध्यर्थं सर्वपापौघशान्तये ।
लिंगपूजैव कर्तव्या मुमुक्षुभिरहर्निशम् ।
बहवो मोक्षमापन्नाश्शिवलिंगस्य पूजया ।
देवैर्नरैश्च गन्धर्वैर्मुनिभिश्च मुमुक्षुभिः ।
अप्रमादेन कर्तव्या लिंगपूजैव सर्वदा ।
ऊर्ध्वाय नम इत्यादिमन्त्रैर्लिंगस्य पूजनम् ।
कर्तव्यन्नियतं विप्रैर्देवैश्च शिवतत्परैः ।

शिवस्य सन्निधिर्लिंगे सर्वकालेषु सर्वदा ।
तिष्ठत्यतो लिङ्गपूजा कर्तव्या सततं बुधैः ।
वेदोक्तलिङ्गपूजैव कर्तव्या नियतं जनैः ।
वेदमार्गगतैश्शुद्धैर्मोक्षरूपफलेप्सुभिः ।
शिवलिंगमनभ्यर्च्य यो भुङ्क्ते मोहसंगतः ।
स याति नरकं घोरं यावदाचन्द्रतारकम् । इति ।

तत्रैव सप्तदशाध्याये शेषशैवसंवादे परशिवस्यैव पूज्यत्वमवगतम्—

शेषः— कुतस्समागतः श्रीमन् देवः कः पूज्यते त्वया ।
सर्वदेवोत्तमः को वा तत्सर्वं वद सादरम् ।

शैवः— काशीति नगरी काचित् सर्ववेदेषु विश्रुता ।
ततस्समागतो नित्यं मया संपूज्यते शिवः ।
यं न देवा विजानन्ति स शिवः स्मर्यते मया ।
यस्यान्तं न विदुर्देवा ब्रह्मविष्ण्वादयः सुराः ।
तस्यैव शङ्करस्यापि लिङ्गं संपूज्यते मया ।
यल्लिंगपूजनं नित्यं सर्ववेदेषु विश्रुतम् ।
यन्मोक्षदमनायासात् तदेव क्रियते मया ।
शिवोऽस्मत्कुलजैः सर्वैराबालैः पूज्यते सदा ।
शिवपूजां विहायांबु पीयते न कदाचन ।
नित्यमस्मत्कुलस्त्रीणां व्रतं हि शिवपूजनम् ।
शिवनामानि गायन्ति कलकण्ठाः स्त्रियः सदा ।
बालाः क्रीडनकालेऽपि लिंगं मृण्मयमुत्तमम् ।
कृत्वा बिल्वदलैश्शुद्धैः पूजां कुर्वन्ति सर्वदा ।
शिवायानर्पितं भोज्यं भुज्यते न कदाचन ।
शिवायानर्पितं वस्त्रं नवं न परिगृह्यते ।

शिवायानर्पितं दिव्यं पुष्पं चन्दनमेव च ।
नैवास्मदुपभोगार्थं क्रियतेऽस्मत्कुलोद्भवैः ।
उद्धूलनं त्रिपुण्ड्रञ्च तथा रुद्राक्षधारणम् ।
सर्वपापक्षयं नित्यं क्रियतेऽस्मत्कुलोद्भवैः ।
शिवमन्त्रं विहायान्यो मन्त्रो नैव हि जप्यते ।
सर्वैरस्मत्कुलोत्पन्नैश्शिवशास्त्रपरायणैः ।
शङ्करध्याननिरताः सर्वेऽप्यस्मत्कुलोद्भवाः ।
शिवान्यस्य न कुर्वन्ति गानं स्वप्नेऽपि सर्वदा ।
आबालवृद्धमप्यस्मत्कुलजैश्शिवदैवतैः ।
शिवनामान्यनामानि गृह्यन्ते न कदाचन ।
सर्वेऽप्यस्मत्कुलोत्पन्नाश्शिवनामैकजीविनः ।
शिवनामांकिता धन्याः शिवैकशरणास्सदा ।
शिवोऽस्माकं धनं बन्धुश्शिवोऽस्माकं प्रभुः पिता ।
शिवोऽस्माकं हिता माता शिवोऽस्माकं हि जीवनम् । इति ।

कौर्मे पुराणे षड्विंशाध्याये मार्कण्डेयं प्रति श्रीकृष्णवचनम्—

भवता कथितं सर्वं सत्यमेव न संशयः ।
तथापि देवमीशानं पूजयामि सनातनम् ।
न मे विप्रास्ति कर्तव्यं नानवाप्तं कथञ्चन ।
पूजयामि तथापीशं जानन्नपि परं शिवम् ।
न ते पश्यन्ति तं देवं तन्मायामोहिता जनाः ।
ततोऽहं स्वात्मनो मूलं ज्ञापयन् पूजयामि तम् ।
न च लिंगार्चनात् पुण्यं लोकेऽस्मिन् भीतिनाशनम् ।
सदा लिंगे हितायैषां लोकानां पूजये शिवम् ।
योऽहं तं लिंगमित्याहुर्वेदवादविदो जनाः ।

ततोऽहं देवमीशानं पूजयाम्यात्मनैव तु ।
तस्याहं परमा मूर्तिः तन्मयोऽहं न संशयः ।
एष देवो महादेवः सदा संसारभीरुभिः ।
ध्येयः पूज्यश्च वन्द्यश्च ज्ञेयो लिङ्गे महेश्वरः । इति ।

वायवीयसंहितायामुपरिभागे विंशाध्याये श्रीकृष्णं प्रति उपमन्युवचनम्—

वक्ष्याम्यतिरहस्यं ते शृणु कृष्ण वचो मम ।
वेदैश्शास्त्रैर्वेदविद्भिर्विचार्य सुविनिश्चितम् ।
ब्रह्मघ्नो वा सुरापो वा स्तेयी वा गुरुतल्पगः ।
मातृहा पितृहा वाऽपि वीरहा भ्रूणहाऽपि वा ।
संपूज्यामन्त्रकं भक्त्या शिवं परमकारणम् ।
तैस्तैः पापैः प्रमुच्येरन् वर्षैर्द्वादशभिः क्रमात् ।
तस्मात् सर्वप्रयत्नेन पतितोऽपि यजेच्छिवम् ।
भक्तश्चेन्नापरः कश्चिद्भिक्षाहारी जितेन्द्रियः ।
कृत्वाऽपि सुमहत् पापं भक्त्या पञ्चाक्षरेण तु ।
पूजयेद्यदि देवेशं तस्मात् पापात् प्रमुच्यते ।
भक्त्या पञ्चाक्षरेणैव यश्शिवं सकृदर्चयेत् ।
सोऽपि गच्छेच्छिवस्थानं शिवमन्त्रस्य गौरवात् ।
तस्मात्तपांसि यज्ञाश्च सर्वे सर्वस्वदक्षिणाः ।
शिवमूर्त्यर्चनस्यैते कोटयंशेनापि नो समाः ।
बद्धो वाऽप्यथ मुक्तो वा पाशात् पञ्चाक्षरेण तु ।
पूजयन् मुच्यते भक्त्या नात्र कार्या विचारणा ।
अरुद्रो वा सरुद्रो वा सूक्तेन शिवमर्चयेत् ।
यस्सकृत् पतितो वाऽपि मूढो वा मुच्यते नरः
षडक्षरेण वा नित्यं तथा पञ्चाक्षरेण वा ।

सब्रह्माङ्गेन वा तेन सहंसेन विमुच्यते ।
तस्मान्नित्यं शिवं भक्त्या मूलमन्त्रेण पूजयेत् ।
शिवभक्तो जितक्रोधो ह्यलब्धो लब्ध एव वा ।
अलब्धाल्लब्ध एवात्र विशिष्टो नात्र संशयः ।
तस्माल्लब्ध्वैव देवेशं मूलमन्त्रेण पूजयेत् ।
एककालं द्विकालं वा त्रिकालं नित्यमेव वा ।
येऽर्चयन्ति महादेवं विज्ञेयास्ते गणेश्वराः ।
जातेनात्मद्रुहा येन नार्चितो भगवाञ्छिवः ।
सुचिरं सञ्चरत्यस्मिन् संसारे दुःखसागरे ।
दुर्लभं प्राप्य मानुष्यं मूढो नार्चयते शिवम् ।
निष्फलं तस्य तज्जन्म मोक्षाय न भवेद्यतः ।
दुर्लभं प्राप्य मानुष्यं येऽर्चयन्ति पिनाकिनम् ।
तेषां हि सफलं जन्म कृतार्थास्ते नरोत्तमाः ।
भवभक्तिपरा ये च भवप्रणतचेतसः ।
भवसंस्मरणोद्युक्ता न ते दुःखस्य भाजनम् ।
भवनानि मनोज्ञानि विभ्रमाभरणाः स्त्रियः ।
धनं चादृष्टपर्यन्तं शिवपूजाविधेः फलम् ।
ये वाच्छन्ति महाभाग्यं राज्यञ्च त्रिदशालये ।
तेऽर्चयन्तु सदाकालं शिवस्य चरणांबुजम् ।
सौभाग्यं कान्तिमद्रूपं सत्यं त्यागः प्रवक्तृता ।
शौर्यञ्च जगति ख्यातिः शिवमर्चयतो भवेत् ।
तस्मात् सर्वप्रयत्नेन शिवैकगतमानसः ।
शिवपूजाविधिं कुर्याद्यदीच्छेत् सिद्धिमात्मनः ।
त्वरितं जीवितं याति त्वरितं याति यौवनम् ।
त्वरितं व्याधिरभ्येति तस्मात् पूज्यः पिनाकधृत् ।

यावन्नायाति मरणं यावन्नाक्रमते जरा ।
यावन्नेन्द्रियवैकल्यं तावत् पूज्योऽथ शङ्करः ।
न शिवार्चनतुल्योऽस्ति धर्मोऽन्यो भुवनत्रये ।
इति विज्ञाय यत्नेन पूजनीयः सदा शिवः । इति ।

अस्ति ब्रह्मगीतायां तलवकारोपनिषदि उपबृंहणे शिवमाहात्म्यप्रकटनपूर्वकं पूज्यत्वप्रतिपादकवचनम्—

पुरा सुराणां सर्वेषामसुराणां दुरात्मनाम्
महामोहेन संग्रामः संप्राप्तो दुर्निवारकः ।
असुरैः पीडिता देवा बलवद्भिः सुरा भृशम् ।
तान् दृष्ट्वा भगवानीशः सर्वज्ञः करुणाकरः ।
देवानां विजयं देवा असुराणां पराजयम् ।
ददौ तेन सुरैश्शीघ्रमसुराश्च पराजिताः ।
अविज्ञाय महादेववैभवं परिमोहिताः ।
वयं विजयमापन्ना असुराश्च पराजिताः ।
इत्यहम्मानसञ्छन्नास्सर्वे देवाः पुरातनाः ।
अतीव प्रीतिमापन्ना अभवन् सुरपुङ्गवाः ।
पुनर्विश्वाधिको रुद्रो भगवान् करुणानिधिः ।
स्वस्य दर्शयितुं तेषां दुर्ज्ञेयत्वं तथैव च ।
तेषां भ्रान्तिनिवृत्त्यर्थमपि साक्षान्महेश्वरः ।
आविर्बभूव सर्वज्ञो यक्षरूपेण हे सुराः ।
तं दृ्वा यक्षमत्यन्तविस्मयेन सहामराः ।
विचार्य सर्वे संभूय किमिदं यक्षमित्यपि ।
पुनरग्निं समाहूय देवास्सर्वे विमोहिताः ।

अब्रुवंस्त्वं विजानीहि किमेतद्यक्षमित्यपि ।
अग्निस्तथाकरोमीति प्रोच्य यक्षं गतोऽभवत् ।
यक्षरूपो महादेवः कोऽसीत्याहानलं प्रति ।
अग्नि र्वा अहमस्मीति यक्षं प्रत्याह सोऽपि च ।
सोऽपि प्रोवाच भगवांस्त्वयि किं वीर्यमित्यपि ।
इदं सर्वं दहेयं यदिदं भूम्याद्यवस्थितम् ।
इत्याहाग्निः तृणं तस्मै निधाय परमेश्वरः ।
एतद्दहेति भगवान् स्मयमानोऽभ्यभाषत ।
अग्निस्सर्वजवेनैव तद्दग्धुं तृणमास्तिकाः ।
अशक्तो लज्जया युक्तो भीतोऽगच्छत् सुरान् प्रति ।
मया तस्यैव विज्ञातुं न शक्यं वैभवं सुराः ।
वित्त यूयं महायासादित्याहाग्निः सुरान् प्रति ।
तच्छ्रुत्वा वायुमाहूय विजानीहीति चाब्रुवन् ।
सोऽपि गतश्च तथा तेन यक्षरूपेण शम्भुना ।
भृशं प्रतिहतो भूत्वा तथाऽगच्छत् सुरान् प्रति ।
पुनरिन्द्रः स्वयं मोहादहन्ताकञ्चुकावृतः ।
विज्ञातुं यक्षमगमत् स तत्रैव तिरोदधे ।
इन्द्रोऽतीव विषण्णस्तु महातापसमन्वितः ।
विद्यारूपामुमां देवीं ध्यात्वा कारुणिकोत्तमाम् ।
लौकिकैर्वैदिकैः स्तोत्रैः तुष्टाव परमेश्वरीम् ।
सा शिवा करुणामूर्तिर्जगन्माता त्रयीमयी ।
शिवाभिन्ना परानन्दा शङ्करस्यापि शङ्करी ।
स्वेच्छया हिमवत्पुत्री स्वभक्तजनवत्सला ।
महादेवस्य माहात्म्यं दुर्ज्ञेयं सर्वजन्तुभिः ।

इति दर्शयितुं देवी तत्रैवाविरभूत् स्वयम्।
तामाराध्य शिवामिन्द्रश्शोभमानान्तु सर्वतः।
उमां पर्वतराजेन्द्रकन्यकामाह वज्रभृत्।
किमेतद्यक्षमत्रैव प्रादुर्भूतं तिरोहितम्।
वक्तुमर्हसि देवेशि मम कारुणिकोत्तमे।
देवी परमकारुण्यात् ब्रह्म मे पतिरत्र तु।
प्रादुर्भूतं तिरोभूतमित्याहाशेषनायिका।
दुर्विज्ञेयो महादेवो विष्णोः साक्षादजस्य च।
अन्येषामपि देवानां तवापि मघवन् भृशम्।
प्रदर्शयितुमीशानो दुर्ज्ञेयत्वं स्वकं परम्।
आविर्भूतो न चान्येन कारणेन सुरोत्तम।
स एव सर्वदेवानां तवापि विजयप्रदः।
पराजयकरोऽन्येषां तमेव शरणं व्रज। इति।

ब्रह्म ह देवेभ्यो विजिग्ये इति प्रस्तुत्य किमिदं यक्षमित्यादिः श्रुतिः।

ब्रह्मोपनिषदि—

यज्ञोपवीतम्—परमात्मनस्तादात्म्यलक्षणसामीप्यमागतं जैवमेव कर्तृत्वादिरहितं वास्तवं रूपमित्यर्थः। इदं यज्ञोपवीतन्तु परमं यत् परायणमिति श्रुतिः।

श्वेताश्वतरोपनिषदि—

योनिः—कारणम्। कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिरिति श्रुतिः।

बृहज्जाबालोपनिषदि—

योगिध्येयं—योगिभिः यमनियमादिभिर्युक्तैर्योगिभिर्यतिभिश्च हृदयकमले सदा ध्येयम्। तदुक्तं सूतसंहितायाम्—

जय भस्मरतानान्तु पाशभङ्गपरायण।
जय हृत्पङ्कजे नित्यं यतिभिः पूज्यविग्रह। इति।

भस्मेति यमादेरुपलक्षणम्। किञ्च न केवलं योगिभिर्ध्येयः। किन्तु योगस्वरूपः। योगशब्दाभिहितसमाध्यभिव्यक्तानन्दस्वरूपः, योगिध्यातः सन् तत्फलप्रदाता च। तदप्युक्तं तत्रैव—

**योगिध्येयाय योगाय योगिनां पतये नमः।** इति।

अतिसूक्ष्मत्वादात्मनः योगं विना श्रवणादिसाधनानुष्ठाने यत्नवतोऽपि साक्षात्कारो न संभवति। तदुक्तं **विष्णुपुराणे**—

**यतन्तो न विदुर्नित्यं यत्स्वरूपमयोगिनः।**
**परमार्थमणोरूपं स्थूलात् स्थूलं नताः स्म तम्।** इति।

श्रोत्रादीन्द्रियाणां स्वस्वविषयनिरोधप्रवृत्तिपूर्वकं योगिभिरतिप्रयत्नेनात्मा चिन्तनीय इति तत्रैवोक्तम्—

**विषयेभ्यस्समाहृत्य सर्वाक्षाणि च योगिनः।**
**यमर्चयन्ति ध्यानेन सोऽर्च्यते वा कथम्मया।**
**हृदि संकल्प्य यद्रूपं ध्यानेनार्चन्ति योगिनः।**
**भावपुष्पादिभिर्नाथः सोऽर्च्यते वा कथं मया।** इति।

योगिन एव आत्मासाक्षात्कारो भवतीति **सूत्रकारैरपि** सूत्रितम् अपि संराधने प्रत्यक्षानुमानाभ्यामिति। विवृतश्च **भाष्यकारैः**—अपि चैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः। संराधनं भक्तिध्यानप्रणिधानाद्यनुष्ठानम्। कथं पुनरवगम्यते संराधनकाले पश्यन्तीति? प्रत्यक्षानुमानाभ्यां-श्रुतिस्मृतिभ्यामित्यर्थः। तथा च श्रुतिः—

**पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ्पश्यति नान्तरात्मन्।**
**कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्।** इति।
**ज्ञानप्रसादेन विशुद्धसत्वः ततस्तु तं पश्यते निष्कलं ध्मायमानः** इत्याद्या

**स्मृतिरपि**—**यं विनिद्रा जितश्वासाःसुन्तुष्टास्संयतेन्द्रियाः।**
**ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्।** इति

चैवमाद्या। योगात्मने इति योगगम्यात्मने इत्यर्थः। किञ्च योगिनां परमात्मविषयज्ञानादिक मेव कर्तव्यं न तु बाह्यपूजेति श्रीपराशरोपपुराणे उक्तम्—

अथ पूजाविधिं वक्ष्ये शिवस्य परमात्मनः।
सर्वकारणभूतस्य त्रिमूर्तीनां परस्य च।
परिपूर्णस्य रुद्रस्य जगतः कारणस्य च।
सच्चिदानन्दरूपस्य पूजा ज्ञानं हि केवलम्। इति।
प्रसादलभ्या सा पूजा पवित्रा पापनाशिनी।
परानन्दप्रदा पुंसां योगिनां सार्वकालिकी।
महती देवतापूजा सा सदा योगिनां खलु।
प्रमाता च प्रमाणञ्च प्रमेयं प्रमितिः परा।
चिदेवेति परिज्ञानं पूजैषा परमात्मनः।
विग्रहो देवदेवस्य विश्वमेतच्चराचरम्।
इति ज्ञानं परा पूजा शिवस्य महती हि सा।
योगिनामेव सा पूजा महती हि सुमङ्गला। इति च।

आदित्यपुराणेऽपि—

यं प्रपश्यन्ति विद्वांसो योगेन क्षालिताशयाः।
नियम्य करणग्रामं स एवातो महेश्वरः
ब्रह्मविष्ण्विन्द्रचन्द्राद्या यस्य देवस्य किङ्कराः।
यस्य प्रसादाज्जीवन्ति स देवः पार्वतीपतिः। इति।

तत्रैव द्वितीयाध्याये मनुं प्रति सूर्यवचनं।

न तस्मादधिकः कश्चिन्नज्यायान्न समः कुतः।
तेनेदमखिलं पूर्णं शङ्करेण महात्मना।
मुमुक्षुभिस्सदा ध्येयश्शिव एव शिवङ्करः।
सर्वमन्यत् परित्यज्य मुक्त एव विमुच्यते। इति।

पाद्मे शिवराघवसंवादे अष्टमाध्याये मृत्युः—

तथा करिष्ये देवेश नमस्ते शङ्कराव्यय।
त्रिपुरघ्न महेशान योगिहृत्पद्ममन्दिर।
त्रियंबक विरूपाक्ष सोम सोमार्धभूषण।
त्रेतानेत्र त्रयीनेत्र सोमसूर्याग्निलोचन।
नमस्ते देवतानाथ नमस्ते देवमूर्तये।
सर्वज्ञाय नमस्तुभ्यं पशूनां पतये नमः। इति।

स्कान्दे—भृग्वादयः सपत्नीकाः पुत्रपौत्रसमन्विताः।
वर्णाश्रमोक्तमाचारं पालयन्तो दिवानिशम्।
चत्वारिंशत्सहस्राणि सहस्रैस्सार्धमष्टभिः।
द्रष्टुकामा महादेवं योगिध्येयं सतां गतिम्।
सर्वज्ञं सर्वकर्तारमनेनैव हि चक्षुषा। इति।

ब्रह्माण्डपुराणे शचीं प्रति इन्द्रस्य वचनम्—

प्रिये पश्य विशालाक्षि धन्या त्वं सुभगेऽनघे।
धन्योऽहं देवि कल्याणि यत् पश्यामि जगत्पतिम्।
अयं धता विधाता च लोकानां प्रभुरव्ययः।
अनादिस्सर्वगश्शान्तः परः षड्विंशकः स्मृतः।
सर्वज्ञः सर्वयोगी च सर्वभूतैकनायकः।
सर्वभूतान्तरात्माऽयं साक्षी सर्वस्य सर्वदा।
यं विनिद्रा विनिश्वासाः शान्ता ध्यानपरायणाः।
धिया पश्यन्ति हृदये सोऽयमद्य समीक्ष्यताम्।
यं विदुर्योगतत्त्वज्ञा योगिनो यतमानसाः।
अरूपो रूपवान् भूत्वा सोऽयमायाति सर्वगः।
अहो विचित्रं देवस्य चेष्टितं परमेष्ठिनः।

देहिवद्दृश्यते देवः नीरूपः परमेश्वरः ।
यस्य प्रसादाद्भगवान् ब्रह्मा विष्णुश्च शाश्वतः ।
करोति लोकसन्धानं सोऽयमायाति शङ्करः ।
यस्य दासा सुरास्सर्वे हरिब्रह्मपुरस्सराः ।
यस्य क्रीडनकं विश्वं सोऽयमायाति शङ्करः ।
यं दृष्ट्वा न पुनर्जन्म लभते मानवो भुवि ।
सोऽयमायाति भगवान् शङ्करश्शशिभूषणः । इति ।

शैवे एकादशरुद्रसंहितायां व्याघ्रपादपतञ्जली—

जय भूतेश गौरीश जयाशेषमहेश्वर ।
जय भक्तपराधीन प्रमाणानामगोचर ।
कर्तृत्वमपि भोक्तृत्वं नाथ त्वयि न विद्यते ।
बुद्धौ त्वं प्रतिबिंबेन कर्ता भोक्ता च गीयसे ।
बहिरंगैर्यमोपेतैः प्रत्याहारादिभिः प्रभो ।
अन्तरंगैश्च योगैस्त्वमन्तस्सद्भिरुपास्यसे । इति ।

वायवीयसंहितायां देवीं प्रति शिववचनम्—

मदुक्तेनैव मार्गेण मय्यवस्थाप्य चेतसः ।
वृत्त्यन्तरनिरोधो यः स योग इति गीयते ।
अश्वमेधशताच्छ्रेष्ठं देवि चित्तप्रसादनम् ।
मुक्तिदश्च तथा ह्येतत् दुश्शकं विषयैषिणाम् ।
विजितेन्द्रियवर्गस्य यमेन नियमेन च ।
सर्वपापहरो योगो विरक्तस्यैव कथ्यते ।
वैराग्याज्जायते ज्ञानं ज्ञानाद्योगः प्रवर्तते ।
योगज्ञः पतितो वापि मुच्यते नात्र संशयः ।
सदा कार्या च सततमहिंसा ज्ञानसंग्रहः ।

सत्यमस्तेयमास्तिक्यं श्रद्धा चेन्द्रियनिग्रहः ।
अध्यापनञ्चाध्ययनं यजनं याजनं तथा ।
दानमीश्वरभावश्च सततं ज्ञानशीलता ।
य एवं वर्तते विप्रो ज्ञानयोगस्य सिद्धये ।
अचिरादेव विज्ञानं लब्ध्वा योगञ्च विन्दति ।
दग्ध्वा देहमिमं ज्ञानी क्षणाद्ध्यानाग्निनाऽर्चयेत् ।
मानसे मां त्वया साकं यः स योगीश्वरो मतः ।
प्रसादान्मम योगज्ञः कर्मबन्धं प्रहास्यति । इति ।

आदित्यपुराणे भानुः—

आत्मभूते महादेवे योगिध्येये सनातने ।
भक्तिमास्थाय परमां परं निर्वाणमाप्नुहि । इति ।

योगिध्येयं परमं पदमिति श्रुतिः

मुण्डकोपनिषदि—

रुक्मवर्णः—स्वयञ्ज्योतिःस्वभावः । यदा पश्यःपश्यते रुक्मवर्णमिति श्रुतिः ।

तैत्तरीये—

रसः—यदिदं पञ्चकोशान्तरे अपरोक्षतयाऽभासमानं सत्यं ज्ञानमनन्तं ब्रह्मेत्युदीरितलक्षणं ब्रह्म सोऽयं मधुरादिरसवत् सर्वदा प्रत्यग्दृष्टिभिर्योगिभिः साक्षात् अव्यवधानेनास्वादनीयत्वाद्रसः आत्मज्ञो हि अनाद्यन्तमेतमेवात्मानं निरतिशयानन्दरूपतया रसात्मकं स्वात्मनि साक्षात्कृत्य सर्वेषु देशेषु सर्वेष्वपि कालेषु सुखी भवति । एतद्व्यतिरिक्तमधुराद्यनित्यबाह्यरसलाभे तु क्वचित् कदाचिदेव सुखित्वं, अतो विद्वदनुभवबलादस्य रसात्मकत्वम् ।

तदुक्तं सूतसंहितायाम्—

यदिदं ब्रह्म पुच्छाख्यं सत्यज्ञानसुखाद्वयम् ।
स रसः सर्वदा साक्षाल्लब्ध्वा देही सनातनम् ।
सुखी भवति सर्वत्र नान्यथा सुरसत्तमाः ।

**असत्यस्मिन् परानन्दे स्वात्मभूतेऽखिलात्मनाम् ।**
**को जीवति नरो देवः को वा नित्यं विचेष्टते ।**
**तस्मात् सर्वात्मना चित्ते भासमानो रसो हरः ।**
**आनन्दयति दुःखाढ्यं जीवात्मानं कृपाबलात्** । इति ।

**भाष्यकारैरप्युक्तम्**—बाह्यानन्दसाधनरहिता अप्यनीहा निरेषणा ब्राह्मणा बाह्यरसलाभादिव सानन्दा एव दृश्यन्ते विद्वांसः नूनं ब्रह्मैव रसस्तेषामिति ।

**रसो वै सः** इति श्रुतिः ।

**रुद्रः**—रोदयति संहारकाले प्रजाः संहरन्निति रुद्रः । रोदेर्णिलुक्चेति रक्प्रत्ययः णिचो लुक्च । रुदं दुःखं दुःखहेतुं वा द्रावयति नाशयतीति वा रुद्रः । तदुक्तं **लैङ्गपुराणे**—

**रुद्दुखं दुःखहेतुं वा विद्रावयति नः प्रभुः ।**
**रुद्र इत्युच्यते तस्मात् शिवः परमकारणम्** । इति ।

रुत्या वेदरूपया धर्मादीन् द्रावयति बोधयति प्रापयति इति वा रुद्रः । रुत्या वाग्रूपया वाच्यं बोधयति प्रतिपादयतीति वा रुद्रः । रुतं शब्दं वेदात्मानं ब्रह्मणे कल्पादौ ददातीति वा रुद्रः । तथा च श्रुतिः ।

**यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै** इति ।

स्वात्मविद्याप्रदानेन संसारान्मोचयतीति वा रुद्रः । तदुक्तं **सूतसंहितायाम्**—

**स्वात्मविद्याप्रदानेन सदा संसारमोचकम् ।**
**रुद्रं परमकारुण्यात् सर्वप्राणिहिते रतम्** । इति ।

**पराशरोपपुराणेऽपि**—

**महदाद्यणुपर्यन्तमायाचित्रस्य सर्वदा ।**
**भित्तिभूताय रुद्राय नमस्संसारहारिणे ।**

**तत्रैवान्यत्र**— **रुद्रं विश्वाधिकं साक्षात् सर्वदा सर्वसाक्षिणम् ।**
**सर्वस्मादधिकश्चैव मनुते स तु शङ्करः** । इति ।

उत्तरत्रापि— नमो रुद्राय देवाय स्वतन्त्रायाखिलात्मने ।
प्रधानपुरुषेशाय जगत्सर्गादिहेतवे । इति ।

महाभारते द्रोणपर्वणि चतुश्चत्वारिंशाध्याये—

ततस्तद्वाचकं श्रुत्वा प्रत्युत्थाय कृताञ्जली ।
वासुदेवार्जुनौ शर्वं तुष्टुवतुरविह्वलौ ।
नमो भवाय शर्वाय रुद्राय वरदाय च ।
पशूनां पतये तुभ्यमुग्राय च कपर्दिने ।
कुमारगुरवे तुभ्यं नीलग्रीवाय वेधसे ।
विलोहिताय धूम्राय व्याधायानपराजिते ।
महादेवाय भीमाय त्र्यंबकाय शिवाय ते ।
ईशानाय मखघ्नाय नमोऽस्त्वन्तकघातिने ।
नित्यानलशिखण्डाय शूलिने दैत्यघातिने ।
हन्त्रे गोप्त्रे त्रिणेत्राय व्याधाय वसुरेतसे
अचिन्त्यायांबिकाभर्त्रे शिवाय परमात्मने ।
वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे ।
तपसि तप्यमानाय ब्रह्मण्यायामिताय च ।
विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते ।
नमो नमोऽस्तु सर्वेषां भूतानां प्रभवे नमः ।
अभिगम्याय गम्याय स्तुत्यायाच्यर्याय सर्वदा ।
ब्रह्मवक्त्राय कान्ताय शङ्कराय शिवाय च ।
नमोऽस्तु वाचस्पतये पत्तीनां पतये नमः ।
नमस्सहस्रशिरसे सहस्रभुजमन्यवे ।
सहस्रनेत्रपादाय नमोऽसंख्येयकर्मणे ।
नमो हिरण्यवर्णाय हिरण्यकवचाय च ।

नमोऽस्तु देवदेवाय महाभूतधराय च।

भक्तानुकंपिने तुभ्यं सिद्ध्यतां नौ परः प्रभो। इति।

तत्रैव आनुशासनिके षट्चत्वारिंशाध्याये युधिष्ठिरं प्रति श्रीकृष्णवचनम्—

दिवसकरशशाङ्कवह्निनेत्रं त्रिभुवनसारमपारमीशमाद्यम्।
अजरममरमप्रसाद्य रुद्रं जगति पुमानिह को लभेत शान्तिम्।
धिक् तेषां धिक् तेषां धिक् पुनरपि धिगस्तु धिक् तेषाम्।
येषां न वसति हृदये कुपथमतिविमोक्षको रुद्रः। इति।

शिवधर्मे सनत्कुमारं प्रति नन्दिकेश्वरवचनम्—

श्रूयतामभिधास्यामि सुखोपायं महत्फलम्।
परमं सर्वधर्माणां शिवधर्मं शिवात्मकम्।
शिवेन कथितं पूर्वं पार्वत्याः षण्मुखस्य च।
गणानां देवमुख्यानामस्माकञ्च विशेषतः।
संसारार्णवमग्नानां सर्वेषां प्राणिनामयम्।
शिवधर्मोडुपः श्रीमानुत्तारार्थमुदाहृतः।
यैरयं शान्तचेतस्कैः शिवभक्तैश्शिवार्थिभिः।
संसेव्यते परो धर्मस्ते रुद्रा नात्र संशयः।
ग्रामे वा यदि वाऽरण्ये जले वाऽपि स्थलेऽपि वा।
यत्रैव विद्यते लिंगं सर्वतीर्थानि तत्र वै।
एककालं द्विकालं वा त्रिकालं नित्यमेव वा।
ये स्मरन्ति विरूपाक्षं विज्ञेयास्ते गणेश्वराः।
कीर्तयिष्यन्ति ये रुद्रं सकृदप्याशु ते नराः।
सर्वपापैः प्रमुच्यन्ते सर्वजन्मकृतैरपि।
येऽर्चयन्ति सदा रुद्रं न ते प्राकृतमानुषाः।
रुद्रलोकात् परिभ्रष्टास्ते रुद्रा नात्र संशयः। इति।

नारुद्रस्संस्पृशेद्रुद्रं नारुद्रो रुद्रमर्चयेत् ।
नारुद्रः कीर्तयेद्रुद्रं नारुद्रो रुद्रमाप्नुयात् । इति च ।

**स्कान्दे सनत्कुमारसंहितायां** षट्त्रिंशाध्याये शिवं प्रति विष्णुवचनम्—

ततस्तु सत्वरो विष्णुः प्रोवाच परमेश्वरम् ।
कालकूटं त्वया शंभो भक्षितं किल गुप्तये ।
तत्पूर्वमेव मेऽङ्गानि तत्कीलालीढमात्रतः ।
कृष्णानि दृढसन्तापभर्जितः खिन्नमानसः ।
त्वां प्रपन्नोऽस्मि शरणं रुद्रं रुग्द्रावणप्रभुम् ।
शंभुं शं भवतीतिह मृडं मृडयतीति च ।
शंकरं शं करोतीति भवन्तं शिवमव्ययम् ।

**शिवरहस्ये** अष्टमाध्याये दण्डपाणिस्तोत्रे—

विश्वेश प्रमथाधीश वृषभाधीशवाहन ।
वेदवेद्य जगन्नाथ नमस्ते रुद्र मन्यवे ।
वेदान्तवेद्य त्रिदशैकवन्द्य त्रिकाग्निकाल त्रिदशैकपूज्य ।
अनन्तकल्याणगुणार्णवाय रुद्राय देवाय नमोऽस्तु तुभ्यम् ।
अणोरणीयान्महतो महीयान् त्वमेव नान्यो जगदेकहेतो ।
विश्वाधिकाशास्य परात्परेश रुद्राय देवाय नमो नमस्ते । इति च ।

**वायवीयसंहितायां** पूर्वभागे द्वितीयाध्याये—

य एको भगवान् रुद्रो न द्वितीयोऽस्ति कश्चन ।
सदा जनानां हृदये सन्निविष्टोऽपि यः परैः ।
अलक्ष्यो लक्षयद्विश्वमधितिष्ठति सर्वथा ।
यस्तु कालात्मयुक्तानि करणान्यखिलान्यपि ।
अनन्तशक्तिरेवैको भगवानधितिष्ठति । इति ।

तत्रैव तृतीयाध्याये ऋषीन् प्रति ब्रह्मवचनम्—

सर्वस्मादधिको विप्रा रुद्रः परमकारणम् ।
तमप्रतर्क्ययाथार्थ्यं भक्तिमानेव पश्यति ।
भक्तिश्चास्य प्रसादेन प्रसादादेव निर्वृतिः ।
तस्मादस्य प्रसादार्थं मुनयो नैमिशं गताः ।
यजध्वं दीर्घसत्रेण रुद्रं भुवननायकम् । इति ।

तत्रैव अष्टविंशाध्याये—

रुग्दुःखं दुःखहेतुर्वा तं द्रावयति यः प्रभुः ।
रुद्र इत्युच्यते तस्माच्छिवः परमकारणम् । इति ।

तन्नो रुद्रः प्रचोदयादिति श्रुतिः ।

बृहदारण्यके—

रेतसि तिष्ठन् । रेतसोऽन्तरः । स्पष्टम् । उक्तरूपैव श्रुतिः ।

रातिर्दातुः परायणम्—रातेर्धनस्य दातुः परायणं प्राप्यस्थानं । विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् इति श्रुतिः ।

रसयन्—रसाकारवृत्तिसाक्षिस्वरूपः । तेन साक्षिमात्रं प्रकृते रसयन्निति पदेन लक्ष्यते ।

रसयितूरसयतिः—तत्र रसयतिशब्देन मधुरादिरसविषया अन्तःकरणवृत्तिरुच्यते । अत्र तु रसयितुः स्वरूपभूता साक्षिस्वरूपा रसयतिरुच्यते ।

श्रुतिस्तु—यद्वै तन्न रसयते रसयन् वै तन्न रसयते न हि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वा न्न तु तत् द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेदिति ।

छान्दोग्ये—

लोकेभ्यो ज्यायान्—महत्तरः सर्वव्यापीत्यर्थः । ज्यायानेभ्यो लोकेभ्यः इति श्रुतिः ।

बृहदारण्यके—

**लोकः**—लोक्यते अनुभूयते स्वात्मत्वेन योगिभिरिति लोकः। **तस्य लोकस्स उ लोक एव** इति श्रुतिः।

**कौषीतक्यां**—

**लोकाधिपतिः। लोकपालः। लोकेशः**—एवं वा पाठक्रमः—लोकपालः लोकाधिपतिः लोकेशः इति। अत्र लोकपालशब्देन लोकानां जनानां मातृवत् पालक इत्युच्यते। लोकाधिपतिशब्देन तेषामेव अधिष्ठाय पालयिता पितृवत् शिक्षक इत्युच्यते। लोकेशब्देन राजवत् स्वामीत्युच्यते। **एष लोकाधिपतिरेष लोकपाल एष लोकेशः** इति श्रुतिः।

**केनोपनिषदि**—

**वाचो वाक्**—स्वात्मन्यध्यस्तं वागिन्द्रियमनुप्राप्य तस्य स्वसमवधानेन अभिवदनसामर्थ्यरूपं वाक्त्वं प्रयच्छतीति वाचो वाक्। **यद्वाचो ह वाचमि**ति श्रुतिः।

**विदितादन्यत्**—

विदितं विदिक्रियाकर्मभूतं कार्यमात्रमित्यर्थः, तस्मादन्यत्। **अन्यदेव तद्विदितदथो अविदितादधी**ति श्रुतिः।

**वाचाऽनभ्युदितम्**—वाचा पदत्वेन परिच्छिन्नया करणगुणवत्या अनभ्युदितमप्रकाशितम्। **यद्वाचाऽनभ्युदित**मिति श्रुतिः।

**विजानतामविज्ञातम्**—सम्यग्जिानतां-तद्ब्रह्मवयञ्ज्ञानीम इति बुद्धिवृत्तिविशिष्टरूपेण जानतां अविज्ञातं-अनवगतम्।

ननु विरुद्धमिदमुच्यते बिजानतामविज्ञातमिति। किञ्च, सम्यग्विदितवतामपि ब्रह्म यद्यविज्ञातं स्यात् तर्ह्यविदुषामप्यविज्ञातमिति विद्वदविदुषोर्विशेषो न स्यात्। अपि च, ब्रह्म वेद ब्रह्मैव भवति ब्रह्मविदाप्नोति परम् तरतिशोकमात्मविदित्याद्याः श्रुतयः ब्रह्मविद एव मुक्तिं प्रतिपादयन्ति। किञ्च, तं त्वौपनिषदं पुरुषमिति उपनिषदेकसमधिगम्यत्वं अवगम्येत। उपनिषदेकसमधिगम्यत्वञ्च उपनिषज्जन्यवृत्तिविषयत्वम्। मनसैवानुद्रष्टव्यमिति च वृत्तिविषयत्वम्। तस्मात् कथमुच्यते विजानतामविज्ञातमिति। ननु यतो वाचो

निवर्तन्ते अप्राप्य मनसा सह, यद्वाचाऽनभ्युदितम्, यन्मनसा न मनुते, इति वाङ्मनसाविषयत्वमपि ब्रह्मणः श्रूयते। तर्हि परस्परविरोधात् अप्रामाण्यमिति चेत्।

अत्रोच्यते-वागविषयत्वं तावत् ब्रह्मणः षष्ठीजातिगुणक्रियादिप्रवृत्तिनिमित्ताभावात्। मनोऽविषयत्वञ्च मनसो जडत्वात् मनसोऽपि ब्रह्म प्रकाशकमिति। अत एव घटादिविषयीकरणमपि मनसश्चैतन्यप्रतिबिंबवैशिष्ट्यबलादेव। औपनिषदत्वन्तु ब्रह्मणः उपनिषज्जन्यान्तःकरणवृत्त्या स्वात्मानमप्यविषयीकुर्वत्या वस्तुमात्राकारया प्रतिबन्धकावारकाज्ञाननिवृत्तौ स्वरूपस्फुरणेनैव वस्तुनोऽवभासमभिप्रेत्योक्तम्। अत एव मनसैवानुद्रष्टव्यमिति व्याख्यातम्। श्रवणमननध्यानादिसंस्कृतमनसः यदा ब्रह्मणः अखण्डाकारवृत्तिरुत्पद्यते तदा वृत्त्या आवरणरूपाज्ञाननिवृत्तौ स्वरूपस्फुरणेनैव सच्चिदानन्दपरिपूर्णात्मस्वरूपेणावभासनमिति। तथा च श्रुतीनामविरोधः। नापि विद्वदविदुषोरविशेषः, अविदुषः उक्तात्मज्ञानाभावात्। आत्मवेदनञ्च ब्रह्मविषयत्वेनाभिप्रेतं न भवतीति न कश्चिदपि दोषः।

**अविज्ञातं विजानतां विज्ञातमविजानता**मिति श्रुतिः।

**काठके**—

**विपश्चित्**—अविपरिलुप्तचैतन्यस्वभावः। **न जायते म्रियते वा विपश्चिद्**िति श्रुतिः।

**विभुः**—व्यापकः, हिरण्यगर्भादिरूपेण विविधं भवतीति वा विभुः। सर्वात्मेति यावत्। तदुक्तं **वासिष्ठे**—

**दिवि भूमौ तथाऽऽकाशे बहिरन्तश्च मे विभुः।**
**यो विभात्यवभासात्मा तस्मै सर्वात्मने नमः।** इति।

**महान्तं विभुमात्मान**मिति श्रुतिः।

**विमुक्तः**—सर्वदा अज्ञानतत्कार्यासंस्पृष्टः, मुक्तस्वरूप एव। तदुक्तं **सूतसंहितायां** सालोक्यसामीप्यसारूप्यमुक्तिनिरूपणानन्तरम्—

**अन्या सायुज्यरूपोक्ता सुखदुःखविवर्जिता।**
**षड्भावविक्रियाहीना शुभाशुभविवर्जिता।**

सर्वद्वन्द्वविनिर्मुक्ता सत्यविज्ञानरूपिणी ।
केवलं ब्रह्मरूपोक्ता सर्वदा सुखलक्षणा ।
न हेया नाप्युपादेया सर्वसंबन्धवर्जिता ।
न दृष्टा न श्रुता विष्णो नचास्वाद्या न तर्किता ।
सर्वावरणनिर्मुक्ता सर्वलक्षणवर्जिता ।
सर्वेषां प्राणिनां साक्षादात्मभूता स्वयम्प्रभा ।
प्रतिबन्धविनिर्मुक्ता सर्वदा परमार्थतः ।
अविचारदशायान्तु प्रतिबद्धा स्वमायया ।
एषैव परमा मुक्तिः प्रोक्ता वेदान्तवेदिभिः । इति ।

विमुक्तश्च विमुच्यते इति श्रुतिः ।

वामनः—वननीयः संभजनीयः । मध्ये वामनमासीनमिति श्रुतिः ।

वशी—सर्वमस्य वशे वर्तते इति वशी । तदुक्तं श्रीविष्णुपुराणे—

सर्वज्ञः सर्वदृक् सर्वशक्तिज्ञानबलर्द्धिमान् ।
अन्यूनश्चाप्यवृद्धश्च स्वाधीनो नादिमान् वशी । इति ।

एको वशी सर्वभूतान्तरात्मा इति श्रुतिः ।

व्यापकः—परिपूर्णः । तदुक्तं श्रीविष्णुपुराणे—

एकं प्रकाशममलं नित्यं व्यापकमक्षयम् ।
समस्तभेदरहितं विष्ण्वाख्यं परमं पदम् ।
तद्ब्रह्म परमं योगी गत्वा नावर्तते पुनः ।
अपुण्यपुण्योपरमे क्षीणक्लेशोऽतिनिर्मलः ।

व्यापकोऽलिङ्ग एव च इति श्रुतिः ।

मुण्डकोपनिषदि—

वरेण्यः—वरणीयः, प्रार्थनीयः, सर्वप्राणिभिरात्मत्वेन सेव्य इत्यर्थः । तदुक्तं—

श्रीविष्णुराणे—

स एव सृज्यः स च सर्गकर्ता स एव पात्यत्ति च पाल्यते च।

ब्रह्माद्यवस्थाभिरशेषमूर्तिः विष्णुर्वरिष्ठो वरदो वरेण्यः। इति।

**यदेतज्जानथ सदसद्वरेण्य**मिति श्रुतिः।

**विज्ञानात् परम्।** बुद्धिस्वरूपात् विज्ञानात् परमुत्कृष्टम्। बुद्धेर्जडत्वेन आत्मनः स्वप्रकाशत्वेन उत्कृष्टत्वम्।

**वरिष्ठं**-श्रेष्ठम्।

**परं विज्ञानाद्यद्वरिष्ठमिति** श्रुतिः।

**व्योमनि प्रतिष्ठितः** हृदयाकाशे प्रतिष्ठितः। **व्योमन्यात्मा प्रतिष्ठितः** इति श्रुतिः।

**विरजम्**—निर्मलम्। **विरजं ब्रह्म निष्कलमिति** श्रुतिः।

माण्डूक्ये—

**विज्ञेयः**—श्रवणमननादिभिर्ज्ञातुं योग्यः। **स आत्मा स विज्ञेयः** इति श्रुतिः।

तैत्तरीये—

**विश्वम्**—विश्वस्य जगतः कारणत्वेन विश्वं ब्रह्मेत्युच्यते। यद्वा परमात्मनो न भिन्नमिदं विश्वं परमार्थतः, तेन विश्वमित्यभिधीयते ब्रह्म। **ब्रह्मैवेदं विश्वमिदं वरिष्ठं पुरुष एवेदं सर्वमिति** श्रुतेः तद्भिन्नं न किञ्चित् परमार्थतःसदस्ति। अथवा विशतीति विश्वं ब्रह्म। तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः। यद्वा संहृतौ विशन्ति विश्वा भूतानि ब्रह्मणि, यत्प्रयन्त्यपि संविशन्ति इति श्रुतेः। तदुक्तं **सूतसंहितायाम्—**

विष्वक्सेनाय विश्वाय विश्वोत्पत्त्यादिहेतवे।

विश्वविज्ञानरूपाय विमलाय नमो नमः। इति।

**यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्** इति श्रुतिः।

**विद्युत्पुरुषः**—विद्योतमानः देदीप्यमानः स्वयम्प्रकाश इति यावत्। पुरुषः पूर्णश्चिद्रूप आत्मेत्यर्थः। **सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधीति** श्रुतिः।

विश्वतो मुखः विश्वतश्चक्षुः । विश्वतोहस्तः । विश्वतस्पात् । विश्वतः—विश्वत्र सर्वत्र सर्वप्राणिषु ब्रह्मादिपिपीलिकान्तेषु विद्यमानानि मुखानि यस्य सः विश्वतोमुखः । एवमुत्तरत्रापि योजनीयं विश्वतश्चक्षुरित्यादौ । सर्वात्मकत्वं श्रीविष्णुपुराणे वर्णितम्—

त्वं विश्वतश्चक्षुरनन्तमूर्ते त्रेधा पदं त्वं निदधे विधातः ।
यथाऽग्निरेको बहुधा समिध्यते विकारभेदैरविकाररूपः ।
तथा भवान् सर्वगतैकरूपो रूपाण्यनेकाननुपुष्यसीश ।
एकस्त्वमग्र्यं परमं पदं च पश्यन्ति त्वां सूरयो ज्ञानदृश्यम् ।
त्वत्तो नान्यत् किंचिदस्ति स्वरूपं यद्वा भूतं यच्च भव्यं परात्मन् । इति ।

प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पादिति श्रुतिः ।

विधाता—निर्माता श्रेयःकर्ता वा । तदुक्तं सूतसंहितायाम्—

अनेनेदं जगत्सर्वं विना न भवति क्वचित् ।
एष धाता विधाता च सर्वदा सर्वदेहिनाम् । इति ।

स नो बुद्धिर्जनिता स विधातेति श्रुतिः ।

वासुदेवः—वसति वासयति आच्छादयति वा सर्वमिति वासुः । दीव्यति क्रीडति विजिगीषति व्यवहरति द्योतते स्तूयते गच्छतीति वा देवः । वासुश्चासौ देवश्चेति वासुदेवः ।

छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः ।
वसनात् सर्वभूतानां वसुत्वात् सर्वयोनितः ।
वासुदेवस्ततो ज्ञेयः इत्युद्योगपर्वणि ।
सर्वत्रासौ समस्तश्च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते । इति श्रीविष्णुपुराणे ।

तत्रैवान्यत्र—

ओंनमो वासुदेवाय तस्मै भगवते सदा ।

व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः ।
सकलमिदमहञ्च वासुदेवः परमपुमान् परमेश्वरः स एकः ।
इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान् विहाय दूरात् । इति ।
गते तस्मिन् स भगवान् संयुज्यात्मानमात्मनि ।
ब्रह्मभूतेऽव्ययेऽचिन्त्ये वासुदेवमयेऽमले ।
अजन्मनि जगद्योनावप्रमेयेऽखिलात्मनि ।
तत्याज मानुषं देहमतीत्य त्रिविधां गतिम् । इति ।
सर्वाणि तत्र भूतानि वसन्ति परमात्मनि ।
भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः । इति च ।

<u>विष्णुः</u>—विषेः व्याप्त्यभिधायिनः ष्णुप्रत्ययान्तस्य रूपम् । विशेर्धातोः ष्णुप्रत्ययान्तस्य रूपं वा । तदुक्तं श्रीविष्णुपुराणे—

अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ।
एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः ।
अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे ।
सर्गस्थितिविनाशानां जगतो यो जगन्मयः ।
मूलभूतो नमस्तस्मै विष्णवे परमात्मने । इति ।
शास्ता विष्णुरशेषस्य जगतो यो हृदि स्थितः ।
तमृते परमात्मानं तात कः केन शास्यते ।
न शब्दगोचरे यस्य योगिध्येयं परं पदम् ।
यतो यश्च स्वयं विश्वं स विष्णुः परमेश्वरः ।
न केवलं तात मम प्रजानां स ब्रह्मभूतो भवतश्च विष्णुः ।
तथा विधाता परमेश्वरश्च प्रसीद कोपं कुरुषे किमर्थम् । इति ।
सर्वस्य धातारमचिन्त्यरूपमणोरणीयांसमतिप्रमाणम् ।
सितासितश्चेश्वरमीश्वराणामाराधयिष्ये तपसैव विष्णुम् ।

तस्मिन्नशेषौजसि सर्वरूपिण्यव्यक्तविस्पष्टतनावनन्ते ।
ममाचलश्चित्तमपेतदोषं सदाऽस्तु विष्णावभवाय भूयः ।
समस्तभूतादमलादनन्तात् सर्वेश्वरादन्यदनादिमध्यात् ।
यस्मान्नकिञ्चित्तमहं गुरूणां परं गुरुं संश्रयमेमि विष्णुम् । इति ।
आदित्या मरुतस्साध्या रुद्रा वस्वश्विवह्नयः ।
पितरो ये च लोकानां स्रष्टारोऽत्रिपुरोगमाः ।
एते तस्याप्रमेयस्य रूपं विष्णोर्महात्मनः ।
यक्षराक्षसदैतेयाः पिशाचोरगदानवाः ।
गन्धर्वाप्सरसश्चैव रूपं विष्णोर्महात्मनः ।
ग्रहर्क्षतारकाश्चैव गगनानि जलानिलाः ।
अहञ्च विषयाश्चैव सर्वं विष्णुमयञ्जगत् । इति ।
यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्वतैः ।
वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्मि तम् । इति ।
तद्ब्रह्म परमं धाम परमात्मा स चेश्वरः ।
स विष्णुः सर्वमेवेदं यतो नावर्तते यतिः ।
परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ।
ह्रस्वदीर्घप्लुतैर्यत्तु किञ्चिद्वस्त्वभिधीयते ।
यच्च वाचामविषये तत् सर्वं विष्णुरव्ययः । इति च ।
ज्योतींषि विष्णुर्भुवनानि विष्णुः वनानि विष्णुर्गिरयो दिशश्च ।
नद्यस्समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य । इति ।

सूतसंहितायामपि—

विष्णवे सर्वलोकानां हेतवे विविधात्मने ।
वेदवेदान्तनिष्ठानामात्मभूताय ते नमः । इति ।
श्रुतिस्तु—वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयादिति ।

**विधर्ता**—विविधं धारयिता प्रजानाम्। **विधर्तारं हवामहे** इति श्रुतिः।

**वृषभः**—वर्षत्येष भक्तेभ्यः कामान् इति वृषभः। **त्रिधा बद्धो वृषभो रोरवीती**ति श्रुतिः।

**विश्वाधिकः**—विश्वमधिकारिवर्गं मायातत्कार्यञ्चातिक्रम्य स्थितः। अतः दुःखासंस्पृष्ट-निरवधिकसुखस्वरूपः। तदुक्तं **श्रीस्कान्दे**—

**विश्वाधिको महानन्दः स्वतन्त्रो निरुपद्रवः।**
**असक्तस्सर्वदोषैश्च कथं दुःखी भवेद्धरः।** इति।

**वायवीयसंहितायां** प्रथमभागे चतुर्थाध्याये—

**य एकः सर्वभूतानां प्रलयश्चोद्भवस्तथा।**
**हिरण्यगर्भं देवानां प्रथमं जनयेदयम्।**
**विश्वस्मादधिको रुद्रो महर्षिरिति श्रुमः।**
**वेदाहमेतं पुरुषं महान्तममृतं ध्रुवम्।**
**आदित्यवर्णं तमसः परस्तात् संस्थितं प्रभुम्।**
**यस्मान्नास्ति परं किञ्चिदपरं परमात्मनः।**
**नाणीयोऽस्ति न च ज्यायः तेन पूर्णमिदञ्जगत्।** इति।

**पराशरोपपुराणे** तृतीयाध्याये—

**आधिक्यं सर्ववेदेभ्यो मनुते शङ्करस्य यः।**
**संसारसागरात्तीर्णो मुक्तिपारं स गच्छति।**
**रुद्रं विश्वाधिकं साक्षात् सर्वदा सर्वसाक्षिणम्।**
**सर्वस्मादधिकञ्चैव मनुते स तु शङ्करः।**
**सर्वस्मादधिकं ये तु न वदन्ति पिनाकिनम्।**
**सममन्यैर्वदन्त्येनं ते महापातकैर्युताः।**

आधिक्यं सर्वमानानां यथा वेदस्य विद्यते ।
तथा रुद्रस्य देवानामाधिक्यं विद्यतेऽनघ । इति ।

तत्रैव—अचेतनेभ्यः सर्वेभ्यश्चेतना अधिका मुने ।
चेतनेषु मनुष्याश्च मनुष्येष्वधिका द्विजाः ।
द्विजेषु ब्राह्मणास्तेषु कुलीना अधिकाः स्मृताः ।
तेभ्यो मनुष्यगन्धर्वा अधिका वेदवित्तम ।
तेभ्योऽपि देवगन्धर्वाः पितरश्च ततः परम् ।
कर्मदेवसमाख्याश्च तथा देवास्ततः परम् ।
तेभ्य इन्द्रोऽधिकस्तस्मादधिकस्तु बृहस्पतिः ।
बृहस्पतेरपि प्राज्ञः प्रजानाथोऽधिकः स्मृतः ।
प्रजापतेरपि ब्रह्मा ब्रह्मणो विष्णुरास्तिक ।
विष्णोरपि हरस्तस्मान्मायी साक्षान्महेश्वरः ।
ततोऽधिकतरः साक्षाच्छिवः सांबः सनातनः ।
तदन्यद्विश्वमीशानः स तु विश्वाधिकश्शिवः ।
यानि वेदान्तवाक्यानि तानि सर्वाणि सत्तम ।
विश्वाधिकपराण्येव नैव विश्वपराणि वै ।
तथा स्मृतिपुराणानि भारतादीनि चास्तिक ।
शास्त्रान्तराणि तर्काश्च श्रुत्यनुग्राहकास्तथा ।
विना साक्षाच्छिवं सांबं प्रमाणान्यखिलान्यपि ।
विश्वाधिकतया नान्यं प्रवदन्ति कदाचन । इति ।

**विश्वाधिको रुद्रो महर्षि**रिति श्रुतिः ।

**विश्वाक्षः**—विश्वत्र सर्वत्र अक्षिकार्यवान् । सर्वदृक् इति यावत् । अथवा विश्वानि-सर्वाणि अक्षीणि प्रजासंबन्धीनि इन्द्रियाणि अस्याक्षीणि इन्द्रियाणीति विश्वाक्षः ।

**विश्वशंभुः**—विश्वेषां-सर्वेषां शं-सुखं तस्य भावयिता प्रतिपादयिता। एतस्यैवानन्द-स्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः।

**सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुव**मिति श्रुतिः।

**विश्वतः परमः**—विश्वतः—ब्रह्मादेरपि परमः—उत्कृष्टः। **विश्वतः पर (मान्) मंनित्य**मिति श्रुतिः।

**विश्वात्मा**— विश्वमेवात्मा शरीरं यस्य स विश्वात्मा। तदुक्तं **पाराशरोपपुराणे**—

**विग्रहो देवदेवस्य विश्वमेतच्चराचरम्**। इति।

**श्रीविष्णुपुराणेऽपि**—

**व्यक्तं स एव चाव्यक्तं स एव पुरुषोऽव्ययः।**
**परमात्मा च विश्वात्मा विश्वरूपधरो हरिः**। इति।

**विश्वात्मानं परायण**मिति श्रुतिः।

**विरूपाक्षम्**— विषमलोचनम्।..........तापरं ब्रह्मेत्यर्थः।

**यतो वाचो निवर्तन्ते ह्यप्राप्य मनसा सह।**
**अनन्दं तं विदुस्साक्षात् त्वामेव ब्रह्मवादिनः।**
**नेति नेतीति बहुशो दृश्यं कृत्स्नं निषिध्य वै।**
**श्रुत्या यल्लक्षितं धाम तं त्वां जानन्ति योगिनः।**
**ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।**
**ऊर्ध्वरेतं विरूपाक्षमाहुस्त्वामात्मवेदिनः।**
**यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा।**
**अन्तर्बहिश्च तत् सर्वं त्वां सर्वं जानते बुधाः**। इति।

**वायवीयसंहितायामु**परिभागे सप्तविंशाध्याये—

**पशुपाशमयस्यास्य प्रपञ्चस्य सदा पतिम्।**
**अकुतोभयमत्यन्तमवृद्धिक्षयमव्ययम्।**
**बाह्यमाभ्यन्तरं व्याप्य बाह्यान्तरविवर्जितम्।**

नीरसातिशयं शश्वद्विश्वलोकविलक्षणम् ।
अलक्षणमनिर्देश्यमवाङ्मनसगोचरम् ।
प्रकाशैकस्थितं शान्तं प्रसन्नं सततोदितम् ।
सर्वकल्याणनिलयं शक्त्या तादृशयाऽन्वितम् ।
ज्ञात्वा देवं विरूपाक्षं ब्रह्मनारायणौ तदा । इति ।

विश्वरूपः— विश्वत्वेन स्थितं रूपं यस्य, जगदनुग्रहार्थं विश्वरूपतां दधातीत्यर्थः। तदुक्तं सूतसंहितायाम्—

विश्वरूपाय विश्वासलभ्याय विदितात्मने ।
विश्वोत्तीर्णाय विश्वस्य साक्षिभूताय ते नमः । इति ।

विष्णुपुराणेऽपि—

एतद्विजानता सर्वं जगत् स्थावरजङ्गमम् ।
द्रष्टव्यमात्मवद्विष्णुर्यतोऽयं विश्वरूपधृक् ।
एवं ज्ञाते स भगवाननादिः परमेश्वरः ।
प्रसीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंक्षयः । इति ।

ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः इति श्रुतिः ।

विश्वभुक्—कल्पान्ते विश्वस्य भोक्ता । यद्वा यदस्मदादिभिर्भुज्यते तदपि विश्वं स एव भुङ्क्ते इति । ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुगिति श्रुतिः ।

वामदेवः—वामः वननीयः संभजनीयः स चासौ देवश्च वामदेवः । मुमुक्षुभिः प्रत्यगात्मत्वेन सेव्यत इति यावत् । वामदेवाय नमो ज्येष्ठाय इति श्रुतिः ।

वसुरण्यः— वसुनः वरिष्ठस्य ज्ञानस्य ब्रह्मभावलक्षणस्य रणयिता। वसुरण्यो विभुरसीति श्रुतिः ।

छान्दोग्ये—

व्रीहेरणीयान्—व्रीहेर्धान्यविशेषादणीयान् अणुतरः। ननु नित्यं विभुं सर्वगतमित्यादिना आत्मनः व्यपित्वश्रवणात् इहापि ज्यायान् पृथिव्या इत्यादिना आत्मनो व्यापित्वश्रवणाच्च

कथमात्मनस्सूक्ष्मत्वमुच्यत इति चेत् औपाधिकत्वादिति ब्रूमः। तथाहि-हृदयसुषिरे तदाधारान्तःकरणे उपासकैरणीयस्त्वगुणविशिष्टतया हृदयायतनत्वेन च तथा उपास्यते इति। तदुक्तं सूत्रकारैः—अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च इति। **एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वे**ति श्रुतिः।

**वामनीः**—वामानि-पुण्यकर्मफलानि पुण्यानुरूपं प्राणिभ्यो नयतीति वामनीः। **एष उ एव वामनी**रिति श्रुतिः।

**वैश्वानरः**—विश्वान्नरान्नयति पुण्यपापानुरूपां गतिं सर्वात्मा एष ईश्वरो वैश्वानरः। विश्वश्चायन्नरश्च वैश्वानरः। सर्वात्मत्वात्। विश्वैर्वा नरैः प्रत्यगात्मतया प्रविभज्य नीयत इति वैश्वानरः। विश्वेषां वा अयं नरः तद्विकारभूतत्वात् विश्वप्रपञ्चस्य। विश्वे वा नरा जीवात्मानः अस्य तादात्म्येनेति। ननु वैश्वानरशब्दस्य जाठरेऽग्नौ भूताग्नौ देवाग्नौ च, अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यत इति, विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्निति, वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीरिति च रूढ्या प्रयोगदर्शनात् कथं यौगिकव्युत्पत्त्या परमात्मपरत्ववर्णनम्। को न आत्मा किं ब्रह्मेत्युपक्रमादिपर्यालोचनादिति गृहाण। तदुक्तं सूत्रकारैः— वैश्वानरः साधारणशब्दविशेषादिति।

**यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानर**मिति श्रुतिः।

**विजिज्ञासितव्यः**—शास्त्राचार्याभ्यामन्विष्य साक्षात्करणीय इत्यर्थः। **तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य**मिति श्रुतिः।

**विजरः। विमृत्युः। विशोकः। विजिघत्सः।** विजरः--विगतजरः। विमृत्युः—मृत्युरहितः। विशोकः—विगतशोकः। शोको नाम इष्टवियोगादिनिमित्तो मानसःसन्तापः। विजिघत्सः—विगताशनेच्छः। तदुक्तं **सूतसंहितायाम्—अहोरात्रे न तरतो न मृत्युर्नजरापि च। न शोको नैव सुकृतं न दुष्कृतमपीश्वराः।** इति।

**विजरो विमृत्युर्विशोको विजिघत्सोऽपिपास** इति श्रुतिः।

**विधृतिः**—विधारणः, वर्णाश्रमाचारादिमर्यादापालक इत्यर्थः। **अथ य आत्मा स सेतुर्विधृति**रिति श्रुतिः।

46

बृहदारण्यके—

**वित्तात् प्रेयः**। गवादिवित्तात् प्रियतरम्। **तदेतत् प्रेयः पुत्रात् प्रेयो वित्ता**दिति श्रुतिः।

**विज्ञानघनः**—यथा सैन्धवखण्डः अन्तर्बहिश्च रसात्मनाऽवतिष्ठते। एवमात्मापि अन्तर्बहिश्च सर्वत्र विज्ञेयविनिर्मुक्तविज्ञानैकस्वरूपतया अवतिष्ठते। तदुक्तं **वासिष्ठलैङ्गे**—

**एकोऽहमासं प्रथमं मुनीन्द्राः वर्तामि पश्चादभिसंभवामि।**
**अतो न मत्तः पृथगस्ति किञ्चित् विचार्यमाणेऽप्यविचार्यमाणे।**
**नमेऽस्ति पूर्वन्नपरन्नचान्तरं न बाह्यमस्त्येव सदा मुनीश्वराः।**
**यथैव सिन्धूत्थघनो रसात्मकः तथैव विज्ञानघनोऽहमास्तिकाः** इति।

**एवं वा अरे इदं महत् भूतमनन्तमपारं विज्ञानघन एवे**ति श्रुतिः।

**विज्ञातेर्विज्ञाता**—विज्ञातेः केवलाया बुद्धिवृत्तेर्व्याप्ता स्वरूपप्रकाशेन भासकः। **न विज्ञातेर्विज्ञातारं विजानीयाः** इति श्रुतिः।

**वायौ तिष्ठन्। वायोरन्तरः। वाचि तिष्ठन्। वाचोऽन्तरः। विज्ञाने तिष्ठन्। विज्ञानादन्तरः**। स्पष्टम्। विज्ञानशब्देन शारीर उच्यते, तस्य विज्ञानोपाधिकत्वेन विज्ञानमयत्वात्। तदुक्तं **सूत्रकारैः** "शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" इति। विवृतश्च भगवद्भिर्**भाष्यकारैः**- "नेति पूर्वसूत्रादनुवर्तते। शारीरश्च नान्तर्यामी स्यात्, कस्मात्, यद्यपि द्रष्टृत्वादयो धर्माः अस्य संभवन्ति तथापि घटाकाशवत् उपाधिपरिच्छिन्नः कार्त्स्न्येन पृथिव्यादिष्वन्तरवस्थातुं नियन्तुञ्च न शक्नोति। अपि च उभयेऽपि-काण्वा माध्यन्दिनाश्च अन्तर्यामिणो भेदेनैनं शारिरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते। यो विज्ञाने तिष्ठन्निति काण्वाः। य आत्मनि तिष्ठन्निति माध्यन्दिनाः। य आत्मनि तिष्ठन्नित्यस्मिंस्तावत् पाठे भवत्यात्मशब्दश्शारीरस्य वाचकः। यो विज्ञाने तिष्ठन्नित्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते। विज्ञानमयो हि शारीरः" इति।

योवायौ तिष्ठन्नित्यादिःश्रुतिः।

विज्ञाता—अलुप्तविज्ञानशक्तिः। अविज्ञातो विज्ञातेति श्रुतिः।

विज्ञानम्—विज्ञप्तिस्वरूपम्। विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणमिति श्रुतिः।

वदन्—अभिवदनक्रियानिर्वर्तनयोग्यचैतन्यस्वभावः।

वक्तुर्वक्तिः—अभिवदनक्रियानिर्वर्तनयोग्यस्वरूपम्। यद्वै तन्न वदति वदन् वै तन्न वदति न हि वक्तुर्वक्तेरिति श्रुतिः।

विजानन्—बुद्धिवृत्तिप्रकाशनयोग्यसाक्षिस्वरूपः।

विज्ञातुर्विज्ञातिः—विज्ञानवृत्तिकर्तुर्या स्वरूपभूता नित्यविज्ञप्तिः। यद्वै तन्न विजानाति विजानन् वै तन्न विजानाति नहि विज्ञातुर्विज्ञातेरिति श्रुतिः।

विश्वकृत्—विश्वं करोतीति विश्वकृत्। स विश्वकृत् स हि सर्वस्य कर्ता इति श्रुतिः।

विधरणः—वर्णाश्रमादिव्यवस्थायाः विधारयिता। एष सेतुर्विधरणः एषां लोकानामसंभेदाय इति श्रुतिः।

वसुदानः—वसु धनं सर्वप्राणिकर्मफलं। तस्य कर्मफलस्य दाता, प्राणिनां यथावत् कर्मफलेन योजयितेत्यर्थः। सूत्रकारैरप्युक्तम् श्रुतत्वाच्चेति।

श्रुतिस्तु—सवा एष महानज आत्मा अन्नादो वसुदानो विन्दते वसु य एवं वेदेति।

वायुरम्—वायुरस्मिन् रमत इति वायुरम्। वायुरं खमिति ह स्माह कौरव्यायणी पुत्रः इति श्रुतिः।

ब्रह्मोपनिषदि—

विदितम्—स्वयंप्रकाशमानम्। ज्योतिर्विदितमिति श्रुतिः।

कैवल्योपनिषदि—

विशदः—निर्मलः। विचिन्त्यमध्ये विशदं विशोकमिति श्रुतिः।

विश्वस्यायतनम्—स्पष्टम्। विश्वस्यायतनम्महत् इति श्रुतिः।

विविक्तरूपः—पृथग्रूपः बुद्ध्यादिभ्यः। अहं विजानामि विविक्तरूपः इति श्रुतिः।

**वेदैर्वेद्यः**—ऋग्वेदादिभिः वेद्यः प्रतिपाद्यः। **वेदैरनेकैरहमेव वेद्यः** इति श्रुतिः।

**वेदान्तकृत्**—व्यासरूपेण वेदान्तशास्त्रकृत्।

**वेदवित्**—वेदानां साङ्गानां सर्वविद्यास्थानानां वेत्ता। **वेदान्तकृद्वेदविदेव चाहमिति** श्रुतिः।

**श्वेताश्वतरोपनिषदि**—

**विप्रः**—विशेषेण व्याप्तः। **विप्रा विप्रस्य बृहतो विपश्चितः** इति श्रुतिः।

**विश्वतोबाहुः**—उक्तार्थमेतत्। **विश्वतो बाहुरुत विश्वतस्पात्** इति श्रुतिः।

**विश्वस्य परिवेष्टिता**—सर्वमन्तःकृत्वा स्वात्मना सर्वं व्याप्यावस्थितः। **विश्वस्यैकं परिवेष्टितार**मिति श्रुतिः।

**वरदः**—भक्तानामिष्टप्रदः। **भविष्योत्तरपुराणे** क्षेत्रखण्डे बिल्वारण्यमाहात्म्ये एकोनाशीतितमाध्याये अर्जुनः—

> देवदेव करुणालय शंभो फाललोचन परात्पर वन्द्य।
> पाहि पाहि कृपया तव भक्तं मत्कृतञ्च सहतां यदकृत्यम्।
> मन्दस्मितं तव मुखांबुजमादरेण पश्यामि फालनयनं धृतचन्द्रचूडम्।
> आनन्दकन्दलितविग्रहमादितत्त्वं पञ्चार्णमध्यनिलयं वरदं नतोऽस्मि।
> अर्धं प्रवालरुचिरं हरिनीलमर्धं नागाजिनांबरमथो वरवस्त्रमर्धम्।
> कान्तालकार्धमथदीप्तजटालुमर्धं दिव्यम्महस्सततमद्य तवाश्रयेऽहम्।
> कामादिदोषरहितं कलिकल्मषघ्नं वेदान्तवेद्यममलं विबुधेन्द्रवन्द्यम्।
> मन्दारपुष्पकलितालकदिव्यकान्तिं वन्दे महापुरुष ते चरणारविन्दम्॥
> वाचामगोचरमतीतगुणस्वरूपं वागीशविष्णुसुरसेवितपादपद्मम्।
> त्वामाश्रये सकलदन्निजसेवकानां सर्वं सहस्व सकलञ्च ममापराधम्। इति।

**तमीशानं वरदं देवमीड्यमिति** श्रुतिः।

**विश्वस्य स्रष्टा**—प्रपञ्चकर्ता। तदुक्तं **महाभारते**—

**यं वै विश्वस्य कर्तारं जगतस्तस्थुषां पतिम् ।**

**वदन्ति जगतोऽध्यक्षमक्षरं परमं पदम् ।** इति ।

**विश्वस्य स्रष्टारमनेकरूप**मिति श्रुतिः ।

**विश्वाधिपः**—विश्वस्याधिपतिः स्वामी । **विश्वाधिपस्सर्वभूतेषु गूढः** इति श्रुतिः ।

**विश्वकर्मा**—सर्वस्रष्टा । **एष देवो विश्वकर्मा महात्मा** इति श्रुतिः ।

**विश्वयोनिः**—प्रपञ्चकारणम् । **यश्च स्वभावं पचति विश्वयोनिरि**ति श्रुतिः ।

**वेदगुह्योपनिषत्सु गूढम्** । वेदानां गुह्योपनिषदः वेदगुह्योपनिषदः तासु गूढं संवृतम् । **तद्वेदगुह्योपनिषत्सुगूढ**मिति श्रुतिः ।

**वृक्षकालाकृतिभिः परः**—वृक्षाकारेभ्यः कालाकारेभ्यः परः वृक्षकालाकृतिभ्यः परः । वृक्षः संसारवृक्षः । उक्तञ्च ' ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थस्सनातनः इति । परः - अन्यः प्रपञ्चासंस्पृष्ट इत्यर्थः । **स वृक्षकालाकृतिभिः परोऽन्यः** इति श्रुतिः ।

**विश्वधाम**—विश्वस्याधारभूतम् । **ज्ञात्वाऽऽत्मस्थममृतं विश्वधाम** इति श्रुतिः ।

**विश्ववित्**—विश्वं वेत्तीति विश्ववित् । **स विश्वविद्विश्वकृदात्मयोनिरि**ति श्रुतिः ।

**परमहंसोपनिषदि**—

**वेदपुरुषः**—वेदप्रतिपाद्यः पुरुषो वेदपुरुषः । **स एव नित्यपूतस्थः स एव वेदपुरुष इति विदुषो मन्यन्ते** इति श्रुतिः ।

**अथर्वशिरसि**—

**वैद्युतम्**—सर्वं प्रपञ्चजातं विद्योतयतीति वैद्युतम् । **यद्वैद्युतं तत्परं ब्रह्म** इति श्रुतिः ।

**वागवत्**—वाक्—वेदराशिः तं स्वसत्तया अवतीति वागवत् । **वागवदन्ति तदस्य ग्रहण**मिति श्रुतिः ।

**वालाग्रमात्रः**—वालाग्रवदतिसूक्ष्मः । अतिसूक्ष्मदहराकाशे उपलभ्यमानत्वात् । तदुक्तमादित्यपुराणे—

वालाग्रमात्रं हृत्पद्मे विश्वाधीशमुमापतिम्।
येऽनुपश्यन्ति विद्वांसस्तेषां शान्तिः सदा भवेत्। इति।

वालाग्रमात्रं हृदयस्य मध्ये इति श्रुतिः।

अथर्वशिखायां—

विद्युमत्—प्रकाशवत्। अन्तश्शरीरे विद्युमदिति श्रुतिः।

व्यापी—जगद्व्यापी।तदुक्तं श्रीविष्णुपुराणे—

व्यापिनेऽनेकरूपैकस्वरूपाय नमो नमः।
सत्यरूपाय तेऽचिन्त्य हविर्भूताय ते नमः। इति।
एवंप्रकारममलं नित्यं व्यापकमक्षयम्।
समस्तभेदरहितं विष्ण्वाख्यं परमं पदम्।
तं ब्रह्म परमं योगी गत्वा नावर्तते पुनः।
अपुण्यपुण्योपरमे क्षीणक्लेशो विनिर्मलः। इति।

सूतसंहितायामपि—

स्वाभिव्यञ्जकसङ्कोचात् संकोचप्रतिभाऽऽत्मनः।
न स्वरूपेण, चिद्रूपं सर्वव्यापि सदा खलु।
ज्ञातरूपेण चाज्ञातस्वरूपेण च साक्षिणः।
सर्वं भाति तदाभाति ततस्तद्व्यापि सर्वदा।
स्वयं सेद्धुमशक्यं हि जडात्मकमिदञ्जगत्।
चित्संबन्धबलेनैव खलु भाति न चान्यथा।
अतोऽवभास्यं सकलं व्याप्य तद्भासकश्शिवः।
स्वतो व्यापि न चाव्यापि संकोचश्चान्यसंगमात्। इति।

अयमर्थः—ननु आत्मनो व्यापित्वमनुपपन्नं तत्तद्देहेषु संकोचदर्शनादित्यत आह-स्वाभिव्यञ्जकेति। स्वस्य-आत्मनः स्वप्रकाशचिद्रूपस्याप्यावरणाज्ञानापनयनद्वारा -यदभिव्यञ्जकमन्तः

करणादि तत्परिच्छेदवशेन चिदात्मनि परिच्छेदप्रतिभासो रक्तःस्फटिकः इतिवत्, न स्वाभाविक इत्यर्थः। कुत इत्याह-चिदिति। सदा-सर्वदा उत्पत्तिस्थित्यादिकाले सर्वस्यापि प्रपञ्चस्याध्यस्तस्य चिल्लक्षणं ब्रह्म हि रूपं अध्यस्तस्याधिष्ठानादव्यतिरिक्तत्वात्। एतेन कालवस्तुकृतौ परिच्छेदौ निरस्तौ। देशकृतमपि निरस्यति—ज्ञातरूपेणेति। प्रतिभासमानमपि सर्वं जगत् ज्ञातरूपेण-ज्ञानाविषयीकृतत्वाकारेण, तथा अज्ञातरूपेण-अज्ञानविषयत्वाकारेण च, साक्षिचिन्मात्रस्यात्मनो भाति। अतश्चित्प्रकाशव्यतिरेकः कुत्रापि नास्तीति देशकृतपरिच्छेदोऽपि न विद्यत इत्यर्थः। एतदाचार्यैरप्युक्तम्— सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषय एवेति। तत्तु चिदात्मकं ब्रह्म आसमन्तात् सर्वदा स्वयमेव भाति, जडप्रपञ्चवत् नान्यं प्रकाशमपेक्षते। ननु जगदपि स्वत एव किं न भायात्, तत्राह-स्वयमिति। जडात्मकमिति हेतुगर्भविशेषणम्। एवं परमशिवस्य प्रतिपादितं व्यापित्वं निगमयति—अत इति। दृश्यमज्ञानतत्कार्यलक्षणं सर्वं जगद्व्याप्य वर्तमानः स्वभावत एव व्यापि। परिच्छेदस्तु तस्यान्तःकरणाद्युपाधिसंपर्कवशादिति। **व्यापनाद्व्यापी महादेवः** इति श्रुतिः।

**कौषीतकिब्राह्मणोपनिषदि—**

**वक्ता**— वागिन्द्रियप्रेरयिता। यो वाचमन्तरो यमयतीति श्रुत्यन्तरात्। ननु वागादीन्द्रियप्रेरकः अन्तःकरणोपाधिको जीव एव प्रतीयते, कथं परमात्मा। नैतदेवम्। वागाद्युपाधिव्यतिरिक्तचैतन्यमेवात्र विवक्षितम्। तदुक्तं **सूत्रकारैः**—जीवमुख्यप्राणलिंगान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगादिति। विवृतञ्च **भाष्यकारैः**—बुद्ध्याद्युपाधिकृतन्तु विशेषमाश्रित्य ब्रह्मैव जीवः कर्ता भोक्ता चेत्युच्यते। तस्योपाधिकृतविशेषपरित्यागेन स्वरूपं ब्रह्म दर्शयितुं "न वाचं विजिज्ञासीत वक्तारं विद्यादिति श्रुतिः। श्रुतिस्तु—इयमेव।

**वेदितव्यः**—श्रवणादिसाधनैरनुभवारूढतामापादनीयः।

**यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः** इति श्रुतिः।

**उत्तरतापनीयोपनिषदि—**

**वाचो द्रष्टा**— वागिन्द्रियव्यापारस्य द्रष्टा। अनेन वागिन्द्रियविलक्षणत्वमुक्तं भवति।

अत एवोक्तं श्रुत्या "ततस्सर्वस्मादस्मादन्यो विलक्षणः" इति। श्रुतिस्तु—**वाचो द्रष्टा मनसो द्रष्टे**ति।

**वाचस्साक्षी**—अनेन वागन्यत्वे सति अविक्रियत्वमप्युक्तं भवति। **वाचः साक्षी मनसः साक्षी**ति श्रुतिः।

**व्याप्तः**—सर्वव्यापकइत्यर्थः। **प्रभुर्व्याप्तः सदोज्वलः** इति श्रुतिः।

**वीरः**—परिभवासहः। **संभक्ष्य सिंहेन स एव वीरः** इति श्रुतिः।

**व्याप्ततमः**—आकाशादयः पदार्थाः व्याप्ताः, ततोऽपि व्याप्ततमः। **एष ह्येव व्याप्ततम एष हि साक्षी**ति श्रुतिः।

**विदिताविदितात्परः**—विदितात्परत्वं अविषयत्वात् अविदितात्परत्वं स्वप्रकाशचिद्रूपत्वात्। **विदिताविदितात्पर इति होचु**रिति श्रुतिः।

**ईशावास्योपनिषदि—**

**शुक्रम्**—ज्योतिष्मत्, दीप्तमित्यर्थः। **शुक्रमकायमव्रण**मिति श्रुतिः।

**शुद्धम्**—निर्मलं, सत्वादिमलरहितमित्यर्थः। तदुक्तं **श्रीविष्णुपुराणे—**

**सत्वादयो न सन्तीशे यत्र च प्राकृता गुणाः।**
**स शुद्धस्सर्वभूतेभ्यः पुमानाद्यः प्रसीदतु।** इति।
**अवकाशमशेषाणां भूतानां यः प्रयच्छति।**
**अनन्तमूर्तिमाञ्छुद्धस्तस्मै व्योमात्मने नमः।** इति।
**त्वमव्यक्तमनिर्देश्यमचिन्त्यानामवर्णवत्।**
**अपाणिपादरूपञ्च शुद्धं नित्यं परं पदम्।** इति च।

**सूतसंहितायाम्—**

**एवमात्मानमद्वन्द्वं निर्विकारं निरञ्जनम्।**
**नित्यं शुद्धं निराभासं संविन्मात्रं परामृतम्।**
**यो विजानाति वेदान्तैः स्वानुभूत्या च निश्चितम्।**
**सोऽतिवर्णाश्रमी नान्यः स एव गुरुरुत्तमः।** इति।

आत्मा शुद्धः सदा नित्यः सुखरूपः स्वयंप्रभः ।
अज्ञानान्मलिनो भाति ज्ञानाच्छुद्धो विभात्ययम् ।
स एव सर्वदा शुद्धो नाज्ञः कर्मरतो हि सः ।  इति ।

अनेन शुद्धं ब्रह्म यस्तु स्वात्मत्वेन जानाति स तु सर्वदा शुद्धः, न तस्य कर्मापेक्षा, यस्त्वेवं न जानाति तस्यात्माज्ञाननिवर्तकज्ञानोत्पत्त्यर्थं श्रवणादौ प्रवृत्त्यर्थश्चित्तशुद्ध्यर्थश्च कर्म कर्तव्यमित्युक्तं भवति । किञ्चात्मन एव शुद्धत्वमनात्मनोऽशुद्धत्वञ्च युक्तिपुरस्सरं तत्रैवोक्तम्—

आत्मद्रव्यं स्वयं शुद्धं सत्यज्ञानादिलक्षणम् ।
सत्तामात्रे न दोषोऽस्ति स्वतस्सिद्धं यतः सदा ।
यदि सत्ता स्वतोऽशुद्धा दुष्टं सर्वं भवेत् तदा ।
दुष्टसत्ताभिसंबन्धात् दुष्टस्पृष्टं तथा खलु ।
तदा खलु विशुद्धन्तु न सिद्ध्यत्येव किञ्चन ।
सत्ताशून्यन्तु तुच्छं स्यात् सत्ता शुद्धा स्वतस्त्वतः ।
ज्ञप्तिरूपमपि ज्ञानं शुद्धमेव स्वतः सदा ।
अशुद्धिर्जडरूपे हि दृष्टा सर्वजनैरपि ।
स्वतः स्फुरणरूपं तु ज्ञानं दुष्टं भवेद्यदि ।
दुष्टमेव भवेत् सर्वं दुष्टस्फुरणसंगमात् ।
तथा सति विशुद्धन्तु न सिद्ध्यत्येव किञ्चन ।
वस्तु स्फुरणशून्यन्तु तुच्छमेव भवेत् सदा ।
दुष्टकारणविज्ञाने दोषोऽस्तीति वदेद्यदि ।
अभिव्यञ्जकवृत्त्या हि ज्ञाने दोषो न च स्वतः ।
अन्यथा सकलं ज्ञानं दुष्टमेव स्वतो भवेत् ।
अतः स्फुरणरूपन्तु ज्ञानं शुद्धं सदैव तु ।
आनन्दस्तु स्वयं शुद्धः पुरुषैरर्थ्यते यतः ।
अशुद्धः सर्वथा भावो नार्थ्यते पुरुषैः खलु ।

ब्रह्मादिस्तंबपर्यन्तैरर्थ्यते हि सुखं सदा ।
विषयेन्द्रियसंपर्काज्जन्यते हि सुखं सदा ।
न दृश्यते ततोऽदुष्टमिति चेह न संगतम् ।
अभिव्यञ्जकवृत्त्या हि सुखे दोषो न च स्वतः ।
आत्मरूपं सुखं नित्यं नैव जन्मविनाशवत् ।
प्रेमालंबनतः स्वात्मा सुखमेव न संशयः ।
आत्मनश्च सुखस्यापि प्रेमालंबनता सदा ।
विद्यते तत्तयोरैक्यं वस्तुतोऽस्ति सुखात्मनोः ।
अतश्चात्मतया नित्यं सुखं निर्दोषमेव हि ।
अतः सत्यचिदानन्दाः स्वतश्शुद्धा न संशयः ।
सत्यात्मलक्षणं स्वात्मद्रव्यं शुद्धं ततः स्वतः । इति ।

अस्यार्थः—आत्मद्रव्यमिति । द्रव्यशब्दो वस्तुपर्यायः । न तु पराभिमतद्रव्यत्वजातिप्रवृत्तिनिमित्तकः । तथात्वे त्वात्मनो द्रव्यत्वजातिसंसर्गविरहेण द्रव्यशब्दवाच्यता न स्यात् । सत्यज्ञानानन्दादिकं हि आत्मनः पारमार्थिकं स्वरूपम् । यद्यपि तदखण्डैकरसम् । तथाऽपि सर्वदा बाधराहित्याद्युपाधिभेदेन सच्चिदानन्दमिति भेदेन व्यवह्रियते । उक्तं ह्याचार्यैः—आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते—इति । तत्र सद्रूपस्यात्मनः स्वतश्शुद्धिं प्रतिपादयति-सत्तामात्र इति । स्वस्मिन् परिकल्पितनानाव्यक्तिषु अधिष्ठानसद्रूपस्यानुगमात् तदभिप्रायेणाधिष्ठानभूतं सन्मात्रमेव सत्तेत्युच्यते । तस्य सत्तामात्रस्य यस्मात् स्वतश्शुद्धिरंगीकार्या अतस्तत्र न दोषस्पर्श इत्यर्थः । विपक्षे बाधकमाह-यदि सत्तेति । स्वत इति । कारणान्तरमनपेक्ष्य स्वरूपत एवेत्यर्थः । तथा सतीति । विमतं सर्वं दुष्टं दुष्टसत्तया संस्पृष्टत्वात् दुष्टस्पृष्टभाण्डवदित्यभिप्रायः । दोषाभावव्याप्तायाश्शुद्धेः न क्वचिदप्यात्मलाभ इत्यर्थः । सत्ताशून्यन्त्विति । निर्दुष्टत्वाय यदि सर्वञ्जगत् स्वात्मनो दुष्टसत्तासंसर्गं जह्यात् तदानीं तन्निरुपाख्यमेव स्यात् । ततस्सत्तायाः स्वतश्शुद्धिरंगीकार्येत्यर्थः । चिन्मात्रस्यापि स्वतश्शुद्धिमाह-ज्ञप्तीति । ज्ञायतेऽनेन ज्ञानमिति करणव्युत्पत्तिसंभवात् तद्व्यावृत्त्यर्थं ज्ञप्तिरूपमिति विशेषणम् ।

अशुद्धिर्जडरूपे इति। अनात्मप्रपञ्चे ह्यशुद्धत्वं जडत्वव्याप्तं दृश्यते। तज्जडत्वं स्वप्रकाशचिदात्मनो व्यावर्तमानं व्याप्यमशुद्धत्वमपि व्यावर्तयति इत्यर्थः। तत्रापि पूर्ववत् विपक्षे बाधकमाह- ज्ञानं दुष्टमित्यादिना। स्फुरणशून्यंत्विति। स्वगोचरज्ञानाधीनत्वाद्वस्तुसिद्धेः तस्य च ज्ञानस्य दुष्टत्वेन अनंगीकारे सर्वदा अप्रतिभातं जडं जगत् शशविषाणवत् तुच्छमेव भवेदित्यर्थः। विपक्षे बाधकमभिधाय ज्ञानस्य पुनर्दोषासंभवमाशङ्क्य निरस्यति-दुष्टकारणेति। काचकामलादिदोषदूषितचक्षुरादिकरणजनिते शुक्तिरजतादिविभ्रमज्ञाने दोषो दृश्यते, तत्सामान्यात् अन्यत्रापि दोषसंभावना किं न स्यादिति न शंकनीयम्। तत्र हि शुक्त्यधिष्ठानचैतन्याभिव्यञ्जिका तदाश्रयमायामयरजतविषया इदंकारास्पदमनोवृत्त्यवच्छिन्नचैतन्यस्था अविद्यावृत्तिरेव दुष्टकारणजनिता न तु वृत्त्यवच्छिन्नं स्फुरणम्। ततः उपाधिवशादेव स्फटिके लौहित्यमिव स्फुरणे दोषावभासः न तु स्वभावः इत्यर्थः। अन्यथेति। विभ्रमज्ञानगतस्फुरणमात्रस्य स्वाभाविकदुष्टत्वांगीकारे तत्सामान्यात् सर्वमपि ज्ञानं स्वभावतो दुष्टं स्यात्, तथा च पूर्वोक्तो बाधः इत्यभिप्रायः। आनन्दरूपस्यापि स्वतश्शुद्धिमुपपादयति—आनन्दस्त्वित्यादिना। पुरुषैरर्थ्यमानत्वादानन्दस्यापि स्वतश्शुद्धिरंगीकार्या। न ह्यविशुद्धः पदार्थः पुरुषैरर्थ्यते। ब्रह्मादिस्तंबपर्यन्तैरर्थनीयस्य तस्यानन्दस्य नश्वरत्वमाशङ्क्य निरस्यति—विषयेन्द्रियेति। शुभकर्मोपस्थापितविषयेन्द्रियसंप्रयोगवशात् सुखं जन्यते, अनन्तरक्षणे च नश्यति, तथा च सति उत्पत्तिविनाशवत्त्वेन दोषप्रतीतेः सुखस्य दुष्टत्वं इति शङ्काऽभिप्रायः। न च स्वत इति। विषयेन्द्रियसंप्रयोगात् मनोवृत्तिरेव केवलं जन्यते। न तु तद्वृत्त्यवच्छिन्नं सुखम्। अतो व्यञ्जकवृत्तिगतावेव जन्मविनाशौ व्यङ्ग्ये सुखे अवभासेते। अतो न नश्वरत्वदोषप्रसङ्गः स्वाभाविके सुखे इत्यभिप्रायः। आत्मरूपमिति। सुखस्य नित्यात्मरूपत्वादपि जन्मविनाशौ स्वाभाविकौ न स्तः इत्यर्थः। सुखस्यात्मरूपत्वमुपपादयति- प्रेमालम्बनत इति। परप्रेमास्पदत्वादात्मनस्सुखरूपत्वम्। एतदेव सुखात्मनोरैक्यमुपपादयति- आत्मनश्चेति। इह शुभकर्मोपस्थापितविषयेन्द्रियसंपर्कजनितान्तःकरणवृत्त्यवच्छिन्नस्य सुखस्य तदनुभवितुरात्मनश्च उभयोरपि प्रेमास्पदत्वसाम्यात् उपाधिकृतभेदविरहे वास्तवमैक्यमध्यवसेयमित्यर्थः। सत्यादिलक्षणमिति। परिकल्पितभेदभिन्नानां सत्ताज्ञानसुखानां निर्दुष्टत्वेन स्वतश्शुद्धिप्रतिपादनात् कल्पितभेदविरहात् अखण्डैकरसस्वभावेन एतेषामेव आत्मस्वरूपत्वात् सत्यज्ञानादिलक्षणमात्मवस्त्वपि स्वतश्शुद्धमित्यर्थः।

एवं तत्रैव—

शास्त्रं सत्यचिदानन्दमनन्तं वस्तु केवलम् ।
शुद्धं ब्रह्मेति सश्रद्धं प्राह वेदविदां वराः ।
प्रत्यगात्माऽयमद्वन्द्वः साक्षी सर्वस्य सर्वदा ।
सत्यज्ञानसुखानन्तलक्षणः सर्वदाऽनघाः ।
अतोऽयं प्रत्यगात्मैव स्वानुभूत्यैक्यगोचरः ।
शास्त्रसिद्धं परं ब्रह्म नापरं परमार्थतः ।
एवं तर्कप्रमाणाभ्यामाचार्योक्त्या च मानवः ।
अविज्ञाय शिवात्मैक्यं संसारे पतति भ्रमात् ।
शास्त्राचार्योपदेशेन तर्कैश्शास्त्रानुसारिभिः ।
सर्वसाक्षितयाऽऽत्मानं सम्यङ्निश्चित्य सुस्थिरः ।
स्वात्मनोऽन्यतया भातं समस्तमविशेषतः ।
स्वात्ममात्रतया बुद्ध्वा पुनः स्वात्मानमद्वयम् ।
शुद्धं ब्रह्मेति निश्चित्य स्वयं स्वानुभवेन च ।
निश्चयञ्च स्वचिन्मात्रे विलाप्याविक्रियेऽद्वये ।
विलापनञ्च चिद्रूपं बुद्ध्वा केवलरूपतः ।
स्वयं तिष्ठेदयं साक्षाद्ब्रह्मवित्प्रवरो मुनिः ।
ईदृशी परमा निष्ठा श्रौती स्वानुभवात्मिका ।
देशिकालोकनेनैव केवलेन हि सिद्ध्यति ।
देशिकालोकनञ्चापि प्रसादात् पारमेश्वरात् ।
सिध्यत्ययत्नतः प्राज्ञाः सत्यमेव मयोदितम् । इति ।

अस्यार्थः—शास्त्रमिति । "सत्यंज्ञानमनन्तं ब्रह्म" इत्यादिशास्त्रं ब्रह्मणः सच्चिदानन्दैकरसत्वं तात्पर्येण प्रतिपादयति । अयमपि प्रत्यगात्मा अद्वन्द्वः-सांसारिकसुखदुःखादिद्वन्द्वरहितः, तस्य सर्वस्य सर्वदा साक्षी-साक्षाद्द्रष्टा, अत एव सत्यज्ञानादिलक्षणः । ऐवं तत्त्वंपदार्थौ दर्शयित्वा

तदेकत्वलक्षणं वाक्यार्थमाह अतोऽयमिति। प्रत्यगात्मनः परशिवस्वरूपज्ञाननिष्ठायां क्रममाह-शास्त्रेत्यादिना। प्रथमं गुरुशास्त्रोपदेशेन स्वात्मस्वरूपं ज्ञात्वा पुनः शास्त्रानुसारिभिर्न्यायैः देहेन्द्रियादिसाक्षितयाऽवस्थितं चिन्मात्रस्वरूपमात्मानं निश्चित्य स्वात्मनोऽन्यत्वेन प्रतिभातं सकलं साक्ष्यं जगत् स्वाविद्याविलसितत्वेन स्वात्ममात्रतया बुद्ध्वा तथाविधं स्वात्मानं अद्वितीयं परं ब्रह्मेति प्रत्यक्ब्रह्मणोरैक्यं साक्षात्कृत्य तञ्च साक्षात्कारं स्वरूपभूते चिन्मात्रे कतकरजोन्यायेन विलाप्य विलापनक्रियाञ्च अधिष्ठानचिदव्यतिरेकेण बुद्ध्वा केवलं चिदानन्दैकरसरूपेण स्वयं तिष्ठेत् इत्यर्थः।

**अस्नाविरं शुद्धमपापविद्ध**मिति श्रुतिः।

**तलवकारोपनिषदि—**

**श्रोत्रस्य श्रोत्रम्**—श्रोत्रं तावदितरप्रपञ्चवत् दृश्यत्वात् सर्वाधिष्ठानभूते सच्चिन्मात्रे आत्मन्यध्यस्तमित्यविवादम्। तच्च श्रूयते अनेनेति व्युत्पत्त्या श्रवणसाधनमिन्द्रियम्। अधिष्ठानत्वेन तदनुप्रविश्य स्वप्रकाशचिद्रूपः परशिवः तस्य श्रोत्रत्वं-श्रवणसामर्थ्यं प्रयच्छति। सर्वान्तरस्वप्रकाशात्मचैतन्यज्योतिस्समवधानेन हि तत् स्वविषयशब्दाभिव्यञ्जनसमर्थं भवति। अतः श्रोत्रस्यापि श्रवणसामर्थ्यप्रदानात् तथाविधं सर्वान्तरं चैतन्यमेव श्रोत्रस्य श्रोत्रमित्यर्थः। **श्रोत्रस्य श्रोत्रं मनसो मनः** इति श्रुतिः।

**कठवल्लीषु—**

**श्रेयः**—अनपायिसुखावाप्तिलक्षणं श्रेयः। तच्च तस्यैव ब्रह्मणो रूपमिति ब्रह्मैव श्रेयः। **अन्यच्छ्रेयोऽन्यदुतैव प्रेयः** इति श्रुतिः।

**शाश्वतः**—सर्वेषु कालेषु भवतीति शाश्वतः। तदुक्तं **श्रीविष्णुपुराणे—**

**नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वते।**
**तमाद्यन्तमशेषस्य जगतः परमं प्रभुम्।** इति।

**वासिष्ठे—**

**यत्संकोचविकासाभ्यां जगत्प्रलयसृष्टयः।**
**निष्ठा वेदान्तवाक्यानामथ वाचामगोचरः।**

कोटिद्वयान्तरालस्थमथ कोटिद्वयीमयम् ।
यस्य चित्तमयी लीला जगदेतच्चराचरम् ।
यस्य विश्वात्मकत्वेऽपि खण्ड्यते नैकपिण्डता ।
चिन्मात्रं तत् त्वया भद्रे कथ्यते ब्रह्म शाश्वतम् । इति ।

कोटिद्वयान्तरालस्थं-परस्परविरुद्धाः स्थूलत्वसूक्ष्मत्वादयो विशेषाः कोटिद्वयानि, तेषामन्तराले-कोटिद्वयासंस्पृष्टे स्वरूपे वर्तमानम् । अस्थूलमनण्वित्यादिना निखिलकोटिद्वयनिषेधात् । अथच कोटिद्वयीमयं स्थूलसूक्ष्मादिरूपञ्च । ब्रह्मैवेदं सर्वमिति ब्रह्मणः सर्वप्रपञ्चाधिष्ठानतया सर्वात्मकत्वात् । चित्तमयीलीला-चित्तविलासमात्रम् । एकपिण्डता-चिद्घनरूपता। **लैङ्गवासिष्ठेऽपि**—

न जायते म्रियते वाऽपि नात्मा नायं भूत्वा भविता वाऽपि भूयः ।
अजोऽयं नित्यः शाश्वतोऽयं पुराणः स्वभावतो विमलो ब्रह्मभूतः । इति।

उक्तञ्च **भगवद्गीतायाम्**—

न जायते म्रियते वा कदाचित् नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे । इति ।

**अजो नित्यश्शाश्वतोऽयं पुराणः** इति श्रुतिः ।

**शयानः**—निष्क्रियः । **शयानो याति सर्वतः** इति श्रुतिः ।

**शान्त आत्मा**—शान्तः—प्रत्यस्तमिताशेषविशेषरूपः, निर्विकारः सर्वान्तरः साक्षी चिन्मात्ररूपः आत्मा-निरुपचरितप्रत्यगात्मेत्यर्थः । आत्मनः प्रत्यस्तमिताशेषविशेषरूपत्वं **सूत्रकारैरप्युक्तम्**—"दर्शयति चाथो अपि स्मर्यते" इति । विवृतञ्च **भाष्यकारैः**—दर्शयति श्रुतिः परप्रतिषेधेनैव ब्रह्म निर्विशेषं "अथात आदेशो नेतिनेति" "अन्यदेवतद्विदितादथो अविदितादधि" "यतो वाचो निवर्तन्ते" इत्येवमाद्या। बाष्कलिना च बाध्वःपृष्टःसन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते—स होवाच अधीहि भो इति स तूष्णीं बभूव तं ह द्वितीये वा तृतीयेवा वचने उवाच ब्रूमः खलु त्वन्तु न विजानासि उपशान्तोऽयमात्मेति । तथा स्मृतिष्वपि परप्रतिषेधेनैव ब्रह्मोपदिश्यते "ज्ञेयं यत्तत् प्रवक्ष्यामि यत्ज्ञात्वाऽमृतमश्नुते । अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते" इत्येवमाद्यासु । तथा विश्वरूपधरो नारायणः नारदमुवाचेति स्मर्यते—

**माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।**
**सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि।** इति।

**वासिष्ठेऽपि—**

**वस्तुतस्तु न जातोऽसि न मृतोऽसि कदाचन।**
**शुद्धविज्ञानरूपस्त्वं शान्त आत्मनि तिष्ठसि।** इति।

श्रुतिस्तु—**ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि।**

**शाश्वतं सुखम्**—सुखं द्विविधं नित्यमनित्यञ्चेति। तत्र यत् शब्दस्पर्शादिविषययोगजं सुखं तदनित्यं शुभकर्मोपस्थापितबुद्धिवृत्त्यनुविधायित्वेन तस्य क्षणिकत्वात्। यत्तु पुनः स्वरूप-सुखं तन्निरतिशयं शाश्वतमित्यर्थः। तदुक्तं **वासिष्ठे—**

**सर्वं शान्तं निरालंबं व्योमस्थं शाश्वतं शिवम्।**
**अनामयमनाभासमनामकमकारणम्।**
**न सन्नासन्नमध्यान्तं न सर्वं सर्वमेव तत्।**
**मनोवचोभिरग्राह्यं शून्याच्छून्यं सुखात् सुखम्।** इति।

सर्वं-सर्वात्मकम्। शान्तं-निर्विकारं। निरालंबं-निर्विषयम्। व्योमस्थं-चिदाकाशरूपे स्वात्मनि वर्तमानम्। अनामयं-निर्दोषम्। अनाभासं-अनारोपितम्। अनामकं-नामजात्यादि-रहितम्। अकारणं-कारणरहितम्। न सत्-कार्यम्। न असत्-कारणम्। नमध्यान्तं-मध्यान्तशून्यम्। न सर्वं कल्पितनामरूपप्रपञ्चविलक्षणत्वात्। सर्वमेव तु सर्वप्रपञ्चाधिष्ठानत्वात्। शून्यादाकाशादेरपि शून्यम्। सुखात् विषयसुखादपि सुखं निरतिशयानन्दरूपत्वात्।

**तेषां सुखं शाश्वतं नेतरेषा**मिति श्रुतिः।

**शाश्वती शान्तिः**—नित्योपरतिरूपा। नित्यमुक्तं ब्रह्मेत्यर्थः। **तेषां शान्तिश्शाश्वती नेतरेषा**मिति श्रुतिः।

**प्रश्नोपनिषदि—**

**शुभ्रम्**—प्रकाशस्वरूपम्। **स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्ये**ति श्रुतिः।

शान्तम्—सर्वविकारशून्यम्। तदुक्तं सूतसंहितायाम्—

शब्दहीनाय शान्ताय शब्दलभ्याय साक्षिणे।
सर्वोपाधिविहीनाय स्वयम्भानाय वै नमः। इति।

पाराशरोपपुराणेऽपि—

अप्रमेयाय शान्ताय स्वप्रकाशाय साक्षिणे।
स्वस्वरूपैकनिष्ठानां मुक्तिदाय नमो नमः। इति।

वासिष्ठेऽपि—

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम्।
शान्त एव चिदाकाशे स्वच्छे समसमात्मनि।
समग्रशक्तिखचिते ब्रह्मेतिकलिताभिधे।
निर्णीय केचिच्छून्यत्वं केचिद्विज्ञानमात्रताम्।
केचिदीश्वररूपत्वं विवदन्ते परस्परम्।
सर्वमेतत् परित्यज्य महामौनी भवानघ।
निर्वाणवान्निर्मननः क्षीणचित्तः प्रशान्तधीः।
आत्मन्येव प्रशान्तात्मा मूकान्धबधिरोपमः।
नित्यमन्तर्मुखो भूत्वा त्वमास्वान्तःप्रपूर्णधीः। इति।

अस्यार्थः—शान्तमक्लममिदं ब्रह्मैवास्ति अविद्या माया तत्कार्यञ्च नास्तीति सर्वप्रपञ्चापह्नव एव अध्यात्मशास्त्राणां सिद्धान्तः। शान्तादिलक्षणे ब्रह्मेतिकलिताभिधे चिदाकाशे एव केचिद्वादिनः शून्यत्वं केचिद्विज्ञानमात्रतां केचित्पुनरीश्वररूपत्वञ्च निर्णीय परस्परं विवदन्ते। त्वं तु सर्वमेव विवादं परित्यज्य निर्मननः - निस्संकल्पविकल्पः क्षीणचित्तः - निर्वासनचित्तः प्रशान्तधीश्च सन् महामौनी-बाह्यमननुसन्दधन् निर्वाणवान् जीवन्मुक्तो भव। त्वं नित्यमन्तर्मुखो भूत्वा आत्मन्येव प्रशान्तात्मा-निर्वृतचित्तः मूकान्धबधिरोपमः-चित्तस्य अन्तर्मुखत्वात् निष्फलनिवृत्तबाह्येन्द्रियव्यापारः अन्तःप्रपूर्णधीः आस्व-तिष्ठेति। तत्रैव—

महाप्रलयसंपत्तावसत्तां समुपागते ।
अशेषदृश्ये सर्गादौ शान्तमेवावशिष्यते । इति ।

तत्रैव—

असदाभासमच्छात्म ब्रह्मास्तीह प्रबृंहितम् ।
बृहच्चिद्भैरववपुरानन्दाभिधमव्ययम् ।
तस्य यत् सममापूर्णं शुद्धसत्वमचिह्नितम् ।
तद्विदामप्यनिर्देश्यं तच्छान्तं परमं पदम् । इति ।

असदाभासं-जगदाकारेणावभासमानं अच्छात्म - निष्कलंकस्वरूपं बृहच्चिद्भैरववपुः - बृहत् व्यापकं चिद्रूपं भैरवं - नियामकञ्च वपुर्यस्य तादृशं प्रबृंहितं-परिपूर्णं ब्रह्मैवास्तीत्यन्वयः। तस्येति—तस्य ब्रह्मणः यच्छुद्धसत्वं - विशुद्धज्ञानात्मकं अचिह्नितं निर्विशेषं अत एव तद्विदां - ब्रह्मविदामपि निर्देष्टुमशक्यं निस्तरंगसागरवत् समं परिपूर्णञ्च यद्रूपं तन्निर्विकारं परं पदमित्यन्वयः । तत्रैव —

अस्ति पुत्रातिविततो देशो विपुलकोटरः ।
त्रैलोक्यानां सहस्राणि यत्र मान्ति बहून्यपि ।
यत्र पृथ्वी न चाकाशः सागरा न च नाद्रयः ।
न वनानि न तीर्थानि न नद्यो न सरांसि च ।
एक एवास्ति सुमहांस्तत्र राजा महाद्युतिः ।
सर्वदृक् सर्वगश्शान्तः स च तूष्णीमवस्थितः । इति ।

देशो मोक्षः, राजा आत्मा ।

**यत्तच्छान्तमजरममृतमभयं परञ्चेति** इति श्रुतिः ।

**माण्डूक्योपनिषदि**—

**शिवः**—मंगलस्वरूपः, अवस्थात्रयविनिर्मुक्तः । नामस्मृतिमात्रेण सर्वेषां पावनत्वाद्वा शिवः । तदुक्तं **श्रीमद्भागवते**—

यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसंगादघमाशु हन्ति तत् ।
पवित्रकीर्तिं तमलंघ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः । इति ।

उक्तञ्च शिवशब्दस्य माहात्म्यम्—

विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ ।
तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम् । इति ।

ब्रह्मवैवर्ते—

सर्वासामेव विद्यानामुत्कृष्टा श्रुतिरुच्यते ।
ऋग्यजुस्सामवेदानां शतरुद्रीयमुत्तमम् ।
एकादशानुवाकानामष्टमस्त्विष्टदायकः ।
त्रयस्त्रिंशन्मनूनान्तु षण्मन्त्रास्सिद्धिदायकाः ।
षण्णाम्मनूनां द्वावेव तयोराद्यः प्रशस्यते ।
तन्मध्ये परतत्वं स्याच्छिव इत्यक्षरद्वयम् ।
पञ्चाक्षरी शिवपदेन विभाति रुद्राध्यायस्तया स्फुरति तेन चतुर्थकाण्डः ।
काण्डेन सर्वयजुरेव विभाति तेन ऋक्साममध्यमणिना च
विभान्ति वेदाः । इति ।

ब्रह्माण्डपुराणे अष्टाविंशाध्याये ब्रह्माणं प्रति नन्दिकेश्वरवचनम्—

शिव एव परं ब्रह्म कारणञ्जगतोऽव्ययम् ।
ततो विष्णुस्ततस्त्वञ्च ब्रह्मन् सर्वमभूज्जगत् । इति ।

आदित्यपुराणे द्वितीयाध्याये मनुं प्रति सूर्यवचनम्—

तत्त्वं हि यद्भगवतो रूपमीशस्य शूलिनः ।
विश्वं तेनाखिलं व्याप्तं न नानेत्यब्रवीच्छ्रुतिः ।
स एवात्मा समस्तानां भूतानां मनुजाधिप ।
चैतन्यरूपो भगवान् महादेवः सहोमया ।
एकोऽपि बहुधा भाति लीलया केवलं शिवः ।
ब्रह्मविष्ण्वादिरूपेण देवदेवो महेश्वरः ।
पृष्टो ब्रह्मादिभिर्देवैः कस्त्वं देवेति शङ्करः ।
अब्रवीदहमेवैको नान्यः कश्चिदिति श्रुतिः । इति ।

तत्रैव—

न तस्मादधिकः कश्चिन्न ज्यायान्न समः कुतः ।
तेनेदमखिलं पूर्णं शंकरेण महात्मना ।
मुमुक्षुभिस्सदा ध्येयः शिव एकः शिवंकरः ।
सर्वमन्यत् परित्यज्य मुक्त एव विमुच्यते ।
न तस्य कर्म कार्यं वा बन्धमुक्ती महेशितुः ।
आनन्दरूपया देव्या क्रीडति स्म महेश्वरः ।
अक्षरं परमं ब्रह्म शैवज्ज्योतिरनामयम् ।
यस्तन्न वेद किं वेदैर्ब्राह्मणस्य भविष्यति ।
नान्यवेद्यः स्वयञ्ज्योती रुद्र एको निरञ्जनः ।
तस्मिन् ज्ञातेऽखिलं ज्ञातमित्याहुर्वेदवादिनः । इति ।

तस्मिन्नेव पुराणे—

अहं ब्रह्मा च विष्णुश्च शक्रश्चान्ये दिवौकसः ।
अन्यैरुपायैर्विविधैश्शम्भोर्दर्शनकांक्षिणः ।
न दानैर्न तपोभिर्वा अश्वमेधादिभिर्मखैः ।
भक्त्यैव नान्यथा राजन् ज्ञायते भगवाञ्छिवः । इति ।
यो व्योम्नि तिष्ठति शिवो यं व्योम न विवेद हि ।
व्योम रूपं भवेद्यस्य तस्मै व्योमात्मने नमः ।
यः सूर्ये तिष्ठति शिवो न सूर्यो वेत्ति शङ्करम् ।
यस्य सूर्यो भवेद्रूपं तस्मै सूर्यात्मने नमः ।
यश्चन्द्रे तिष्ठति शिवो न चन्द्रो वेत्ति शङ्करम् ।
यस्य चन्द्रो भवेद्रूपं तस्मै चन्द्रात्मने नमः । इति ।

तत्रैव चतुःपञ्चाशाध्याये हैमवती हिमवन्तं प्रत्याह—

सिद्धमेवावयोरूपं वेदान्तार्थविचारणात् ।
यदेतदैश्वरं तेजस्तन्मां विद्धि महेश्वरीम् ।

सर्वभूतात्मनश्शक्तिं विश्वं यस्मिन् प्रतिष्ठितम् ।
अहं सर्वान्तरा शक्तिर्माया मायी महेश्वरः ।
नावयोर्विद्यते राजन् भेदो वै परमार्थतः । इति ।
कूटस्थमचलं सूक्ष्मं सत्यं निर्गुणमव्ययम् ।
आनन्दमक्षरं ब्रह्म तात जानीहि मत्पदम् ।
तत् पदं ते प्रपश्यन्ति येषां भक्तिर्मयि स्थिरा ।
नान्यथा कर्मकाण्डैश्च तपोभिर्ध्यानधारणैः ।
शिवस्य परमा शक्तिर्नित्यानन्दमयी ह्यहम् । इति च ।
एवं देव्याः प्रसादेन हिमवान् पर्वतेश्वरः ।
लब्ध्वा माहेश्वरं ज्ञानं जीवन्मुक्तस्तदाऽभवत् ।
अपश्यदखिलं विश्वमुमामाहेश्वरात्मकम् ।
नित्यानन्दं निर्विभागमात्मानं स चिदात्मकम् ।
मानामानादिरहितं भेदाभेदविवर्जितम् ।
बाह्याभ्यन्तरनिर्मुक्तं शुद्धं निर्गुणमव्ययम् ।
न समीपं न दूरस्थं न हृत्स्थं न च कण्ठगम् ।
नापि नासाग्रगं विप्र न च भ्रूब्रह्मरन्ध्रगम् ।
न नाडित्रयमध्यस्थं न स्थूलं नापि वा कृशम् ।
न दीर्घं नापि वा ह्रस्वं न पीतं नापि लोहितम् ।
न नीलं न च कृष्णं न शुक्लं नापि कर्बुरम् ।
पाणिपादविनिर्मुक्तमश्रोत्रं तदचक्षुषम् ।
अनासिकमजिह्वञ्च मनोबुद्धिविवर्जितम् ।
नाधारस्थं न नाभिस्थं न हृत्स्थं न च कण्ठगम् ।
नापि साहस्रगं विप्र न च हृद्ब्रह्मरन्ध्रगम् ।
न नाडित्रयमध्यस्थं द्वादशान्तगतं न च ।

ऊर्णातन्तुनिभं नैव विद्युत्पुञ्जनिभं न च ।
सर्वोपाधिविनिर्मुक्तश्चैतन्यं सर्वगं शिवम् । इति ।

तत्रैव त्रिषष्टितमाध्याये—

शुभानामशुभानाञ्च कर्मणां राशिसञ्चयम् ।
करोति भस्मसाद्भक्तिः शिवस्याग्निरिवेन्धनम् ।
स्वेच्छया वा यदि भवेद्भवभक्तिसमन्वितः ।
न तत्समश्चतुर्वेदी नाग्निष्टोमादिकर्मकृत् ।
अपि पापानि सर्वाणि सदा कुर्वन्नरो यदि ।
लिप्यते न स पापौघैः भक्तो यदि भवेच्छिवे ।
शिवभक्ता महात्मानो मुच्यन्ते ते न संशयः । इति ।
शिवे मतिं प्रकुर्वाणः संसारादतिभीषणात् ।
मुच्यते मुनिशार्दूल मतिश्शर्वेऽतिदुर्लभा । इति ।
भक्तिश्शिवे यदि भवेन्न कस्मात् कस्यचित् भयम् ।
भवार्णवं तरत्येव प्रसादात् परमेष्ठिनः । इति च ।

पाद्मे पुराणे सप्तत्रिंशाध्याये श्रीविष्णुः—

एक एव शिवो ज्यायान् द्विधा च बहुधा श्रुतः ।
वेदेषु च पुराणेषु सांगोपांगेषु गीयते ।
प्रधानाव्यक्तपुरुषकालानां परमो हि सः :
ज्यायान् स एव षट्त्रिंशः शिव इत्यभिधीयते ।
तस्मादेव जगत्सर्वं सर्गकाले प्रजायते ।
तस्मिन्नेव शिवे सर्वं प्रलये संप्रलीयते ।
सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि पञ्चैव ज्ञेयश्चैव महेश्वरः ।
स ईशानः स वै विष्णुर्ब्रह्मेन्द्ररविवह्नयः ।

क्षेत्रज्ञोऽजोऽष्टमूर्तिश्च भवानीवल्लभो हरः ।
ब्रह्मविष्ण्विन्द्रदेवाद्याः पितरोऽथ महर्षयः ।
पूजयन्ति सदा भक्त्या शिवं सिद्धादयो नराः । इति ।

स्कान्दे

नमश्शिवाय स्वरसानुभूतये वाचामतीताय मनोऽतिगाय ते ।
आनन्दविज्ञानघनाय शंभवे नमः परस्तात् परतः परात्मने ।
परापरस्वरूपाय शान्त्यतीताय ते नमः ।
नमश्शिवाय शुद्धाय ब्रह्मणे बृंहितात्मने ।
ज्ञानानन्दस्वरूपाय सत्यायाखण्डहेतवे । इति ।

श्रीमहाभारते कैरातपर्वणि युधिष्ठिरं प्रति अर्जुनवचनम्—

हृत्कण्ठतालुभ्रूमध्यद्वादशान्तपदेष्वपि ।
यथातत्त्वस्वरूपेण तत्त्वातीतं परात्परम् ।
ज्योतिर्मयं विरूपाक्षमक्षरं ब्रह्म निर्मलम् ।
चिन्मयं देवदेवेशं त्रिपुरान्तकमीश्वरम् ।
पिनाकिनं शिवं ध्यात्वा लिंगे सन्ध्यालयेऽयजम् । इति ।

तत्रैव द्रोणपर्वणि चतुश्चत्वारिंशाध्याये—

वासुदेवस्तु तं दृष्ट्वा जगाम शिरसा क्षितिम् ।
पार्थेन सह धर्मात्मा गृणन् ब्रह्म सनातनम् ।
लोकादिं विश्वकर्माणमजमीशानमव्ययम् ।
तपसः परमञ्ज्योतिः खं वायुर्ज्योतिषां गतिम् ।
स्रष्टारं वारिधाराणां भुवश्च प्रकृतिं पराम् ।
देवदानवयक्षाणां मनुष्याणाञ्च शासकम् ।
योगिनां परमं ब्रह्म व्यक्तं वेदविदां निधिम् ।
परापरस्य स्रष्टारं प्रतिहर्तारमेव च ।

कालज्ञेयं महात्मानं शुक्रसूर्यगुणोदयम् ।
ववन्दतुस्तदा कृष्णौ वाङ्मनोबुद्धिकर्मभिः ।
यं प्रपश्यन्ति विद्वांसः सूक्ष्माध्यात्मनिदर्शनात् ।
तमजं कारणात्मानं जग्मतुश्शरणं शिवम् । इति ।

तत्रैव—

द्रोणकर्णकृपैर्गुप्तां महेष्वासैः प्रहारिभिः ।
कस्तां सेनां महाराजन् मनसाऽपि प्रधर्षयेत् ।
ऋते देवान्महेष्वासात् बहुरूपान्महेश्वरात् ।
स्थातुमुत्सहते कश्चित् न तस्मिन्नग्रतः स्थिते ।
न हि भूतं समं तेन त्रिषु लोकेषु विद्यते ।
गन्धेनापि हि संग्रामे तस्य क्रुद्धस्य शत्रवः ।
विसंज्ञा हतभूयिष्ठा वेपन्ति च तपन्ति च ।
तस्मै नमस्तु कुर्वाणा देवास्तिष्ठन्ति वै दिवि ।
ये चान्ये दानवा लोके ये च स्वर्गजितो नराः ।
ये भक्ता वरदं देवं शिवं रुद्रमुमापतिम् ।
इह लोके सुखं प्राप्य ते यान्ति परमां गतिम् । इति ।

अन्यत्रापि—

ईदृशस्स शिवो देवो भूयांश्च भगवानजः ।
न हि सर्वे मया शक्या वक्तुं भगवतो गुणाः ।
सर्वैर्ग्रहैर्गृहीतान् वै सर्वपापसमन्वितान् ।
स मोचयति सुप्रीतः शरण्यः शरणागतान् ।
आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान् ।
स ददाति मनुष्येभ्यः स च न क्षीयते पुनः । इति ।
शिवमिच्छन् मनुष्याणां तस्मादेष शिवः स्मृतः । इति च ।

स्कान्दे पुराणे शिवमन्त्रस्य माहात्म्यम्—

वेदेषु शास्त्रेषु शिवागमेषु सारं समुद्धृत्य जगद्धिताय ।
भक्तप्रियः पार्वतिवल्लभश्च पञ्चाक्षरं प्राह परश्शिवोऽसौ ॥
कृत्वा सर्वाणि पापानि हत्वा च भुवनत्रयम् ।
सकृत् पञ्चाक्षरं जप्त्वा सर्वपापैः प्रमुच्यते ।
नमश्शिवायेति यदि मन्त्रोऽयं वशगा च वाक् ।
नरकेषु नराः केचित् पतन्तीत्यति साहसम् । इति ।

तत्रैव कालिकाखण्डे भृंगीशं प्रति सनत्कुमारवचनम्—

सर्वदेवान् परित्यज्य शरणं भज शङ्करम् ।
प्रदक्षिणञ्च तस्यैव कुरु कार्तार्थ्यमाप्स्यसि ।
सर्वदेवान् परित्यज्य गन्तव्यः शरणं शिवः ।
इत्यथर्वशिरः प्राह तत्कुरु त्वं प्रदक्षिणम् ।
उपदिष्टो मयाऽर्थोऽयं त्रिवाचा च प्रदक्षिणम् ।
कुरुष्व सर्वदेवांस्त्वं परित्यज्य शिवं व्रज ।
शिव एव गतिश्शिव एव गुरुः शिव एव परात्परदैवतम् ।
शिव एव पिता जननी च शिवः शिव एव सदा परितः प्रचर । इति ।

तत्रैव कमलालयमाहात्म्ये विश्वामित्रः—

ब्रह्मेन्द्रपूज्याय सुरेश्वराय तस्मै नमः पाशविनाशनाय ।
तस्मै नमश्शूलवरायुधाय पिनाकहस्ताय नमश्शिवाय ।
नमोऽस्तु पाशाङ्कुशधारिणे ते नमोऽस्तु वज्रायुधधारिणे वै ।
नमोऽस्तु नेत्रत्रयभूषणाय देवादिदेवाय नमश्शिवाय ।
नमोऽस्तु सृष्टिस्थितिहेतुभूतसंहाररूपाय नमश्शिवाय ।
नमोऽस्तु भोगीन्द्रविभूषिताय गजेन्द्रकृत्तिच्छदनप्रियाय ।
नमोऽस्तु पद्मोत्पलमालिकाय भक्तानुरागाय नमश्शिवाय । इति ।

तत्रैव उमामहेश्वरसंवादे—

ततः शुभ्रजले स्नात्वा शुक्लांबरधरो व्रती ।
पञ्चाक्षरेण मन्त्रेण शिवं ध्यात्वा शिवप्रदम् ।
चतुर्भुजमुदारांगं शार्दूलत्वगलंकृतम् ।
चन्द्रचूडं शरच्चन्द्रचन्द्रिकाधवलाकृतिम् ।
गङ्गाधरं विरूपाक्षं चतुर्वर्गफलप्रदम् ।
यावच्छक्तिधृतप्राणश्शिवध्यानपरो भव । इति ।

वासिष्ठलैङ्गे द्वादशाध्याये शिवमन्त्रं प्रकृत्य—

यः प्रातरुत्थितो नित्यं जपेदष्टोत्तरं शतम् ।
तस्य सर्वाणि पापानि नश्यन्त्येव न संशयः ।
शिवेति वाचं यो नित्यं चण्डालोऽपि वदेन्मुदा ।
सह तेन वदेद्वाचं सह तेन वसेत् सदा ।
यश्चतुर्वेदविन्नित्यं शिवशब्दविवर्जितः ।
तेन संभाषणं नित्यं न कुर्यान्मोहतोऽपि वा ।
यदि कुर्यात्प्रमादेन प्रायश्चित्तीभवेद्द्विजः ।
नित्यमष्टसहस्रं यो जपेन्मन्त्रं समाहितः ।
ब्रह्महत्यादिकं पापं षण्मासादस्य नश्यति ।
व्याधयश्च विनश्यन्ति मन्त्रस्यास्य जपेन च ।
अणिमादिमहासिद्धिर्मन्त्रेणानेन सिद्ध्यति ।
बहुनोक्तेन किं राजन् मुक्तिस्तस्य करस्थिता ।
तस्मादेतं महामन्त्रं धारयात्र विशेषतः । इति ।

तत्रैव—

शिव एव परं तत्त्वं यस्मान्नास्त्यधिकं मुने ।
तल्लक्षणं महाप्राज्ञ शिरसि श्रूयते श्रुतेः ।

सत्यज्ञानसुखानन्तं जगत्सर्गादिकारणम् । इति ।

आचार्याच्छ्रुतवेदान्तो मत्प्रसादान्महामुने ।
सर्वलोकविधातारं सर्वज्ञं सर्वकारणम् ।
सत्यबोधसुखानन्तमादिमध्यान्तवर्जितम् ।
अप्रमेयमनौपम्यमनिर्देश्यं शिवाभिधम् ।
मामपश्यदयत्नेन मुने स्वात्मतया सदा । इति ।

शिवधर्मे सनत्कुमारं प्रति नन्दिकेश्वरवचनम्—

जातेनात्मद्रुहा येन नार्चितो भगवाञ्छिवः ।
सुचिरं स चरत्यस्मिन् संसारे दुःखसागरे ।
सा हानिस्तन्महाच्छिद्रं स मोहः साऽन्धमूकता ।
यत् क्षणं वा मुहूर्तं वा शिवमेकं न चिन्तयेत् ।
दुर्लभं प्राप्य मानुष्यं येऽर्चयन्ति सदाशिवम् ।
तेषां हि सफलञ्जन्म कृतार्थास्ते नरोत्तमाः । इति ।

भविष्यत्पुराणे रुद्रकोटिमाहात्म्ये रुद्रकोटयः—

नमश्शिवाय महसे भुवनान्यधितस्थुषे ।
अगम्याय नमो वाचां भक्तिगम्याय भूयसे ।
शङ्कराय महेशाय शिवाय परमात्मने ।
सर्वात्मने नमस्तुभ्यं शर्वाय शशिमौलये ।
कालारये नमस्तुभ्यं नमस्ते कामरूपिणे ।
कालद्रुहे कालपेष्ट्रे पुरुषाय पुरारये । इति ।

शिवरहस्ये दशमाध्याये देवीं प्रति शिववचनम्—

निर्गुणं निष्कलं शान्तं शिवमक्षरमव्ययम् ।
तुरीयमनघं मत्वा स्तुवन्ति शिवमेव माम् । इति ।

नित्यं शिवकथास्वेव सक्तस्त्वकरणा मुदा ।
शिवनाम विहायान्यन्न वदन्त्येव सर्वदा । इति च ।

तस्मिन्नेवाध्याये महालिंगप्रादुर्भावानन्तरं विष्णुः—

महेशानन्ताद्य त्रिगुणरहितामेयविलसत्
स्वराकारापारामितगुणगणाकारनिवृते ।
निराधाराधारामरवर निराकार परम
प्रभापूराकारावर पर नमो वेद्य शिव ते ।
यदज्ञात्वा तत्त्वं सकलमपि संसारपतितं
जगज्जन्मावृत्तिं वहति सततं दुःखनिलयम् ।
यदेव ज्ञात्वैवावहति च निवृत्तिं परतरां
न जाने तत्तत्त्वं परमिति नमो वेद्य शिव ते ।
तदेवं यद्रूपं निगमनिलयं मंगलकरं
न दृष्टं केनापि ध्रुवमिति विजाने शिव विभो ।
ततश्चित्ते शंभो न हि मम विषादोऽद्य विकृतिः
प्रयत्नाल्लभ्येऽस्मिन्न किमपि नमः पूर्ण शिव ते ।
त्वमिन्दुर्भानुस्त्वं हुतभुगसि वायुश्च सलिलं
त्वमेवाकाशोऽसि क्षितिरसि तथात्माऽसि भगवन् ।
ततस्सर्वाकारस्त्वमसि भवतो भिन्नमणु वा
न तत् सत्यं सत्यं त्रिणयन नमोऽनन्त शिव ते ।
विधुं धत्से नित्यं शिरसि मृदुकण्ठेऽपि गरलं
नवं नागाहारं भसितममलं भासुरतनौ ।
करे शूलं फाले ज्वलनमनिशं तत्किमिति ते
न तत्त्वज्ञानेऽहं भव हर नमः स्तुत्य शिव ते ।
तवापांगस्यन्दो यदि भवति भव्यश्शुभतरः

कदाचित्कस्मिंश्चिल्लघुतरनरे विप्र भवति ।
स एवैतल्लोकान् विरचयितुमल्पोऽपि सुमहान्
कृपाधारो धत्ते सुरवर नमोऽनन्त शिव ते ।
कदाचिद्गण्यन्ते निबिडनिपतद्वृष्टिकणिकाः
कदाचिन्नक्षत्राण्यपि सिकतलेशाः कुशलिना ।
अनन्तैराकल्पं शिवगुणगणाश्चारुरसनै
र्न शक्यन्ते नूनं गणयितुमुषित्वाऽपि सततम् ।
मया विज्ञानेशानिशमपि कृता ये तु मनसा
सकामेनामेयाः सततमपराधा बहुविधाः ।
त एव क्षन्तव्याः क्वचिदपि शरीरेण वचसा
कृता एते नूनं शिव शिव कृपासागर विभो ।
इति स्तुत्वा शिवं विष्णुः प्रणम्य च मुहुर्मुहुः ।
निर्विण्णो न्यवसत्तत्र कृताञ्जलिपुटः स्थितः ।
तदा शिवश्शिवं रूपमादायोवाच सर्वगः ।
भीषयन्निखिलान् भूतान् घनगंभीरया गिरा ।
मदीयं रूपममलं कथं ज्ञेयं भवादृशैः ।
यन्न वेदैरपि ज्ञातमित्युक्त्वाऽन्तर्दधे शिवः ।
ततः पुनर्विधिस्तत्र तपस्तप्तुं समारभत् ।
विष्णुश्च शिवतत्त्वस्य ज्ञानार्थमतियत्नतः ।
तादृशं शिवमेवाच्छं पूजयित्वा वसाम्यहम् । इति ।

कूर्मपुराणे पञ्चविंशाध्याये श्रीकृष्णः—

त्वत्पादे कुसुममथापि पत्रमेकं दत्वाऽसौ भवति विमुक्तसर्वबन्धः ।
सर्वापत् प्रणुदति सिद्धयोगिदृष्टे स्मृत्वा ते पदयुगले भवत्प्रसादात् ।

तस्याशेषविभागहीनममलं हृद्यन्तरावस्थितं
तत्त्वञ्ज्योतिरनन्तमेकममलं सत्यं परं सर्वगम् ।
स्थानं प्राहुरनादिमध्यनिधनं यस्मादिदं जायते
नित्यं त्वामुपयाति सत्यविभवं विश्वेश्वरं तं शिवम् । इति ।

अत्रैव षड्विंशाध्याये मार्कण्डेयं प्रति श्रीकृष्णवचनम्—

अनादिमलसंसाररोगवैद्याय शंभवे ।
नमश्शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ।
निर्विकाराय नित्याय सत्यायामलतेजसे ।
नमश्शिवाय शान्ताय ब्रह्मणे लिंगमूर्तये ।
वेदान्तसाररूपाय कालरूपाय धीमते ।
नमश्शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ।
आदिमध्यान्तशून्याय स्वभावामलमूर्तये ।
नमश्शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ।
ज्वालामालावृतांगाय ज्वलनस्तंभमूर्तये ।
नमश्शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ।
महादेवाय महते ज्योतिषेऽनन्तमूर्तये ।
नमश्शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ।
प्रलयार्णवसंस्थाय प्रजोत्पत्तेस्तु हेतवे ।
नमश्शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ।
प्रधानपुरुषेशाय व्योमरूपाय ते नमः ।
नमश्शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्तये ।
लिंगाष्टकमिदं पुण्यं यः पठेच्छिवसन्निधौ ।
शिवलोकमवाप्नोति शिवेन सह मोदते । इति ।

वायवीयसंहितायाम्—

नमश्शिवाय सांबाय सगणाय ससूनवे ।
प्रधानपुरुषेशाय सर्गस्थित्यन्तहेतवे ।
शक्तिरप्रतिघा यस्य चैश्वर्यश्चापि सर्वगम् ।
असंगत्वं विभुत्वञ्च स्वभावं संप्रचक्षते ।
तमजं विश्वकर्माणं शाश्वतं ध्रुवमव्ययम् ।
महादेवं महात्मानं व्रजामि शरणं शिवम् । इति ।

तत्रैव—तस्माद्विमुक्तिमन्विच्छन् शिवमेव समाश्रयेत् ।
तमाश्रित्यैव देवानामपि मुक्ति र्नचान्यथा । इति ।

द्वितीयाध्याये—

न चोदयोऽस्तं न दिवा न रात्रिर्न सदप्यसत् ।
केवलश्शिव एवैको यस्मात् प्रज्ञा विनिस्सृता ।
यस्य पुंसः परा शक्तिर्भावगम्या महीयसी ।
निर्गुणा स्वगुणैरेव निगूढा निष्कला शिवा । इति।
सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवांस्तस्मात् सर्वगतश्शिवः । इति ।
ब्रह्माणं विदधे पूर्वं ब्रह्म चोपदिशत् स्वयम् ।
यो देवस्तमहं बुद्ध्वा स्वात्मबुद्धिप्रसादतः ।
मुमुक्षुरस्मात् संसारात् प्रपद्ये शरणं शिवम् ।
निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ।
यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति । इति ।

चतुर्थाध्याये— अतश्च संक्षेपमिमं शृणुध्वं शिवः परस्तात्प्रकृतेश्च पुंसः।
स सर्गकाले तु करोति सर्वं संहारकाले पुनराददाति। इति।

पञ्चमे—न यस्य कालो न च बन्धमुक्ती न यः पुमान्न प्रकृतिर्न विश्वम्।
विचित्ररूपाय शिवाय तस्मै नमः परस्मै परमेश्वराय। इति।
देवो गुणत्रयातीतः चतुर्व्यूहो महेश्वरः।
सकलस्सकलाधारश्शक्तेरुत्पत्तिकारणम्।
सोऽयमात्मत्रयस्यास्य प्रकृतेः पुरुषस्य च।
लीलाकृतजगत्सृष्टिरीश्वरत्वे व्यवस्थितः।
यस्सर्वस्मात्परो नित्यो निष्कलः परमेश्वरः।
स एवायं तदाधारस्तदात्मा तदधिष्ठितः।
तस्मान्महेश्वरश्चैव प्रकृतिः पुरुषस्तथा।
सदाशिवो भवो विष्णुर्ब्रह्मा सर्वं शिवात्मकम्। इति।

त्रयोदशे—तं दृष्ट्वा परमं देवं तमसः परमव्ययम्।
अद्वितीयमनिर्देश्यमदृश्यमकृतात्मभिः।
सर्वलोकविधातारं सर्वलोकेश्वरेश्वरम्।
सर्वलोकविधायिन्या शक्त्या परमया युतम्।
अप्रतर्क्यं निराभासममेयमजरं ध्रुवम्।
अचलं निर्गुणं शान्तमनन्तमहिमास्पदम्।
सर्वगं सर्वदं शान्तं सदसद्व्यक्तिवर्जितम्।
सर्वोपमाननिर्मुक्तं शरण्यं शाश्वतं शिवम्। इति।

अष्टाविंशे—

अनादिमलसंश्लेषप्रागभावात्स्वभावतः।
अत्यन्तपरिशुद्धात्मेत्यतोऽयं शिव उच्यते।
अथवाऽशेषकल्याणगुणैकघन ईश्वरः।
शिव इत्युच्यते सद्भिः शिवशब्दार्थवेदिभिः। इति।

त्रिंशेऽध्याये उपमन्युं प्रति मातृवचनम्—

यद्यस्तीति न वक्तव्यं पुत्र सन्दिग्धवद्वचः ।
सर्वस्मादधिकोऽस्त्येव शिवः परमकारणम् ।
तत्कृतं हि जगत् सर्वं ब्रह्माद्यास्तस्य किंकराः ।
तत्प्रसादकृतैश्वर्याः दासास्तस्य वयं प्रभोः ।
स्वल्पान् देवान् परित्यज्य मनसा कर्मणा गिरा ।
तमेव सांगं सगणं भज भावपुरस्सरम् ।
तस्य देवादिदेवस्य शिवस्य शिवदायिनः ।
साक्षान्नमश्शिवायेति मन्त्रोऽयं वाचकः स्मृतः ।
सप्तकोटिमहामन्त्राः सर्वे सप्रणवाः परे ।
तस्मिन्नेव विलीयन्ते पुनस्तस्माद्विनिर्गताः ।
सप्रसादाश्च ते मन्त्राः स्वाधिकाराद्यपेक्षया ।
सर्वाधिकारस्त्वेकोयं मन्त्र एवेश्वराज्ञया ।
यथा निकृष्टानुत्कृष्टान् सर्वानप्यात्मनश्शिवः ।
क्षमन्ते रक्षितुं तद्वन्मन्त्रोऽयमपि सर्वदा ।
प्रबलस्त्वत एवायम्मन्त्रो मन्त्रान्तरादपि ।
सर्वरक्षाक्षमो ह्येष नापरः कश्चिदिष्यते ।
तस्मान्मन्त्रान्तरं त्यक्त्वा पञ्चाक्षरपरो भव इति ।

उपरिभागे द्वितीयाध्याये श्रीकृष्णं प्रत्युपमन्युः—

ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः ।
पशवः परिकीर्त्यन्ते संसारवशवर्तिनः ।
तेषां पतित्वाद्देवेशः शिवः पशुपतिःस्मृतः ।
मलमायादिभिः पाशैः स बध्नाति पशून् पतिः ।
स एव मोचकस्तेषां भक्त्या सम्यगुपासितः ।

चतुर्विंशतितत्त्वानि माया कर्मगुणा अपि।
विषया इति कथ्यन्ते पाशा जीवनिबन्धनाः।
ब्रह्मादिस्तंबपर्यन्तान् पशून् बद्ध्वा महेश्वरः।
पाशैरेतैः पतिर्देवो कार्यं कारयति स्वयम्।
तस्याज्ञया महेशस्य प्रकृतिः पुरुषोऽपि ताम्।
बुद्धिं प्रसूते सा बुद्धिरहंकारमहंकृतिः।
इन्द्रियाणि दशैकञ्च तन्मात्रापञ्चकं तथा।
शासनाद्देवदेवस्य शिवस्य शिवदायिनः।
तन्मात्राण्यपि तस्यैव शासनेन महीयसा।
महाभूतान्यशेषाणि भावयन्त्यनुपूर्वशः।
ब्रह्मादीनां तृणान्तानां देहिनां देहसंगतिम्।
महाभूतान्यशेषाणि जनयन्ति शिवाज्ञया।
अध्यवस्यति वै बुद्धिरहङ्कारोऽभिमन्यते।
चित्तश्चेतयते चापि मनः सङ्कल्पयत्यपि।
श्रोत्रादीनि च गृह्णन्ति शब्दादिविषयान् पृथक्।
स्वानेव नान्यान् देवस्य दिव्येनाज्ञाबलेन वै।
वागाद्यानि च यान्यासंस्तानि कर्मेन्द्रियाणि च।
यथास्वं कर्म कुर्वन्ति नान्यत्किञ्चिच्छिवाज्ञया।
शब्दादयोऽपि गृह्यन्ते क्रियन्ते वचनादयः।
अविलंघ्या हि सर्वेषामाज्ञा शंभोर्गरीयसी।
अवकाशमशेषाणां भूतानां संप्रयच्छति।
आकाशः परमेशस्य शासनादेव सर्वगः।
प्राणाद्यैरावहाद्यैश्च भेदैरन्तर्बहिर्जगत्।
बिभर्ति सर्वं शर्वस्य शासनेन प्रभञ्जनः।

हव्यं वहति देवानां कव्यं कव्याशिनामपि ।
पाकाद्यञ्च करोत्यग्निः परमेश्वरशासनात् ।
सञ्जीवनादि सर्वस्य कुर्वन्त्यापस्तदाज्ञया ।
विश्वं विश्वम्भरा नित्यं धत्ते विश्वेश्वराज्ञया ।
देवान् पात्यसुरान् हन्ति त्रिलोकीमभिरक्षति ।
आज्ञया तस्य देवेन्द्रस्तस्य देवैरलंघ्यया ।
जीवतां व्याधिभिः पीडां मृतानाञ्चैव यातनाः ।
अधार्मिकाणां धर्मेशः करोति शिवशासनम् ।
निर्ऋतिर्विधिहीनानां फलं हरति कर्मणाम् ।
निशाचराधिपत्यञ्च कुरुते शंकराज्ञया ।
आधिपत्यमपां नित्यं कुरुते वरुणो मुने ।
पाशैर्बध्नाति पापांश्च परमेश्वरशासनात् ।
ददाति नित्यं यक्षेन्द्रो द्रविणं द्रविणेश्वरः ।
पुण्यानुरूपं भूतेभ्यः पुरशासनशासनात् ।
करोति संपदं शश्वत् ज्ञानञ्चापि सुमेधसाम् ।
निग्रहश्चाप्यसाधूनामीशानश्शिवशासनात् ।
धत्ते तु धरणीं मूर्ध्ना शेषश्शिवनियोगतः ।
यामाहुस्तामसीं रौद्रीं मूर्तिमन्तकरीं हरेः ।
सृजत्यशेषमीशस्य शासनाच्चतुराननः ।
त्रिसृभिर्मूर्तिभिः स्वाभिः पाति चान्ते निहन्ति च ।
विष्णुः पालयते विश्वं विश्वेश्वरनियोगतः ।
सृजते ग्र1ते चापि स्वकाभिस्तनुभिस्तु सः ।
हरत्यन्ते जगत् सर्वं हरस्तस्यैव शासनात् ।
सृजत्यपि च विश्वात्मा त्रिधा भिन्नस्तु रक्षति ।

कालः करोति सकलं कालस्संहरति प्रजाः ।
कालः पालयते विश्वं कालकालस्य शासनात् ।
त्रिभिरंशैर्जगद्बिभ्रन् तेजोभिर्वृष्टिमाददन् ।
दिवि सर्पत्यसौ भानुर्देवदेवस्य शासनात् ।
पुष्णात्योषधिजातानि भूतानि ह्लादयत्यपि ।
देवैश्च पीयते चन्द्रश्चन्द्रशेखरशासनात् ।
आदित्या वसवो रुद्रा अश्विनौ मरुतस्तथा ।
खेचरा ऋषयस्सिद्धा योगिनो मनुजा मृताः ।
पशवः पक्षिणश्चैव कीटाद्याः स्थावराणि च ।
नद्यस्समुद्रा गिरयः काननानि सरांसि च ।
वेदास्सांगाश्च शास्त्राणि मन्त्राः स्तोमा मखादयः ।
कालाद्यवनिपर्यन्तभुवनानि सहाधिपैः ।
ब्रह्माण्डान्यप्यसंख्यानि तेषामावरणानि च ।
वर्तमानान्यतीतानि भविष्यन्ति च कृत्स्नशः ।
दिशश्च विदिशश्चैव कालभेदाः कलादयः ।
यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
तत्सर्वं शंकरस्याज्ञाबलेन समधिष्ठितम् । इति ।

एकादशे—नैकाग्रश्चेच्छिवे चित्तं किं कृतेनापि कर्मणा ।
एकाग्रं चेच्छिवे चित्तं किं कृतेनापि कर्मणा ।
तस्मात् कर्माणि कृत्वा वा त्यक्त्वा वाऽन्तर्बहिः क्रमात् ।
येन केनाप्युपायेन शिवे चित्तं निवेशयेत् ।
शिवे निविष्टचित्तानां प्रतिष्ठितधियां सताम् ।
परत्रेह च सर्वत्र निर्वृतिः परमा भवेत् ।
इहोन्नमश्शिवायेति मन्त्रेणानेन सिद्धयः ।
स तस्मादधिगन्तव्यः परापरविभूतये । इति ।

द्वादशे—पञ्चाक्षरस्य माहात्म्यं वर्षकोटिशतैरपि ।
न शक्यं विस्तराद्वक्तुं तस्मात् संक्षेपतश्शृणु ।
वेदे शिवागमे चैव उभयत्र षडक्षरः ।
मन्त्रःस्थितस्सदा मुख्यो लोके पञ्चाक्षरः स्मृतः । इत्यादि ।

तत्रैवाध्याये—

मन्त्रे षडक्षरे सूक्ष्मः पञ्चब्रह्मतनुश्शिवः ।
वाच्यवाचकभावेन स्थितस्साक्षात् स्वभावतः ।
वाच्यश्शिवः प्रमेयत्वात् मन्त्रस्तद्वाचकःस्मृतः ।
वाच्यवाचकभावोऽयमनादिस्संस्थितस्तयोः ।
यथाऽनादिप्रवृत्तोऽयं घोरस्संसारसागरः ।
शिवोऽपि हि तथाऽनादिस्संसारान्मोचकः स्थितः ।
व्याधीनां भेषजं यद्वत् प्रतिपक्षस्वभावतः ।
तद्वत्संसारदोषाणां प्रतिपक्षश्शिवःस्मृतः । इति ।

तत्रैव— शिवज्ञानानि यावन्ति विद्यास्थानानि यानि च ।
षडक्षरस्य मन्त्रस्य तानि भाष्यं समासतः ।
किं तस्य बहुभिर्मन्त्रैः शास्त्रैर्वा बहुविस्तरैः ।
शिवात्मकमिदं मन्त्रं यस्य स्याद्धृदि संस्थितम् ।
तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येनोन्नमश्शिवायेति मन्त्राभ्यासः स्थिरीकृतः । इति ।

विंशे—आवाहयेत्ततो देव्या शिवं परमकारणम् ।
शुद्धस्फटिकसंकाशं देवं निष्कलमक्षरम् ।
कारणं सर्वलोकानां सर्वलोकमयं परम् ।
अन्तर्बहिःस्थितं व्याप्य अणुकल्पं महत्तरम् ।
भक्तानामप्रयासेन दृश्यमव्ययमीश्वरम् ।

ब्रह्मेन्द्रविष्णुरुद्राद्यैरपि देवैरगोचरम् ।
वेदसारञ्च विद्वद्भिरगोचरमिति श्रुतम् ।
आदिमध्यान्तरहितं भेषजं भवरोगिणाम् ।
शिवतत्त्वमिति ख्यातं शिवार्थं जगति स्थितम् । इति ।

चतुर्विंशाध्याये—

नमः परमदेवाय नमः परमहेतवे ।
नमश्शिवाय शान्ताय नमश्शिवतराय ते ।
त्वदधीनमिदं सर्वं जगद्धि ससुरासुरम् ।
अतस्त्वद्विहितामाज्ञां क्षमते कोऽतिवर्तितुम् । इति ।

सप्तविंशे—

ततः परस्याश्शक्तेश्च परस्ताच्छिवतत्त्वतः ।
परमं कारणं साक्षात् स्वयं निष्कारणं शिवम् ।
कारणानाञ्च धातारं हृदये ध्येयमव्ययम् ।
परमाकाशमध्यस्थं परमात्मोपरि स्थितम् ।
सर्वैश्वर्येण संपन्नं सर्वेश्वरमनीश्वरम् इति ।

श्रीसूतसंहितायाम्—

यस्य मायामयं सर्वं जगदीक्षणपूर्वकम् ।
तं वन्दे शिवमीशानं तेजोराशिमुमापतिम् । इति ।

शिव इत्यादीनामभिगीयमानत्वं ब्रह्मादिभिरुपास्यत्वं तदनुग्राहकत्वञ्च तत्रैवोक्तम्—

शिवश्शम्भुर्महादेवो रुद्रो ब्रह्मा महेश्वरः ।
स्थाणुः पशुपतिर्विष्णुरीश ईशान ईश्वरः ।
परमार्थः परः पारः पुरुषः परमेश्वरः ।
पुराणः परमः पूर्णः तत्त्वं काष्ठा परागतिः ।
पतिर्देवो हरो हर्ता भर्ता स्रष्टा पुरातनः ।

महाग्रासो महाधारस्सदा विश्वाधिकः प्रभुः ।
महर्षिर्भूतपालोऽग्निराकाशो हरिरव्ययः ।
प्राणो ज्योतिः पुमान् भीमः अन्तर्यामी सनातनः ।
अक्षरो दहरस्साक्षादपरोक्षः स्वयम्प्रभः ।
असंग आत्मा निर्द्वन्द्वः प्रत्यगात्मादिसंज्ञितः ।
उमासहायो भगवान् नीलकण्ठस्त्रिलोचनः ।
ब्रह्मणा विष्णुना चैव रुद्रेणापि सदा हृदि ।
उपास्यमानः सर्वात्मा सर्ववस्तुविवर्जितः ।
कृपया केवलं विष्णुं विश्वमूर्तिर्वृषध्वजः ।
अनुगृह्याब्रवीद्विप्रा देवो मधुरया गिरा । इति ।

तत्रैव शिवस्य प्रणवशब्दवाच्यत्वं युक्तिपुरस्सरं निरूप्य परमार्थतस्तु वाच्यवाचकसंबन्धः सर्वोऽपि प्रपञ्चश्च नास्तीत्याह—

ओंकारशब्दस्सर्वार्थवाचकः परिकीर्तितः ।
प्रयोगादेव सर्वत्र सर्वार्थे शिव एव हि ।
तस्माच्छिवस्य पूर्णस्य प्रणवो वाचकः स्मृतः ।
वाच्यवाचकभावश्च लक्ष्यलक्षणताऽपि च ।
अन्योन्यताऽपि नास्त्येव परमार्थनिरूपणे ।
अथ किं बहुनोक्तेन शिवादन्यन्नविद्यते ।
शिवस्वरूपमेवाहुरिदं सर्वं विचक्षणाः ।
सर्वस्वरूपमज्ञानाद्दृश्यते न तु वस्तुतः । इति ।

किञ्च शिव एव स्वाभिन्नपरशक्त्या सहितस्सन् ईश्वरसदाशिवादिरूपेण सकलं जगत् सृष्ट्वा सर्वस्वरूपेण वर्तते इत्युक्त्वा अनन्तरमीश्वरादिकं चिच्छक्तिजडशक्तिसहितं सकलं वस्तु शिव एवेति यः पश्यति स एव कृतार्थ इत्याह-चिन्मात्राश्रयमायायाःइत्यारभ्य—

शिवामेनामुमामेनाञ्जडशक्तिं तथैव च ।
जडकार्यञ्जगज्जीवं तेषां भेदं तथैव च ।

अन्यच्चास्तितया भातं तथा नास्तीतिशब्दितम् ।
सर्वं पूर्णं शिवं पश्यन् स्वयं पूर्णशिवो भवेत् । इति ।

अन्यत्राप्युक्तम्—

मृच्छरावादिरूपेण यथा भाति स्वभावतः ।
तथा सर्वतया भाति शिवस्सर्वावभासकः ।
कटकादिविभेदेन यथा हेम प्रकाशते ।
तथा सर्वतया भाति शिवस्सर्वावभासकः ।
शुक्तिका रजताकारा यथा भाति स्वभावतः ।
तथा सर्वतया भाति शिवः सर्वावभासकः ।
स्वप्नदृक् स्वप्नरूपेण यथा भाति स्वभावतः ।
तथा सर्वतया भाति शिवः सर्वावभासकः ।
अन्धकारः प्रकाशश्च यथाऽकाशे प्रकाशते ।
जडाजडमिदं सर्वं तथा भाति परात्मनि ।
वीचीतरंगपूर्वास्तु यथा भान्ति महोदधौ ।
महदादिविशेषान्तं जगद्भाति तथाऽऽत्मनि । इति ।

कार्यप्रपञ्चस्य कारणब्रह्मात्मकत्वं दृष्टान्तैरुपपादयति मृच्छरावेत्यादिना—यथा एकैव मृत्तिका घटशरावादिनानाकार्यात्मना भासते तथा परशिवोऽपि मायोपाधिवशात् सकलजगदात्मना भासते इत्यर्थः। ननु मृल्लोहादिषु शरावादिकार्यं नारोप्यते किन्तु तैरारभ्यते तच्च कारणात् मृदादिद्रव्यात् द्रव्यान्तरमिति ये तार्किका विप्रतिपन्नास्तान् प्रति दृष्टान्तान्तरमाह-शुक्तिकेति। यथा शुक्तिका स्वाधिष्ठानचैतन्यस्थमायावशादारोप्यरजताकारेण भासते तथा परशिवोऽपि स्वाश्रितमायावशात् सकलजगदात्मना भासते इत्यर्थः। ननु शुक्तिरजतादौ अन्यत् खलु अन्यस्मिन् अन्येनारोप्यते अद्वितीये ब्रह्मणि तादृश आरोपः कथं संभवतीत्याशंक्य निदर्शनान्तरेणोपपादयति-स्वप्नदृगिति। यथा स्वप्नद्रष्टा तैजसः आत्मोपाधिवशात् नानाविधस्वप्नपदार्थाकारो भवति तथा अद्वितीय ईश्वरोऽपि स्वमायावशात् नानाकारजगदात्मको भवतीत्यर्थः। ननु निरवयवे अद्वितीये ब्रह्मणि चेतनाचेतनलक्षणं विरुद्धस्वभावं जगत् कथमारोपयितुं शक्यते

इत्याशंक्य निदर्शनान्तरेणोपपादयति-अन्धकार इति। यथा एकस्मिन्नेव निरवयवे आकाशे उपाधिवशात् परिकल्पितभेदे विरुद्धस्वभावावपि तमःप्रकाशौ युगपत् भासेते तद्वदुपाधिपरिकल्पितभेदे परशिवस्वरूपे चेतनाचेतनविभागात्मकप्रपञ्चोऽपि व्यवस्थितस्सन् प्रकाशते इत्यर्थः। सर्वस्यापि कार्यप्रपञ्चस्य कारणमात्रावशेषे स्पष्टं निदर्शनमाह-वीचीति। महानूर्मिर्वीचिः स एव वायुवशात् भग्नस्तरंगः। यथा एकस्मिन्नेव समुद्रे वीचीतरंगबुद्बुदाद्याकारविशेषाः प्रतीतिसमयेऽवभासन्ते पुनस्तत्रैव लीयंते एवं परशिवस्वरूपेऽपि आकाशादिभूतभौतिकाद्यात्मिका आकारविशेषाः स्वमायावशात् भासन्ते तथैव तत्र लीयन्ते चेत्यर्थः। अन्यत्रापि—

**शिवमशेषमिदं परिपश्यतः सकलजन्मजरामरणादयः।**
**निखिललोकगतिश्च निरङ्कुशं परमरूपतयैव विभाति हि।**
**परमशिवमशेषं पश्यतामादिभूतं हृदयकुहरमध्ये सञ्चितं कर्मवृन्दम्।**
**झटिति भवति दग्धं तूलवद्वह्नियुक्तं न फलनिकरभोगप्राप्तये तद्भवेच्च।**
**कर्मभिस्सकलैरपि लिप्यते ब्रह्मवित्प्रवरश्च न सर्वथा।**
**पद्मपत्रमिवाद्भिरहो परब्रह्मवित्प्रवरस्य तु वैभवम्।**
**पुण्यपापतया यदि भासते कर्मजातमनात्ममतिस्तदा।**
**ब्रह्मरूपतयैव विभाति चेत् ब्रह्मवेदनमेव तदुत्तमम्।**
**सर्पादिभावेन विराजमाना रज्जुर्न सर्पादि सदैव रज्जुः।**
**तद्वत्प्रपञ्चात्मतया विभाति शिवो न विश्वं शिव एव सत्यम्।** इति।

परमशिवमिति। हृत्पुण्डरीकमध्ये सच्चिदानन्दाखण्डैकरसं परमशिवं स्वात्मतया साक्षात्कुर्वतां सकलानर्थभूताविद्यानिवृत्त्या तत्कार्यभूतमनेकभवपरंपराप्रापकं सञ्चितं पुण्यपापरूपं कर्मापि निवृत्तं स्यात्, ज्ञानाग्निना दग्धं भवतीत्यर्थः। श्रूयते हि—तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते-इति। **श्रीभगवताप्युक्तम्।**

**यथैधांसि समिद्धोऽग्निः भस्मसात्कुरुतेऽर्जुन।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा।** इति।

**बादरायणोऽपि** परतत्वज्ञानात् सञ्चितागामिकर्मणोः विनाशाश्लेषौ सूत्रयामास—तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादिति। एष तावदाहः प्रारब्धव्यतिरिक्तस्यैव

सञ्चितकर्मणः। प्रारब्धन्तु भोगेनैव क्षपयितव्यम्। "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये इति श्रुतौ ज्ञानोत्तरकालमपि शरीरपातावधिपर्यन्तं विलंबप्रतिपादनेन प्रारब्धकर्मणो भोगैकनिवर्त्यत्वप्रतिपादनात्। "अनारब्धकार्ये एव तु पूर्वे तदवधे"रिति तेनैव विशेषितत्वाच्च। अतः प्रारब्धकर्मभोगसमये यत्पुण्यपापात्मकं कर्मोपार्ज्यते तस्याश्लेषमाह-कर्मभिरिति। श्रूयते हि—तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते—इति। सर्पादिभावेनेति। सर्पधाराद्यात्मना मायया भासमाना रज्जुः स्वयाथात्म्यज्ञानोत्तरकालं न हि सर्पाद्यात्मना भासते। किन्तु पूर्वमपि इयं रज्जुरेव कदाचिदपि न सर्पादि इत्येव प्रतीयते। यथैवं तद्वत् परशिवोऽपि अविद्यावशात् पूर्वं प्रपञ्चात्मतया भासमानोऽपि तत्स्वरूपयाथात्म्यज्ञानोत्तरकालं प्रागप्यसौ परशिव एव सत्यो न प्रपञ्च इति प्रतीयते। तथा च नाभूदस्ति भविष्यतीति दृश्यस्य प्रपञ्चस्य कालत्रयनिषेधसिद्धेर्मिथ्यात्वमित्यर्थः—

अतस्सर्वं परित्यज्य शिवादन्यत्तु दैवतम्।
शिव एकस्सदा ध्येयस्साक्षात्संसारमोचकः।
वृक्षस्य मूलसेकेन शाखाः पुष्यन्ति वै यथा।
शिवध्यानेन देवाश्च तथा तृप्ता भवन्ति हि। इति।
आत्मसंज्ञश्शिवश्शुद्ध एक एवाद्वयस्सदा।
अग्रे सर्वमिदं देवा आसीत्तन्मात्रमास्तिकाः। इति।
यथा यथा स्वभावेन यद्यद्भाति सुरर्षभाः।
तथा तथा शिवो भाति स्वयमेव न चापरः। इति।
यथा यथाऽवभासं य शिव एवेति पश्यति।
तथा तथा महादेवं भजतेऽयत्नतस्तु सः। इति।
शिवरूपतया सर्वं यो वेद स हि तत्त्ववित्।
अशिवं वेद यत्किञ्चित् स एव परिमोहितः।
शिवादन्यतया किञ्चित् अपि यो वेद सोऽधमः।

शिवस्यैवापचारं हि कुरुते स पशुर्नरः ।
शिवरूपतया सर्वं यस्य भाति स्वभावतः ।
स्वेच्छाचारसमाचारः तस्य चार्चा च शूलिनः । इति ।
शिव एवास्ति नैवान्यदिति यो निश्चयः स्थिरः ।
सदा स एव सिद्धान्तः पूर्वपक्षस्तथा परे । इति ।
अहमिति शिव एव सत्यचिद्घनः स्फुरति ततः पृथगस्ति नैव वस्तु ।
इदमिति वपुषा च तेन बद्धः न हि मनुजस्य विमोचनं न किञ्चित् ।
शिव इति सकलं यदाऽवभासते न हि मरणं जननं तदाऽस्ति किञ्चित् ।
इति हृदये वचनम्मदीयमेतत् निशितमतिस्सततं निधाय तिष्ठेत् ।
परमशिवः परमेश्वरः प्रसन्नः यदि विमला परमानुभूतिरेका ।
न हि सकलैरपरैरुपायबृन्दैः न च हरिणा न मया न चापरेण ।
परमशिवः परमेश्वरः स्वतन्त्रो यदि कुरुते मनुजस्य वेदनं तत् ।
परमपदं विमलं प्रयाति मर्त्यो यदि कुरुते न शिवः प्रयाति बन्धम् ।
दिनकरकिरणै र्हि शार्वरं तमो निबिडतरं झटिति प्रणाशमेति ।
घनतरभवकारणान्तरं तमः शिवदिनकृत्प्रभया न चापरेण ।
हरिहर इत्यपरे सुरासुराद्याः परमशिवप्रभया तिरस्कृताश्च ।
रविकिरणैरखिलानि भानि यद्वत् परमशिवस्तत एव बोधकारी ।
शिवचरणस्मरणेन पूजया च स्वकतमसः परिमुच्यते हि जन्तुः ।
न हि मरणप्रभवप्रणाशहेतुः शिवचरणस्मरणादृतेऽस्ति किञ्चित् ।
परमशिवः खलु नस्समस्तहेतुः परमशिवः खलु नः समस्तमेतत् ।
परमशिवः खलु नस्समस्तभूतः परमशिवः खलु नः प्रमाणभूतः ।
परमशिवस्सकलागमस्य निष्ठा परमशिवः परमानुभूतिगम्यः ।
परमशिवः परमानुभूतिरूपः परमशिवः परमानुभूतिदश्च ।

परमशिवसमुद्रेऽहं हरिः सर्वदेवा मनुजपशुमृगाद्याः शीकरा एव नित्यम् ।
विमलमतिभिरेवं वेदवेदान्तनिष्ठैः हृदयकुहरनिष्ठं वेदितुं शक्यते हि। इति ।
न हि जनिर्मरणं न गमागमौ न हि मलं विमलं न च वेदनम् ।
शिवमिदं सकलं हि विभासते स्फुटतरं परमस्य हि योगिनः।
विसृज्य सन्देहमशेषमास्तिकाः प्रतीतमेतन्निखिलं जडात्मकम् ।
गुरूपदेशेन शिवं विलोकयेत् विलोकनञ्चापि शिवं विलोकयेत् ।
विलोकनञ्चापि शिवं विलोकयन् विलोकनञ्चापि विसृज्य केवलम् ।
स्वभावभूतस्वचिताऽवशिष्यते चिताऽवशेषोऽपि न चास्य तत्त्वतः । इति ।

विलोकनञ्चापीति । यत् अद्वितीयब्रह्मात्मविषयं ज्ञानं तद्बलात् तदतिरिक्तस्य सर्वस्य तन्मात्ररूपतां पश्यन् अन्ततस्तद्विज्ञानमपि कतकरजोन्यायेन तत्रैव लीयमानत्वात्तदात्मकमवलोकयेदित्यर्थः। स्वभावभूतस्वचितेति । ब्रह्मात्मैक्यविषयान्तकरणवृत्तावपि स्वकारणेन सह लीयमानायां सत्यां अवच्छेदकाभावात् विदुषः स्वभावभूता या चित् तयैव केवलमवशिष्यते। चिन्मात्ररूपेणैव केवलं विद्वानवतिष्ठते। तस्य चिद्रूपस्य परमार्थतोऽवशिष्टत्वमपि न संभवति। अवशेषप्रतियोगिनोऽन्यस्य कस्यचिदप्यभावादित्यर्थः ।

सोऽयं स्वाविद्यया चात्मा शिवः सन्नपि वस्तुतः ।
स्वं शिवत्वमविज्ञाय संसारीवावभासते ।
वेदोदितेन मार्गेण पारंपर्यक्रमेण तु ।
मुमुक्षुत्वं दृढं प्राप्य पुनश्शान्त्यादिसाधनैः ।
सहितश्शिवभक्त्या च गुरोः पादं प्रणम्य च ।
वेदान्तानां महावाक्यश्रवणेन तथैव च ।
मननेन तथा देवा ध्यानेन च परात्मनः ।
प्रत्यक्ब्रह्मैकताज्ञानं लब्ध्वा याति परं शिवम् ।
प्रत्यगात्मानमद्वन्द्वमहंशब्दोपलक्षितम् ।

शिवरूपेण संपश्यन्नेव याति स्वपूर्णताम् ।
शिवरूपतया भातेऽहंशब्दार्थे सतीश्वरः ।
अविद्या विलयं याति विद्यया परयैव तु । इति ।
अस्ति कश्चित् स्वतस्सिद्धः सत्यज्ञानसुखाद्वयः ।
विश्वस्य जगतः कर्ता पशुपाशविलक्षणः ।
आकाशादीनि भूतानि पञ्च तेषां प्रकीर्तिताः ।
गुणाश्शब्दादयः पञ्च पञ्च कर्मेन्द्रियाणि च ।
ज्ञानेन्द्रियाणि पञ्चैव प्राणाद्या दश वायवः ।
मनो बुद्धिरहङ्कारश्चित्तश्चेति चतुष्टयम् ।
तेषां कारणभूतैकाऽविद्या षट्त्रिंशकः पशुः ।
विश्वस्य जगतः कर्ता पशोरन्यः परश्शिवः ।
आत्मानः पशवः प्रोक्ताः सर्वे अज्ञानिनस्सदा ।
अज्ञानमात्मनामेषामनाद्येव स्वभावतः ।
संसारबीजमज्ञानं संसार्यज्ञः पुमान् यतः ।
ज्ञानात्तस्य निवृत्तिस्स्यात् प्रकाशात्तमसो यथा । इति ।
बहुनोक्तेन किं सर्वास्त्रिमूर्तीनां विभूतयः ।
वरिष्ठा हि विभूतिभ्यस्ते वरिष्ठा न संशयः ।
तेषु रुद्रो वरिष्ठश्च ततो मायी परश्शिवः ।
मायाविशिष्टात् सर्वज्ञस्सांबस्सर्वविलक्षणः ।
वरिष्ठो मुनयस्साक्षाच्छिवो नात्र विचारणा ।
शिवाद्वरिष्ठो नैवास्ति मया सत्यमुदीरितम् ।
शिवस्वरूपमालोड्य प्रवदामि समासतः ।
शिवादन्यतया भातं शिवं यो वेद वेद सः ।

स एव परमं तत्त्वं नास्ति संशयकारणम् ।
यश्शिवं सकलं साक्षाद्वेद वेदान्तवाक्यतः ।
स मुक्तो नात्र सन्देहस्सत्यमेव मयोदितम् । इति च ।

पराशरोपपुराणेऽपि—

शिवाय सत्यविज्ञानमहानन्दस्वरूपिणे ।
स्वविलक्षणहीनाय स्वसंवेद्याय ते नमः । इति ।
सर्वमन्यत् परित्यज्य शिव एव शिवङ्करः ।
ध्येय इत्याह परमा श्रुतिराथर्वणी खलु ।
अथ किं बहुनोक्तेन शिवस्सांबस्सनातनः ।
साक्षान्निष्ठा हि शास्त्राणां नापरस्सत्यमीरितम् ।
तदन्यत् सकलं विश्वं स तु विश्वाधिकश्शिवः ।
स एव जगतां नाथः स हि संसारमोचकः । इति ।
शिवध्यानसमं ध्यानं नस्ति नास्ति श्रुतौ स्मृतौ ।
अतस्सर्वानपि त्यक्त्वा शिवमेव विचिन्तयेत् ।
देवानामपि सर्वेषामात्मभूतो हि शंकरः ।
अतस्सर्वान् परित्यज्य ध्यायेदीशानमव्ययम्
अयत्नेनैव पापेभ्यो मोक्षमिच्छति चेत् पुमान् ।
शिवमेव सदा ध्यायेत् सांबं चंद्रार्धशेखरम् । इति ।

वासिष्ठेऽपि—

चिन्मात्रश्चैत्यरहितमनन्तमजरं शिवम् ।
अनादिमध्यपर्यन्तं यदनादि निरामयम् ।
द्रष्टृदर्शनदृश्यानां मध्ये यद्दर्शनं स्थितम् ।
साधो तदवबोधेन तदेतदवबुध्यसे । इति ।
ब्रह्मार्कविष्णुहरशक्रसदाशिवादि

शान्तंशि वं परममेतदिहैकमास्ते ।
सर्वोपधिव्ययवशादविकल्परूपं
चैतन्यमात्रवपुरुज्झितविश्वसङ्गम् । इति ।
अकृत्रिममनाद्यन्तं वेदनं चिच्छिवं विदुः ।
तदेव देवशब्देन कथ्यते तत् प्रपूजयेत् ।
शिवं सर्वगतं शान्तं बोधात्मकमजं प्रभुम् ।
तदेकभावनं राम कर्मत्याग इति स्मृतः । इति ।

निष्कलपरशिव एवेदं सर्वमिति यत् परिपूर्णभावनं तदेव जीर्णपर्णवत् कर्मनाशनम् । कर्मनाशहेतुत्वात् कर्मत्याग इति स्मृत इति ।

पाद्मे पुराणे कल्याणकाण्डे—

यं देवं यतयो धीरा हृदयांभोजमध्यगम् ।
ज्योतिर्मयं विमुक्त्यर्थं ध्यायन्ति परमं शिवम् ।
यमाहुर्वेदसारज्ञाः सर्वज्ञं सर्वगं विभुम् ।
स्वयंप्रकाशसंज्ञानमानन्दं परमं विभुम् । इति ।

शिवागमे—

परे व्योम्नि शिखान्तःस्थो निष्कलः परमश्शिवः ।
चिदानन्दघनस्सूक्ष्मस्सर्वभूतानुकम्पया । इति
शिवतत्त्वमथो वक्ष्ये सर्वाध्वप्रभवं परम् ।
अप्रमेयमनिर्देश्यमनौपम्यमनामयम् ।
सूक्ष्मं सर्वगतं नित्यं ध्रुवमव्ययमीश्वरम् । इति ।
शिवस्वभाव एवैकश्चिन्त्यते निरुपाधिकः ।
ययाऽसौ चेतसो वृत्त्या महायोगः स उच्यते । इति

तथा सोमशंभुनाऽपि—

सर्वज्ञं सर्वकर्तारं बोधानन्दमयं विभुम् ।
निष्कलं स्वप्रकाशञ्च सञ्चिन्त्य परमं शिवम् । इति ।

आचार्यैरप्युक्तम्—

आभातीदं विश्वमात्मन्यसत्यं सत्यज्ञानानन्दरूपे विमोहात् ।
निद्रामोहात् स्वप्नवत्तन्न सत्यं शुद्धः पूर्णो नित्य एकश्शिवोऽहम् । इति ।
न भूमि र्न तोयं न तेजो न वायुः
न खं नेन्द्रियं वा न तेषां समूहः ।
अनैकान्तिकत्वात् सुषुप्तैकसिद्धः
स एकोऽवशिष्टश्शिवः केवलोऽहम् । इत्यादि ।

शिवादन्यथा दैवतं नाभिजाने महादेव शंभो गिरीश त्रिशूलिन् ।
त्वयीदं समस्तं विभातीति यस्मात् शिवोऽहं शिवोऽहं शिवोऽहं शिवोऽहम् ।

श्रुतिस्तु —शिवमद्वैतञ्चतुर्थं मन्यन्ते इति ।

तैत्तरीये—

शर्वः—शृणाति सर्वाः प्रजास्संहारसमये इति शर्वः । शृणाति असुरान् भक्तानाञ्च पापमिति शर्वः । सर्वतः सर्वशर्वेभ्यः इति श्रुतिः ।

बृहदारण्यके—

श्रोतव्यः—शब्दशक्तितात्पर्यानुसन्धानपूर्वकं वाक्यार्थज्ञानेन विषयीकर्तव्यः । आत्मा वा अरे द्रष्टव्यः श्रोतव्यः इति श्रुतिः ।

श्रुतेः श्रोता—श्रुतिः श्रोत्रेन्द्रियजन्यशब्दादिविषयकमनोवृत्तिरूपा । तद्व्याप्ता तत्साक्षीति यावत् । न श्रुतेःश्रोतारं शृणुयाः इति श्रुतिः ।

श्रोत्रे तिष्ठन् । श्रोत्रादन्तरः । श्रोत्रेन्द्रियस्याधिष्ठानतया वर्तमानः । श्रोत्रेन्द्रियस्य अन्तर्यामितया प्रेरकश्च । यः श्रोत्रे तिष्ठन् श्रोत्रादन्तरः इति श्रुतिः ।

शोकान्तरम्—शोकरहितम्। निर्मृष्टनिखिलदुःखमित्यर्थः। **अकामं रूपं शोकान्तरमिति** श्रुतिः।

शृण्वन्—शब्दविषयवृत्तिप्रकाशनं कुर्वन्। **शृण्वन् वै तन्न शृणोतीति** श्रुतिः।

श्रोतुः श्रुतिः—श्रोतुः शब्दविषयश्रोत्रजन्यमनोवृत्तिप्रकाशकस्य परमात्मनः स्वरूपभूता श्रुतिः। **न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यते** इति श्रुतिः।

**कैवल्योपनिषदि—**

शिवरूप—सर्वदुःखविनिर्मुक्तपरमानन्दघनस्वभावमित्यर्थः। **हिरण्मयोऽहं शिवरूपमस्मीति** श्रुतिः।

**श्वेताश्वतरोपनिषदि—**

शिवा तनूः—शिवा - अविद्यातत्कार्यविनिर्मुक्तचैतन्यस्वरूपेत्यर्थः। **या ते रुद्र शिवा तनूः** इति श्रुतिः।

शन्तमा—निरतिशयानन्दरूपा शिवस्य स्वरूपभूता। **तया नस्तनुवा शन्तमये**ति श्रुतिः।

**अथर्वशिरसि—**

श्रेष्ठः—अतिशयेन प्रशस्यः सर्वोत्कृष्टः सर्वेश्वर इति यावत्। **श्रेष्ठोऽहं वरिष्ठोऽहं** इति श्रुतिः।

शुक्रम्—अविद्यातत्कार्यविनिर्मुक्तम्। **यच्छुक्रं तद्वैद्युत**मिति श्रुतिः।

शूरः—प्रलये सर्वसंहारसमर्थः। **अभित्वा शूर नोनुमः** इति श्रुतिः।

**अथर्वशिखायाम्—**

शंभुः—शं सुखं भक्तानां भावयतीति शंभुः। तदाहुरागमिकाः—

**भुक्तिं मुक्तिमणूनां स्वव्यापारे समर्थतां भानम्।**
**जडवर्गस्य विधत्ते सर्वानुग्रहकः शंभुः।** इति।

किञ्च शंभोस्सर्वात्मकत्वं सूतसंहितायां निरूपितम्—

वर्णाश्रमादयो भावा मायया ये प्रकल्पिताः ।
तेऽपि शंभोर्न भेदेन सन्ति सम्यङ्निरूपणे ।
नियोज्यत्वादयो भावा मायया ये प्रकल्पिताः ।
तेऽपि शंभोर्न भेदेन सन्ति सम्यङ्निरूपणे ।
धर्माधर्मादिरूपेण मायया ये प्रकल्पिताः ।
तेऽपि शंभोर्न भेदेन सन्ति सम्यङ्निरूपणे ।
रागद्वेषादिरूपाश्च मायया ये प्रकल्पिताः ।
तेऽपि शंभोर्न भेदेन सन्ति सम्यङ्निरूपणे ।
वैदिकास्तान्त्रिका मार्गा अपभ्रंशाश्च ये द्विजाः ।
तेऽपि शंभोर्न भेदेन सन्ति सम्यङ्निरूपणे ।
यद्यदस्ति तथा यद्यन्नास्ति वस्तु मुनीश्वराः ।
तत्तच्छंभोर्न भेदेन विद्यते सूक्ष्मदर्शने । इति ।
वस्तुतश्शंभुरानन्दः सत्यसंपूर्णचिद्घनः ।
मायया मोहिता मर्त्यास्तं भेदेन विदुर्बुधाः । इति ।
भूतानि शंभुर्भुवनानि शंभुः वनानि शंभुर्गिरयश्च शंभुः ।
स एव सर्वं न ततोऽतिरिक्तं ततः स एकः परमार्थमेतत् ।
इज्यश्च यज्ञैरयमेव शंभुः लभ्यश्च दानैरखिलैस्तथैव ।
जप्यश्च मन्त्रैरखिलैर्विशेषैः मृग्यश्च देवैरमरेन्द्रपूर्वैः । इति ।
इदं धामत्रयं शंभोर्विभेदेन न विद्यते ।
शंभुरेव तथा भाति नह्यन्यत् परमेश्वरात् । इति ।
प्रतीतमखिलं शंभुं तर्कतश्च प्रमाणतः ।
स्वानुभूत्या च यो वेद स एव परमार्थवित् । इति ।
यदा शंभुतया सर्वं विभाति स्वत एव हि ।

तदा हि शांभवःसाक्षात्प्रसादः सत्यमीरितम् ।
शंभुरेव सदा भाति सर्वाकारेण नापरः ।
इति विज्ञानसंपन्नः शांकरज्ञानिनां वरः ।
शंभुरूपतया सर्वं यस्य भाति स्वभावतः ।
न तस्य वैदिकं किञ्चित् तान्त्रिकं वाऽस्ति लौकिकम् । इति च ।

आदित्यपुराणे—

ज्ञात्वा यः कीर्तयेच्छंभोर्नामान्यमिततेजसः ।
मुक्तिः करतले तस्य स्थितेति मुनयो जगुः । इति ।

वायवीयसंहितायां द्वितीयाध्याये—

सर्वैश्वर्येण संपन्नो नाम्ना सर्वेश्वरः स्वयम् ।
सर्वैर्मुमुक्षुभिर्ध्येयः शंभुराकाशमध्यगः । इति ।

शंभुराकाशमध्यगः इति श्रुतिः ।

शिवङ्करः—मङ्गळकरः । शिव एको ध्येयश्शिवङ्करः इति श्रुतिः ।

तापनीयोपनिषदि—

श्रोत्रस्य द्रष्टा । श्रोत्रस्य साक्षी । स्पष्टम् । चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा चक्षुषस्साक्षी श्रोत्रस्य साक्षी इति च श्रुतिः ।

शून्यम्—पारतन्त्र्यादिदोषरहितं निर्विशेषं वा । तदुक्तं वासिष्ठे—

शून्यं तत् प्रकृतिर्माया ब्रह्म विज्ञानमित्यपि ।
शिवः पुरुष ईशानो नित्यमात्मेति कथ्यते । इति ।

आचार्यैरप्युक्तम्—

न चैकं तदन्यद्द्वितीयं कुतस्स्यं न वा केवलत्वन्न चाकेवलत्वम् ।
न शून्यं न चाशून्यमद्वैतकत्वात् कथं सर्ववेदान्तसिद्धं ब्रवीमि । इति ।

उक्तञ्च **पाद्मे पुराणे**—

**यं दृष्ट्वा योगिनो नित्यं सन्तृप्ताः स्वात्मसंस्थितम् ।**
**अक्षरं सदसच्छून्यं परमात्मानमीश्वरम्** । इति ।

**स्वप्रकाशमानन्दघनं शून्यमभव**दिति श्रुतिः ।

**शृङ्गः**—छन्दसामृषभस्य प्रणवस्य शृंगः, अंशः, अकारः, अकारार्थः, प्रत्यगात्मेत्यर्थः ।

**शृङ्गार्धम्**—छन्दसामृषभस्य प्रणवस्य उकारस्याप्यवयवत्वात् शृंगशब्देन उकार उच्यते । शृङ्गार्धं इति उकारपूर्वार्धः । तदर्धभूतं ब्रह्मेत्यर्थः । श्रुतिस्तु—**शृङ्गं शृङ्गार्धमाकृष्य शृंगेणानेन योजयेत्** । इति ।

**प्रश्नोपनिषदि**—

**षोडशकलः**—षोडशसंख्याकाः कलाः अवयवा इवात्मनि अविद्याध्यारोपितरूपाः यस्मिन् पुरुषे सोऽयं षोडशकलः । **षोडशकलं भारद्वाज पुरुषं वेत्थे**ति श्रुतिः ।

**श्वेताश्वतरोपनिषदि**—

**षोडशान्तः**—षोडशो विकारः— पञ्चभूतान्येकादशेन्द्रियाणि अन्तः—अवसानं विस्तरः समाप्तिर्वा यस्यात्मनः स षोडशान्तः । अथवा प्रश्नोपनिषदि यस्मिन्नेताष्षोडशकलाः प्रभवन्तीत्यारभ्य सप्राणमसृजतप्राणाच्छ्रद्धामित्यादिनामान्ताष्षोडशकलाः अवसानं यस्येति स षोडशान्तः । **तमेकनेमिं त्रिवृतं षोडशान्त**मिति श्रुतिः ।

**ईशावास्योपनिषदि**—

**स्वयंभूः** । स्वयमेव भवति नापरो भावयतीति स्वयम्भूः । येषामुपरि भवति यश्चोपरि भवति स स्वयमेव भवतीति स्वयंभूः । अथवा स्वयंभूः परमेश्वरः, स्वयमेव—स्वतन्त्रो भवति, न परतन्त्र इति स्वयंभूः । **कविर्मनीषी परिभूःस्वयंभू**रिति श्रुतिः ।

**केनोपनिषदि** ।

**सत्यम्**—कालत्रयेऽपि बाधशून्यम् । तदुक्तं **सूतसंहितायाम्**—

**अपूर्वानपरं ब्रह्म स्वात्मानं सत्यमद्वयम् ।**
**प्रज्ञानघनमानन्दं यः पश्यति स पश्यति** । इति ।

सत्यवत् सकलं भातं निश्चित्यासत्यरूपतः ।
सर्वसाक्षितयाऽऽत्मानं विभज्य परचेतनम् ।
यस्त्वं तदिति वेदान्तप्रदीपेन स्वकं निजम् ।
शिवत्वं बोधयत्येष गुरुः साक्षान्न चापरः । इति ।

वासिष्ठेऽपि—

सत्यं संवेदनं शुद्धं बोधाकारं निरञ्जनम् ।
सर्वं सर्वगतं शान्तमस्त्यनस्तमितोदयम् । इति ।

सत्यमायतनमिति श्रुतिः ।

स्वर्गो लोकः—स्वर्गः—सुखरूपः लोकः—स्वप्रकाशः । आनन्दचिद्रूप इति यावत् अनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति इति श्रुतिः ।

काठकोपनिषदि—

सनातनः—चिरन्तनः। महाभारते—

अनादिनिधनं देवमात्मयोनिं सनातनम् ।
अप्रतर्क्यमविज्ञेयं हरिं नारायणं प्रभुम् । इति ।

ब्रह्माण्डपुराणे चतुर्थाध्याये वरुणः—

त्वमादिस्त्वमनादिश्च त्व प्रभुः सर्वतोमुखः ।
त्वमात्मा त्वं महादेवस्त्वं यज्ञस्त्वं सनातनः । इति ।

गुह्यं ब्रह्म सनातनम् इति श्रुतिः ।

सर्वभूतान्तरात्मा—सर्ववस्तूनां स्वरूपभूत इत्यर्थः। एको वशी सर्वभूतान्तरात्मा इति श्रुतिः ।

प्रश्नोपनिषदि—

सुखम्—विषयेन्द्रियाद्यजन्यं निरायासमनाबाधं सुषुप्तिसमाध्यादावभिव्यक्तस्वरूपसुखमित्यर्थः । उक्तञ्च वासिष्ठे—

अनामयमनाभासमनामकमकारणम् ।
न सन्नासन्न मध्यान्तं न सर्वं सर्वमेव च ।
मनोवचोभिरग्राह्यं पूर्णात्पूर्णं सुखात्सुखम् ।
असंवेदनमाशान्तमात्मवेदनमाततम् । इति ।

गतसकलविकल्पो निर्विकल्पाभिरामः
सकलमलविलासोपाधिनिर्मुक्तमूर्तिः ।
विगलितसुखमाद्यं तत्सुखं प्राप यस्मिन्
तृणमिव जलराशावूह्यते शक्रलक्ष्मीः ।
अपरिमितनभोऽन्तव्यापि दिग्व्यापि पूर्णं
भुवनभरणशीलं भूरिभव्योपसेव्यम् ।
कथनगुणमतीतं सत्यमानन्दमाद्यं
सुखममृतमनन्तं ब्राह्मणोऽसौ बभूव । इति ।

गतेति । यस्मिन् सुखे शक्रलक्ष्मीरपि जलराशौ तृणमिव तुच्छत्वेन ऊह्यते उत्प्रेक्ष्यते तदाद्यं सुखं प्राप । अपरिमितेति । पूर्वश्लोके सुखं प्रापेति भेदप्रतीतेरपरितोषादिह श्लोके ब्राह्मणः पूर्णं सुखं बभूवेति अभेदः प्रतिपाद्यत इत्यर्थः । **अस्यैतत् सुखं भवति** इति श्रुतिः ।

मुण्डकोपनिषदि—

**सर्वगतः**—आकाशवत् सर्वव्यापकः । तदुक्तं **श्रीविष्णुपुराणे**—

यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् ।
अनिर्देश्यमरूपञ्च पाणिपादाद्यसंयुतम् ।
विभुं सर्वगतं नित्यं भूतयोनिमकारणम् ।
व्याप्यव्याप्तं यतस्सर्वं तद्वै पश्यन्ति सूरयः । इति ।

**सुसूक्ष्मम्**—सूक्ष्मभूताकाशादेरपि कारणत्वात् शब्दादिगुणाभावाच्च सुसूक्ष्मम्। **आदित्यपुराणे** (वायवीयसंहितायां) पञ्चाशाध्याये देवी—

**त्वां वाङ्मयाधारमनन्तवीर्यं ज्ञानार्णवञ्चैव गुणार्णवञ्च।**
**परात्परं धामनिधिं सुसूक्ष्मं अनादि मध्यान्तविहीनरूपम्।**
**हिरण्यगर्भञ्जगतः प्रसूतिं नमामि देवं हरिणाङ्कचिह्नम्।** इति।

**नित्यं विभुं सर्वगतं सुसूक्ष्ममिति** श्रुतिः।

**सर्वज्ञः**—सामान्यतस्सर्वं जानातीति सर्वज्ञः।

**सर्ववित्**—विशेषतस्सर्वं वेत्तीति सर्ववित्। सर्वत्र सर्वं विन्दत इति वा। तदुक्तं श्रीविष्णुपुराणे—

**व्यक्ताव्यक्तस्वरूपस्त्वं समष्टिव्यष्टिरूपवान्।**
**सर्वज्ञः सर्वदृक् सर्वशक्तिज्ञानबलर्द्धिमान्।**
**अनन्तश्चाप्यवृद्धिश्च स्वाधीनोऽनादिमान् वशी।**
**क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः।** इति।

**वायवीयसंहितायां** अष्टाविंशाध्याये—

**शब्दार्थज्ञानसिद्ध्यर्थमिन्द्रियेष्वेषु सत्स्वपि।**
**त्रिकालभाविनो भावान् स्थूलान् सूक्ष्मानशेषतः।**
**अणवो नैव जानन्ति मायाभवमलावृताः।**
**असत्स्वपि च सर्वेषु सर्वार्थज्ञानहेतुषु।**
**यद्यथाऽवस्थितं वस्तु तत्तथैव सदाशिवः।**
**अयत्नेनैव जानाति तस्मात्सर्वज्ञ उच्यते।** इति।

तत्रैव द्वितीयाध्याये—

**एष देवो महादेवो विज्ञेयस्तु महेश्वरः।**
**न तस्य परमं किञ्चित् पदं समधिगम्यते।**

**अयमादिरनाद्यन्तः स्वभावादेव निर्मलः ।**
**स्वतन्त्रः परिपूर्णश्च स्वेच्छाधीनचराचरः ।**
**अप्राकृतवपुः श्रीमान् लक्ष्यलक्षणवर्जितः ।**
**अमुक्तो मोचकश्चायमकालः कालचोदकः ।**
**सर्वोपरिगतावासस्सर्वावासश्च सर्ववित्** । इति ।

**यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः** इति श्रुतिः ।

**सबाह्याभ्यन्तरः**—बाह्याभ्यन्तरेण सह वर्तत इति सबाह्याभ्यन्तरः । अध्यस्त बाह्याभ्यन्तरप्रपञ्चस्य अधिष्ठानत्वादित्यर्थः । **सबाह्याभ्यन्तरोह्यजः** इति श्रुतिः ।

**सन्निहितम्**—बुद्ध्यादेर्द्रष्टृत्वेन सदा समीपस्थम् । **आविः सन्निहितं गुहाचर**मिति श्रुतिः ।

**सदसत्**—सदसत्स्वरूपं, सदसतोर्मूर्तामूर्तयोः स्थूलसूक्ष्मयोः तद्व्यतिरेकेणाभावात् । अस्तिनास्तिस्वरूपं वा व्यक्ताव्यक्तापरपर्यायकार्यकारणरूपमिति वा । **यदेतज्जानथ सदसद्वरेण्य**मिति श्रुतिः ।

**सत्येन लभ्यः**—सत्येन—नित्यं मृषावदनपरित्यागेन लभ्यः-प्राप्तव्यः । **सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्य**मिति श्रुतिः ।

**सूक्ष्मात्सूक्ष्मतरम्**—सूक्ष्मादाकाशादेरपि तत् सूक्ष्मतरम्, निरतियं ह्यस्य सौक्ष्म्यं सर्वकारणत्वात् । **सूक्ष्माच्च तत् सूक्ष्मतरं विभाति** इति श्रुतिः ।

**सर्वगः**—अकाशवत् सर्वव्यापी । तदुक्तं **सूतसंहितायाम्**—

**चिन्मात्रं सर्वगं सत्यं संपूर्णं सुखमद्वयम् ।**
**साक्षाद्ब्रह्मैव नैवान्यदिति तत्त्वविदां स्थितिः** । इति ।

आत्मबोधेऽपि—

**दिग्देशकालाद्यनपेक्ष्य सर्वगं शीतादिहृन्नित्यसुखं निरञ्जनम् ।**
**यस्त्वात्मतीर्थं भजते विनिष्क्रियः स सर्ववित् सर्वगतो भवेदिति ।**

ते सर्वगं सर्वतः प्राप्य धीराः इति श्रुतिः ।

माण्डूक्योपनिषदि—

सर्वेश्वरः—सर्वस्य चेतनाचेतनात्मकस्य जगतः ईश्वरो नियन्ता । तदुक्तं

श्रीविष्णुपुराणे—

सर्वेश्वर पराधार धाम्नांधामात्मकाक्षय ।
सकलावरणातीत निरालंबन भावन ।
महाविभूतिसंस्थान नमस्ते पुरुषोत्तम । इति ।
स ईश्वरो व्यष्टिसमष्टिरूपो व्यक्तस्वरूपोऽप्रकटस्वरूपः ।
सर्वेश्वरस्सर्वदृक् सर्वदर्शी समस्तशक्तिः परमेश्वराख्यः । इति ।

सूतसंहितायामपि—

साक्षात्सर्वेश्वरं सांबं संसारामयभेषजम् ।
सर्वज्ञं सर्वगं सर्वं सर्वलोकहिते रतम् । इति ।

स्कान्दे सनत्कुमारसंहितायां कालिकाखण्डे त्रिंशाध्याये देवाः—

नमश्शिवाय सांबाय शंकराय मृडाय ते ।
नमश्शिवतरायास्तु मयस्कर नमोनमः ।
शंभवे ते नमो नित्यं मयोभव उमापते ।
उग्रायोग्रत्रिशूलाय भर्गाय भव ते नमः ।
सोमसूर्याग्निनेत्राय स्वर्णदीं मूर्ध्नि बिभ्रते ।
नीलकण्ठाय नित्याय सत्याय महते नमः ।
व्योमकेशाय विश्वाय विश्वेश्वरहिताय ते ।
विश्वंभरावारिशिखिमरुद्व्योमरवीन्दुणून् ।
अधिष्ठाय जगत्सर्वं सृजते ग्रसते नमः ।
त्वं कर्ता सर्वलोकानां भर्ता हर्ता नियामकः ।
भुक्तिदो मुक्तिदश्च त्वं सिद्धिदस्सिद्धवंदितः ।
सर्वैश्वर्येण संपन्नो नाम्ना सर्वेश्वरः श्रुतः । इति ।

**एष सर्वेश्वर एष सर्वज्ञः** इति श्रुतिः ।

**सर्वस्य योनिः**—सर्वकारणभूतः । **एष योनिस्सर्वस्येति** श्रुतिः ।

**तैत्तरीयके**—

**सुकृतम्**—अत्रेयं श्रुतिः—**तदात्मानं स्वयमकुरुत तस्मात्तत्सुकृतमुच्यत** इति । तत्-असच्छब्दवाच्यं असद्वा इदमग्र आसीदिति प्रकृतं ब्रह्म स्वयमेवात्मानमकुरुत—सृष्टेः प्रागनभिव्यक्तनामरूपात्मकजगद्रूपेणविद्यमानमात्मानमभिव्यक्तनामरूपात्मतया स्वयमेवाकुरुत । यस्मादेवं स्वयमेव कृतवत् तस्मात् तद्ब्रह्म सुकृतं-स्वयंकर्तृ उच्यते । स्वयंकर्तृ ब्रह्मेति प्रसिद्धं लोके, सर्वकारणत्वात् । यस्माद्वा स्वयमेवाकरोत् सर्वं सर्वात्मना तस्मात् पुण्यरूपेणापि तदेव ब्रह्म कारणं सुकृतमुच्यते इति ।

**साम**—ब्रह्म, समत्वात् । सर्वानन्यरूपमित्यर्थः । **एतत्साम गायन्नि**ति श्रुतिः ।

**सदसस्पतिः**—सीदन्त्यस्मिन् सर्वे विकारा इति सदः प्रेयसीस्थानीया सर्वविकारहेतु, परा प्रकृतिः, तस्याः पतिः-पाता नित्यं संश्लिष्टो भर्ता परमेश्वर इत्यर्थः । तथा चोक्त**मभियुक्तैः**—

**यामामनन्ति मुनयः प्रकृतिं पुराणीं**
**विद्येति यां श्रुतिरहस्यगिरो गृणन्ति ।**
**तामर्धपल्लवितशंकररूपमुद्रां**
**देवीमनन्यशरणश्शरणं प्रपद्ये** । इति ।

**सदसस्पतिमद्भुत**मिति श्रुतिः ।

**सविता**—सवितृरूपेण जगदनुग्रहं कुर्वन् परमात्मा सवितेत्युच्यते । अथवा सर्वस्य जगतः प्रसविता जनयिता । **सवितारन्नृचक्षस**मिति श्रुतिः ।

**सर्वः**—सर्वस्वरूपः, क्षितिसलिलहुतवहपवनगगनहिमकरदिनमणियजमानात्मभिरष्टाभिर्मूर्तिभिस्सर्वं व्याप्य स्थितः । तदुक्त**मभियुक्तैः**—

**त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहः**
**त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।**

परिच्छिन्नामेवं त्वयि परिणतां बिभ्रति गिरं
न विद्मस्तत्तत्त्वं वयमिह तु यत्त्वं न भवसि । इति ।

आचार्यैरप्युक्तम्—

भूरंभांस्यनलोऽनिलोंऽबरमहर्नाथो हिमांशुः पुमा-
नित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम् ।
नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्माद्विभो-
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये । इति ।

श्रीविष्णुपुराणे—

नमामि सर्वं सर्वेशमनन्तमजमव्ययम् ।
लोकाधारमनाधारमप्रकाशमभेदिनम् । इति ।

उपदेशसाहस्रिकायाम्—

अहंब्रह्मास्मि सर्वोऽस्मि शुद्धो बुद्धोऽमृतस्सदा ।
अजस्सर्वग एवाहमजरश्चामृतोऽक्षयः । इति ।
असतश्च सतश्चैव सर्वस्य प्रभवाव्ययः ।
सर्वस्य सर्वदा ज्ञानात् सर्वमेनं प्रचक्षते । इति व्यासवचनात् ।

सर्वो वै रुद्रः इति श्रुतिः ।

सद्योजातः—यस्मात्परमेश्वरात् देवतिर्यङ्मनुष्याद्याः सद्य एव स्मरणमात्रात् जायन्ते स सद्योजातः । तदुक्तमागमिकैः—

सद्योऽणूनाम्मूर्तयस्संभवन्ति यस्येच्छातस्तेन सद्योऽभिधानः । इति ।

सद्योजातं प्रपद्यामि सद्योजाताय वै नमः इति श्रुतिः ।

सर्वभूतदमनः—सर्वेषां भूतानां दमयिता-नियन्ता । सर्वभूतदमनाय नमो मनोन्मनाय नमः इति श्रुतिः ।

सर्वविद्यानामीशानः—सकलविद्यानां नियन्ता, सर्वविद्याशरीरत्वात् । अत एव ब्रह्मादीनामप्यादिगुरुः परमेश्वरः । तदुक्तं सूतसंहितायाम्—

यश्शिवस्सर्वभूतानामीश्वरस्सर्व एव तु ।
ईशानस्सर्वविद्यानां स एवादिगुरुर्बुधाः । इति ।
ईशानं सर्वविद्यानामीश्वरेश्वरमव्ययम् ।
उत्पत्त्यादिविनिर्मुक्तमोंकारकमलासनम् ।
स्वात्मविद्याप्रदानेन सदा संसारमोचकम् ।
रुद्रं परमकारुण्यात् सर्वप्राणिहिते रतम् । इति ।

परमेश्वरस्यैवादिगुरुत्वं **पतञ्जलिनाऽपि** सूत्रितम्—**स पूर्वेषामपि गुरुः कालेनानवच्छेदा**दिति । विवृतञ्च **राजवार्तिके**—आद्यानां स्रष्टृणां ब्रह्मादीनामपि गुरुः उपदेष्टा, यतस्स कालेन नावच्छिद्यते । अनादित्वात् । तेषां पुनरादिमत्वादस्ति कालेनावच्छेद इति । अभियुक्तैरप्युक्तम्—

यस्स्रष्टारं निखिलजगतान्निर्ममे पूर्वमीशः
तस्मै वेदानमितसकलान् यश्च साकं पुराणैः ।
तत्त्वामाद्यं गुरुमहमसावात्मबुद्धिप्रकाशं
संसारार्तश्शरणमधुना पार्वतीशं प्रपद्ये । इति ।

**सर्वभूतानामीश्वरः**—ब्रह्मादिसर्वभूतानामपि नियन्ता । श्रुतिस्तु-**ईशानस्सर्वविद्यानामीश्वरस्सर्वभूताना**मिति ।

**सदाशिवः**—कैवल्यात्मा नित्यकल्याणरूपः महेश्वरः, निर्मृष्टनिखिलदुःखानुषंगपरमानन्दरूप इत्यर्थः । तदुक्तं ब्रह्मगीतायाम्—

त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यस्तथा ।
तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः । इति ।

स्कान्दे नन्दी—

हृत्पुण्डरीकसुषिरे ध्यात्वा देवं त्र्यंबकम् ।
त्र्यक्षं दशभुजं शान्तं पञ्चवक्त्रं सदाशिवम् । इति ।

तत्रैव **सनत्कुमारसंहितायां** षट्त्रिंशाध्याये मुनीन् प्रति शिववचनम्—

**ईशानस्सर्वविद्यानां भूतानामहमीश्वरः ।**
**ब्रह्माधिपो ब्रह्मणश्च ब्रह्म सोऽहं सदाशिवः** इति ।

**पाद्मे पुराणे** श्रीरामं प्रति अगस्त्यः—

**यं वातमाहुर्यं रुद्रं शाश्वतं परमेश्वरम् ।**
**परात्परतरश्चाहुः परात्परतरं शिवम् ।**
**ब्रह्मणो जनकं विष्णोः वह्नेर्वायोस्सदाशिवम् ।** इति ।

**शिवरहस्ये** दशमाध्याये महालिंगप्रादुर्भावानन्तरं ब्रह्मा—

**नमस्ते देवदेवाय नमस्तेऽनन्तमूर्तये ।**
**नमो लोकैकनाथाय नमस्ते सर्वसाक्षिणे ।**
**न त्वदन्यो महादेव लोकनाथो जगन्मय ।**
**न त्वदन्यस्सुराराध्यो न त्वदन्यो जगत्प्रभुः ।**
**न त्वदन्यो वेदवेद्यो न त्वदन्योऽस्मदिष्टदः ।**
**न त्वदन्यस्सदा सेव्यो न त्वदन्यो जगत्पिता ।**
**त्वमेव भूषणं रम्यं त्वमेव मम जीवनम् ।**
**त्वमेव मम माताऽसि त्वमेव हि पिता मम ।**
**त्वमाराध्यतमश्शंभो मम देवोत्तम प्रभो ।**
**न त्वदन्यपदद्वन्द्वमर्चयामि कृपानिधे ।**
**न शृणोमि कथामन्यां शिवनामविवर्जिताम् ।**
**शिवनामान्यनामानि न वदामि महेश्वर ।**
**शिवलिंगं विहायान्यन्न पश्यामि च सादरम् ।**
**शिवलिंगं विहायान्यद्ध्यातश्च न कदाचन ।**
**अपराधान् क्षमस्वेश मम शंकर सर्वग ।**
**स्वरूपं तव विज्ञातुं शक्यमेव न सर्वथा ।**

वेदैः सर्वैरपि श्रीमन् तव रूपं सदाशिव ।

न ज्ञातं तादृशं रूपं मया ज्ञेयं कथं प्रभो ।

अपराधं क्षमस्वाद्य ममादावंबिकापते ।

अन्येऽपि मत्कृताः सर्वे क्षन्तव्याः परमेश्वर ।

अपराधाः कृपासिन्धो दीनवत्सल शङ्कर ।

प्रणतं पाहि मां शंभो करुणारसवारिधे ।

मां न मुञ्च महादेव पाहि पाहि सदाशिव । इति ।

वायवीये उपरिभागे चतुर्विंशाध्याये श्रीकृष्णं प्रति उपमन्युः—

पञ्चवक्त्रो दशभुजश्शुद्धस्फटिकसन्निभः ।

पञ्चब्रह्मकलादेहो देवस्सकलनिष्कलः ।

शिवमूर्तिः खमारूढश्शान्त्यतीतस्सदाशिवः ।

भक्त्या मयाऽर्चितो मह्यं प्रार्थितं संप्रयच्छतु । इति

ब्रह्मा शिवो मे अस्तु सदाशिवोम् इति श्रुतिः ।

सन्धाता—कर्मफलैः पुरुषान् सन्धत्त इति सन्धाता । स्वस्मिन् परमात्मनि श्रवणादिपरान् योजयतीति वा सन्धाता । प्राणत्वमसि सन्धाता ब्रह्म त्वमसीति श्रुतिः ।

सूर्यस्य वर्चोदाः—जगच्चक्षुषः जगत्प्रकाशनसामर्थ्यदाता । तदुक्तं भगवता—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।

यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् । इति ।

वर्चोदास्त्वमसि सूर्यस्य इति श्रुतिः ।

छान्दोग्ये—

सर्वेभ्यः पाप्मभ्य उदितः—सर्वेभ्यो-धर्माधर्मरूपेभ्यः तत्कार्येभ्यश्च उदितः । असंस्पृष्ट इत्यर्थः । तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः इति श्रुतिः ।

**सत्यसङ्कल्पः**—सत्याः-अवितथाः संकल्पा यस्य सोऽयं सत्यसंकल्पः। न संसारिणामिव अनैकान्तिकफलः संकल्पः ईश्वरस्य। संसारिणो हि अनृतेन मिथ्याफलहेतुना प्रत्यूढत्वात् संकल्पस्य मिथ्याफलत्वम्। **भारूपः सत्यसंकल्प आकाशात्मे**ति श्रुतिः।

**सर्वकर्मा**—सर्वं विश्वं तेन ईश्वरेण क्रियत इति जगत्सर्वं कर्मास्येति सर्वकर्मा। स हि सर्वस्य कर्तेति श्रुतेः।

**सर्वकामः**—सर्वे कामा दोषरहिता अस्येति सर्वकामः। धर्माविरुद्धो भूतेषु कामोऽस्मीति स्मृतेः। ननु कामोऽस्मीति वचनादिह बहुव्रीहिर्न भवति सर्वकाम इति। न—कामस्य कर्तव्यत्वात् शब्दादिवत् पारार्थ्यप्रसङ्गाच्च देवस्य। तस्माद्यथेह सर्वकाम इति बहुव्रीहिः तथा कामोऽस्मीति स्मृत्यर्थो वाच्यः।

**सर्वगन्धः**—सर्वे गन्धाः सुखकरा अस्येति सोऽयं सर्वगन्धः। पुण्यो गन्धः पृथिव्यामिति स्मृतेः। अपुण्यगन्धग्रहणस्य पाप्मसंबन्धनिमित्तत्वश्रवणात्। तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्ध इति श्रुतेः। न च पाप्मसंबन्ध ईश्वरस्य, अविद्यादिदोषानुपपत्तेः।

**सर्वरसः**—पूर्ववत्। रसोऽहमप्सु कौन्तेयेति स्मृतेः।

**सर्वमभ्यात्तः**—सकलं जगदभिव्याप्तः। अततेर्धातोर्व्याप्त्यर्थस्य कर्तरि निष्ठा।

**सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तः** इति श्रुतिः।

**संयद्वामः**—संयद्वामशब्दं श्रुतिः स्वयमेव व्याकरोति—एतं हि सर्वाणि वामान्यभिसंयन्तीति। एतं यथोक्तं आत्मानं हि यस्मात् सर्वाणि वामानि वननीयानि संभजनीयानि शोभनानि अभिसंयन्ति अभिसंगच्छन्तीत्यतः संयद्वाम इत्यर्थः। **एतं संयद्वाम इत्याचक्षते** इति श्रुतिः।

**सत्**—अस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतमेकं निरञ्जनं निरवयवं यदवगम्यते सर्ववेदान्तेभ्यः तत् सदित्युच्यते। तदुक्तं **सूतसंहितायाम्**—

> **यस्य सत्ता जगत्सत्तारूपेणैव विभासते।**
> **यं विना न जगत्तस्मै सदा साक्षात्सते नमः।** इति।

**वासिष्ठेऽपि—**

**ततः स्तिमितगंभीरं न तेजो न तमस्ततम् ।**

**अनाख्यमनभिव्यक्तं सत्किञ्चिदवशिष्यते ।** इति ।

**सर्वत्र सर्वमिदमस्ति यथानुभूतं**

**नो किञ्चन क्वचिदिहास्ति न चानुभूतम् ।**

**शान्तं सदेकमिदमाततमित्थमास्ते**

**सन्त्यक्तशङ्कमपभेदमतस्त्वमास्व ।** इति ।

यथानुभूतं अनुभवानुसारेण सर्वं सर्वत्रास्ति । न चानुभूतं—चशब्दश्चेदर्थे, नचेदनुभूतं तर्हि किञ्चन क्वचिन्नास्ति । शान्तं सद्रूपमेकं वस्तु इत्थमाततं व्याप्तं सत् इदं विश्वमास्ते जगद्रूपेण भाति । अतः कारणात् सन्त्यक्तशंकमपभेदञ्च आस्व, शंकां भेदञ्च विहाय सुखं तिष्ठेत्यर्थः । **सदेव सोम्येदमग्र आसी**दिति श्रुतिः ।

**स्वः**—सद्रूपः । परमार्थसत्यभूत आत्मा । **स्वमपीतो भव**तीति श्रुतिः ।

**स्वे महिम्नि प्रतिष्ठितः**—स्वे-आत्मीये महिम्नि-माहात्म्ये विभूतौ प्रतिष्ठितः । घटादिवदन्यत्राप्रतिष्ठितो भूमा, परिपूर्णत्वात् । तदुक्तं **वासिष्ठे**—

**स्निग्धा स्पष्टा मृदुस्पर्शा महाविस्तारशालिनी ।**

**निबिडा नित्यनीरन्ध्रा क्वचिदस्ति महाशिला ।** इति ।

स्निग्धा, परमप्रेमास्पदत्वात् । स्पष्टा, स्वप्रकाशत्वात् । नित्यनीरन्ध्रा--विजातीयवस्त्वमिश्रितत्वात् । इत्थंभूता महाशिला क्वचिदस्ति । स्वव्यतिरिक्तस्याधारस्य निरूपयितुमशक्यत्वात् स्वमहिमप्रतिष्ठेत्युक्तं भवति । **स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति** इति श्रुतिः ।

**सत्यकामः**—सत्या अवितथाः कामा यस्य सोऽयं सत्यकामः । वितथा हि संसारिणां कामाः, ईश्वरस्तु तद्विपरीतः । अप्रतिहतकाम इत्यर्थः । **सत्यकामस्सत्यसंकल्प** इति श्रुतिः ।

**सेतुः**—सेतुरिव सेतुः, मर्यादापालकः । एषां भूरादीनां कर्तृकर्मफलाश्रयाणां नियन्तेत्यर्थः । **अथ य आत्मा स सेतुर्विधृति**रिति श्रुतिः ।

सकृद्विभातः—सदा विभातः। सर्वदा प्रकाशैकस्वरूपः इत्यर्थः। तदुक्तमाचार्यैः—

दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरं।
अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्त ओम्। इति।
तुरीयरूपं त्रितयावभासकं सदा विभातं स्वयमेव मायया।
अनावृतं वेदनिधिं पुरातनं महानुभावैरनुभूयतामिह। इति लैङ्गवासिष्ठे

सकृद्विभातो ह्येवैष ब्रह्मलोकः इति श्रुतिः।

बृहदारण्यके—

सर्वस्मात्प्रेयः—लोके प्रियत्वेन प्रसिद्धात् पुत्रवित्तादेः प्रेयः प्रियतरम्। प्रेयोऽन्यस्मात्सर्वस्मादिति श्रुतिः।

सत्यस्य सत्यम्—सत्यस्य—पाञ्चभौतिककार्यकरणात्मकस्य संघातस्य बाह्यगिरिनदीसमुद्रादेश्च व्यावहारिकसत्यस्य अधिष्ठानभूतमात्यन्तिकं पारमार्थिकसत्यं ब्रह्मेत्यर्थः। सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यमिति श्रुतिः।

सर्वेषां भूतानामधिपतिः—सर्वेषां भूतानां स्वतन्त्रः।

सर्वेषां भूतानां राजा—उत्कृष्टः।

स वा अयमात्मा सर्वेषां भूतानामधिपतिस्सर्वेषां भूतानां राजेति श्रुतिः।

सर्वानूभूः—सर्वात्मना सर्वमनुभवतीति सर्वानुभूः। अयमात्मा ब्रह्म सर्वानुभूरिति श्रुतिः।

सर्वान्तरः—सर्वस्य बुद्ध्यादेरभ्यन्तरः। य आत्मा सर्वान्तरः इति श्रुतिः।

सर्वेषु भूतेषु तिष्ठन्—सर्वप्रत्यगात्मतया वर्तमानः।

सर्वेभ्यो भूतेभ्योऽन्तरः—नियन्तृत्वेन वर्तमानः। तदुक्तं भगवता—

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति। इति।

ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । इति ।

यस्सर्वेषु भूतेषु सर्वेभ्यो भूतेभ्योऽन्तरः इति श्रुतिः ।

**स्वयञ्ज्योतिः**--आदित्यादिभौतिकज्योतिरनपेक्षतया चक्षुरादिबाह्यकरणानपेक्षतया अन्तःकरणानपेक्षतया च स्वयमेव प्रकाशत इति स्वयञ्ज्योतिः ।

तदुक्तं सूतसंहितायाम्—

आत्माऽयं केवलः स्वच्छः शान्तः सूक्ष्मः सनातनः ।
अस्ति सर्वान्तरः साक्षी चिन्मात्रः सुखविग्रहः ।
अयं स भगवानीशः स्वयञ्ज्योतिः सनातनः । इति ।
अतस्साक्षात्स्स्वयञ्ज्योतिःस्वभावः परमेश्वरः ।
एक एव द्विजा नित्यस्ततोऽन्यत् सकलं मृषा । इति च ।

पराशरोपपुराणे—

आत्मा नाम जडस्यास्य प्रपञ्चस्य प्रकाशकः
स्वयञ्ज्योतिस्सदानन्दस्सत्यस्संपूर्णचिद्घनः । इति ।

अत्रायं पुरुषः स्वयंज्योतिरिति श्रुतिः ।

**स्पृशन्**—त्वगिन्द्रियजन्यवृत्तिप्रकाशत्वार्हः ।

**स्प्रष्टुः स्पृष्टिः**—त्वगिन्द्रियेण घटादिसंबन्धे सति यदा घटादिविषयान्तःकरणवृत्तिर्जायते तां वृत्तिं वृत्तिविषयघटादिकञ्च स्वरूपप्रकाशेन यः प्रकाशयति स स्प्रष्टोच्यते । तस्य स्पृष्टिर्द्विविधा—एका अन्तःकरणवृत्तिरूपा त्वगिन्द्रियजा, अन्या स्प्रष्टुः नित्यचैतन्यज्योतिषः स्वरूपभूता। अत्र स्वरूपभूता स्पृष्टिः स्पृष्टिशब्देनोच्यते । स्पृशन् वै तन्न स्पृशति न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यते इति श्रुतिः ।

**सलिलः**—सलिलवत् स्वच्छस्वभावः । सलिल इव सलिलः ।

सलिल एको द्रष्टाऽद्वैतो भवतीति श्रुतिः ।

सर्वस्य कर्ता—स्पष्टम्। स विश्वकृत् स हि सर्वस्य कर्तेति श्रुतिः।

सर्वस्य वशी। सर्वस्येशानः। सर्वस्याधिपतिः—सर्वस्य-ब्रह्मेन्द्रादेः वशी, सर्वो ह्यस्य वशे वर्तते। न केवलं वशी, सर्वस्येशानः। ईशिता च ब्रह्मेन्द्रप्रभृतीनाम्। ईशितृत्वञ्च कदाचिज्जातिकृतं यथा राजकुमारस्य भृत्यान् प्रति, तच्च मा भूदित्याह - सर्वस्याधिपतिः अधिष्ठाय पालयिता, स्वतन्त्र इत्यर्थः। त्रयमप्येतद्वशित्वादि हेतुहेतुमद्रूपं, यस्मात्सर्वस्याधिपतिः ततोऽसौ सर्वस्येशानः। यो हि यमधिष्ठाय पालयति स तं प्रतीष्ट एवेति प्रसिद्धम्। यस्मात्सर्वस्येशानस्तस्मात्सर्वस्य वशी इति।

स्कान्दे कालिकाखण्डे षटत्रिंशाध्याये भृंगिरिटिः—

नालञ्चालयितुं तृणञ्च पवनश्शंभो त्वदाज्ञां विना
दग्धुं तन्न समर्थ एव दहनश्छेत्तुं न वज्रेण च।
शक्तो गोत्रभिदप्यहो जगदिदं सर्वं त्वदाज्ञावशं
कारुण्याकर भोः पितः पशुपते दोषाकरं पाहि माम् इति। श्रुतिः उक्तक्रमैव।

ब्रह्मोपनिषदि—

सूत्रम्—सर्वजगत्पटारंभकम्। यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् इति श्रुतिः

सर्वभूतेषु गूढः-संवृतः।

सर्वव्यापी—आकाशवत् सर्वत्र व्याप्य वर्तमानः। तदुक्तं श्रीविष्णुपुराणे—

यथा समस्तभूतेषु नभोऽग्निः पृथिवी जलम्।
वायुश्चात्मा तथैवासौ व्याप्य सर्वमवस्थितः। इति।

सूतसंहितायामपि—

असावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ।
नक्षत्राणि च विद्युच्च यच्चास्तित्वेन भासते।
यच्च नास्तितया भाति सर्वं तस्मिन् समाहितम्।
ततः सर्वाश्रयः शंभुः सर्वव्यापी स्वभावतः। इति।

उत्तरगीतायाम्—

दूरस्थोऽपि न दूरस्थः पिण्डस्थः पिण्डवर्जितः ।
विमलस्सर्वदा देही सर्वव्यापी निरञ्जनः । इति ।

दूरस्थः—अज्ञस्य परोक्षवत् स्थितोऽपि न दूरस्थः—परोक्षस्थितो न भवति, किन्तु-सर्वदा अपरोक्ष इत्यर्थः। पिण्डस्थोऽपि-शरीरसंबन्धाध्यासात् परिच्छिन्नवदवभासमानोऽपि पिण्डवर्जितः-शरीरसंबन्धाध्यासरहितः । तत्र हेतुः-बिमलः-निर्मलः, सर्वव्यापी-सर्वत्रपरिपूर्णः, निरञ्जनः स्वयंप्रकाशश्च। एवमात्मा ध्येय इत्यर्थः ।

उपदेशसाहस्रिकायामपि—

आत्मैकस्सर्वभूतेषु तानि तस्मिंश्च खे यथा ।
पर्यगाद्व्योमवत् सर्वं शुक्रं दीप्तिमदिष्यते ।
व्रणस्नाय्वोरभावेन स्थूलदेहं निवारयेत् ।
शुद्धापापतया लेपं लिंगञ्चाकायमित्युत । इति ।

एकोदेवस्सर्वभूतेषु गूढस्सर्वव्यापीति श्रुतिः

सर्वभूताधिवासः—सर्वाणि भूतान्यात्मत्वेन अधिकृत्य वसतीति सर्वभूताधिवासः। ब्रह्माण्डपुराणे अष्टाविंशाध्याये व्यासभुजस्तंभानन्तरं व्यासः—

यस्मिन् सर्वं यस्तु सर्वत्र विश्वे यो वै कर्ता योऽविता योऽपहर्ता ।
नो यस्यादिर्यः समस्तादिरेको नो यस्यान्तो योऽन्तकृत्तं नतोस्मि । इति ।

साक्षी—जाग्रदाद्यवस्थालक्षणस्य साक्ष्यस्य द्रष्टा साक्षी। प्रत्यक्चैतन्यस्वरूपेण अवस्थित इत्यर्थः। तदुक्तं सूतसंहितायाम्—

यस्मिन् जाग्रदवस्थैषा भातीव भवतीव च ।
तं तद्भ्रान्तेरधिष्ठानं वन्दे साक्षिणमीश्वरम् ।
यस्मिन् स्वप्नप्रपञ्चोऽयं भातीव भवतीव च ।
तं तद्भ्रान्तेरधिष्ठानं वन्दे साक्षिणमीश्वरम् ।

यस्मिन् सुषुप्त्यवस्थेयं भातीव भवतीव च।
तं तद्भ्रान्तेरधिष्ठानं वन्दे साक्षिणमीश्वरम्। इति।
यस्समस्तस्य जगतः चेतनाचेतनस्य च।
साक्षी सर्वान्तरश्शम्भुस्तं वन्दे सांबमीश्वरम्। इति।
सकाराय सशब्दार्थस्वरूपाय सदात्मने।
साक्षिणेऽसाक्षिरूपाणां नमस्साधूपकारिणे। इति।

सहजाशक्तिसहितो भृङ्गीशस्सकारस्यार्थः। असाक्षिस्वरूपाणां विषयासङ्गिनां संसारिणां साधूपकारिणे भोगमोक्षप्रदानेन सम्यगुपकर्त्रे।

शब्दहीनाय शान्ताय शब्दलभ्याय साक्षिणे।
सर्वोपाधिविहीनाय स्वयंभानाय वै नमः।

सर्वोपाधिविहीनाय शान्ताय-निरस्तोपाधिकस्वरूपप्रतिष्ठाय अत एव शब्दप्रवृत्तिनिमित्तजात्यादिविरहात् वाचकशब्दहीनाय स्वयंभानाय-स्वरूपप्रकाशेनैव भासमानाय। एवंरूपोऽपि यदा स्वमायातत्कार्यसाक्षी भवति तदा साक्षी चेता केवलो निर्गुणश्चेत्यादिशब्दलभ्याय।

जाग्रत्स्वप्नसुषुप्त्याख्या याऽवस्था भाति देहिनाम्।
अस्या अपि महादेवः साक्षी भिन्नः स्वयंप्रभः। इति।
द्वौ सुपर्णौ शरीरेऽस्मिन् जीवेशाख्यौ सहस्थितौ।
तयोर्जीवः फलं भुङ्क्ते कर्मणो न महेश्वरः।
केवलं साक्षिरूपेण विना भोगं महेश्वरः।
प्रकाशते स्वयं भेदः कल्पितो मायया तयोः।
यथाऽऽकाशो घटाकाशमहाकाशप्रभेदतः।
कल्पितः परचिज्जीवशिवरूपेण कल्पिता।

तत्वतश्चिच्छिवस्साक्षाच्चिज्जीवश्च स्वतस्सदा ।
चिच्चिदाकारतोऽभिन्ना न भिन्ना चित्त्वहानितः ।
चितश्चिन्न चिदाकारात् भिद्यते जडरूपतः ।
भिद्यते चेज्जडे भेदश्चिदेका सर्वदा खलु ।
तर्कतश्च प्रमाणाच्च चिदेकत्वे व्यवस्थिते ।
अपि पापवतां पुंसां विपरीता मतिर्भवेत् ।
श्रौतस्मार्तसमाचारैर्विशुद्धस्य महात्मनः ।
प्रसादादेव रुद्रस्य चिदेकत्वे मतिर्भवेत् ।
चिदेकत्वपरिज्ञानान्न शोचति न मुह्यति ।
अद्वैतं परमानन्दं शिवं याति तु केवलम् ।
शिवस्थाने शरिरेऽस्मिन् स्थितोऽपि स्वात्ममायया ।
दुःखादिसागरे मग्नो मुह्यमानश्च शोचति ।
स्वस्मादन्यतयाभातमीशं स्वेनैव सेवितम् ।
अधिष्ठानं समस्तस्य जगतःसत्यचिद्घनम् ।
अहमस्मीति निश्चित्य वीतशोको भवत्ययम् ।
अस्य चिन्मात्ररूपस्य स्वस्य सर्वस्य साक्षिणः ।
महिमानं यदा वेद परमाद्वैतलक्षणम् ।
तदैव विद्यया साक्षाद्वीतशोको भवत्ययम् । इति ।

पराशरोपपुराणे—

ईश्वरस्सर्वभूतेभ्यो विशिष्टः केवलस्ततः ।
विशिष्टस्सच्चिदानन्दस्साक्षी साक्ष्यविवर्जितः ।
साक्ष्यापेक्षन्तु साक्षित्वं साक्ष्याभावेऽपगच्छति ।
स्वाभाविकन्तु साक्षित्वं कदाचिन्नापगच्छति ।
स्वाभाविकन्तु साक्षित्वमात्मनस्सार्वकालिकम् ।

अपि साक्ष्यमपेक्ष्यैव खलु तद्व्यपदिश्यते । इति ।

कर्तृताऽहंकृतेरेव कर्ताऽहमितिभासनात् ।

नात्मनोऽकर्तृरूपस्य साक्ष्येवात्मा स्वयंप्रभः ।

सर्वदा साक्षिमात्रत्वमेव शुद्धात्मवस्तुनः ।

इति ज्ञानविदः पूर्वमपि नैव हि कर्तृता । इति ।

स्वविलक्षणशून्यस्य स्वयंभातस्य साक्षिणः ।

आविर्भावतिरोभावरहितस्याक्रियस्य च ।

अहमर्थस्य चित्सत्यसुखस्यैव प्रसादतः ।

परविद्याभिजाता चेद्धियैव परं पदम् । इति ।

उपदेशसाहस्रिकायाम्—

व्योमवत्सर्वभूतस्थो भूतदोषैर्विवर्जितः ।

साक्षी चेताऽगुणश्शुद्धो ब्रह्मैवास्मीति केवलः ।

नामरूपक्रियाभ्योऽन्यो नित्यमुक्तस्वरूपवान् ।

अहमात्मा परंब्रह्म चिन्मात्रोऽहं सदाऽद्वयः । इति ।

मदन्यस्सर्वभूतेषु बोद्धा कश्चिन्नविद्यते ।

कर्माध्यक्षश्च साक्षी च चेता नित्योऽगुणोऽद्वयः । इति च ।

महाभारते—

यस्सर्वप्राणिनां देहे साक्षिभूतो व्यवस्थितः ।

अक्षरः क्षरमाणानां तस्मै साक्ष्यात्मने नमः । इति ।

वासिष्ठे—

अकर्तृकमरंगश्च गगने चित्रमुत्थितम् ।

अद्रष्टृकं स्वानुभवमनिद्रस्वप्नदर्शनम् ।

साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि ।

निरिच्छं प्रतिबिंबन्ति जगन्ति मुकुरे यथा ।
एतत्ते राम वक्ष्यामि कार्यकारणतां विना ।
स्थिता ब्रह्मणि विश्वश्रीः प्रतिभामात्ररूपिणी । इति ।

सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्चेति श्रुतिः ।

कैवल्योपनिषदि—

समस्तसाक्षी—वियदादिभूतभौतिकस्य सर्वस्य जगतः साक्षी । समस्तसाक्षिं तमसः परस्तात् इति श्रुतिः ।

स्वराट्—स्वयमेव राजमानः, स्वतन्त्रः । अन्ये तु तत्पारन्त्र्यान्न स्वराजः । सोऽक्षरः परमः स्वराट् इति श्रुतिः ।

सर्वभूतस्थः—भूतभौतिकप्रपञ्चस्य प्रतिभासावस्थायामपि सर्वत्र कारणत्वेनावस्थितः । तदुक्तं भगवता—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ।
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते । इति ।

सूतसंहितायामपि—

सर्वभूतस्थमात्मानं विशुद्धज्ञानदेहिनम् ।
स्वात्मन्यपश्यन् बाह्येषु पश्यन्नपि न पश्यति । इति ।

सर्वभूतस्थमात्मानमिति श्रुतिः ।

सर्वात्मा—सर्वानन्यः । तदुक्तं श्रीविष्णुपुराणे—

बृहत्त्वाद्बृंहणत्वाद्वा यद्रूपं ब्रह्मसंज्ञितम् ।
तस्मै नमस्ते सर्वात्मन् योगिचिन्त्याविकारिणे । इति ।

सर्वात्मा सर्ववित्सर्वः सर्वभूतेष्ववस्थितः ।
यो ह्यचिन्त्योऽव्ययो वापि स वक्ष्यति मया सह । इति च ।

सूतसंहितायाम्—

सर्वेषामात्मभूतोऽहमेव संसारमोचकः ।
मामृते सांबमीशानं मोचकोऽन्यो न विद्यते । इति ।
महादेवस्तु सर्वात्मा सर्ववस्त्ववभासकः ।
सर्वानन्दकरः पूर्णस्सर्वदेवोत्तमोत्तमः । इति च ।

लैंगवासिष्ठे—

एष ब्रह्मैष एवेन्द्र एष एव प्रजापतिः ।
एष धाता विधाता च सर्वात्मा सर्ववर्जितः ।
शिवरुद्रमहेशानशङ्करब्रह्मसंज्ञितः ।
अभिधानाभिधेयादिभावहीनो निरास्पदः । इति ।

उपदेशसाहस्रिकायाम्—

चिन्मात्रज्योतिषा सर्वाः सर्वदेहेषु बुद्धयः ।
मया यस्मात् प्रकाश्यन्ते सर्वस्यात्मा ततो ह्यहम् । इति ।
स्थावरञ्जङ्गमञ्चैव द्रष्टृत्वादिक्रियायुतम् ।
सर्वमक्षरमेवातस्सर्वस्यात्माक्षरं त्वहम् इति च ।

महाभारते—यस्मिन् सर्वं यतस्सर्वं यस्सर्वं सर्वतश्च यः ।
यश्च सर्वमयो देवस्तस्मै सर्वात्मने नमः । इति ।

यत्परं ब्रह्म सर्वात्मेति श्रुतिः ।

सदसद्विहीनम्—कार्यकारणरहितम् । समस्तसाक्षिं सदसद्विहीनमिति श्रुतिः ।
श्वेताश्वतरोपनिषदि—

सर्वाजीवः—सर्वेषामाजीवनमस्मिन्निति सर्वाजीवः ।

सर्वसंस्थः—

सर्वेषां संस्था समाप्तिः प्रलयो यस्मिन्निति सर्वसंस्थः। **सर्वाजीवे सर्वसंस्थे बृहन्ते** इति श्रुतिः।

**स्वर्गः**—निरतिशयानन्दप्रकाशरूपः। परमात्मैवात्र स्वर्गशब्दार्थः। प्रकरणात् तस्यैव सुखरूपत्वात्तदंशत्वाच्चेतरस्य सुखस्य। तथा च श्रुतिः-एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति। **स्वर्गेयाय शक्त्येति** श्रुतिः।

**स्वतत्त्वम्**—सर्वस्यापि प्रपञ्चस्य वास्तवं रूपम्। तदुक्तं **सूतसंहितायाम्**—

**अहमेव परंतत्त्वम्मत्तो जातं जगत् सुराः।**
**मय्येव संस्थितं नष्टं मत्समो नाधिकस्सदा।**
**तस्मादज्ञानमूलस्य संसारस्य क्षयो हरे।**
**आत्मनस्तत्त्वविज्ञानात्तत्त्वं ब्रह्मैव केवलम्।** इति।

**वासिष्ठेऽपि**—

**यदनुत्तमनिष्पन्दं भासकं तेजसामपि।**
**स्वानुभूत्येकमानञ्च यत्तत्वं तदसौ स्थितः।**
**यदेकञ्चाप्यनेकञ्च साञ्जनञ्च निरञ्जनम्।**
**यत्सर्वञ्चाप्यसर्वञ्च यत्तत्वं तदसौ स्थितः।** इति।

**तद्वात्मतत्त्वं प्रसमीक्ष्य देही** इति श्रुतिः।

**सर्वतत्त्वैर्विशुद्धः**—सर्वतत्त्वै-अविद्यातत्कार्यैःविशुद्धः-असंस्पृष्टः। **अजं ध्रुवं सर्वतत्त्वैर्विशुद्धमिति** श्रुतिः।

**सर्वतोमुखः**—सर्वप्राणिगतानि मुखान्यस्य इति सर्वतोमुखः। **प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः** इति श्रुतिः।

**सर्वाननशिरोग्रीवः**—सर्वाण्याननानि शिरांसि ग्रीवाश्चास्येति सर्वाननशिरोग्रीवः।

**सर्वभूतगुहाशयः**—सर्वेषां भूतानां गुहायां बुद्धौ शेत इति सर्वभूतगुहाशयः। **सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः** इति श्रुतिः।

**सत्वस्य प्रवर्तकः**—सत्वस्य-अन्तःकरणस्य प्रवर्तकः-प्रेरयिता । **सत्वस्यैष प्रवर्तकः** इति श्रुतिः ।

**सुनिर्मला शान्तिः**—स्वरूपावस्थानलक्षणा सर्वदृश्यप्रपञ्चोपरमलक्षिता परमपदप्राप्ति रूपा । **सुनिर्मलामिमां शान्ति**मिति श्रुतिः ।

**सहस्रशीर्षा**—सहस्राण्यनन्तानि शीर्षाण्यस्येति सहस्रशीर्षा ।

**सहस्राक्षः**—सहस्राण्यस्य अपरिमितानि अक्षाणि इन्द्रियाण्यस्येति सहस्राक्षः ।

**सहस्रपात्**—सहस्राणि अनन्तानि सर्वप्राणिसंबन्धिनः पादाः चरणाः अस्येति सहस्रपात् ।

**सहस्रशीर्षा पुरुषस्सहस्राक्षस्सहस्रपात्** इति श्रुतिः ।

**सर्वतःपाणिपादम्**—सर्वतः पाणयः पादाश्च अस्येति सर्वतःपाणिपादम् ।

**सर्वतोऽक्षिशिरोमुखम्**—सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत् सर्वतोऽक्षिशिरोमुखम्

**सर्वतश्श्रुतिमत्**—पूर्ववत्

**सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् । सर्वतश्श्रुतिमल्लोके** इति श्रुतिः ।

**सर्वेन्द्रियगुणाभासम्**—सर्वाणि च इन्द्रियाणि श्रोत्रादीनि अन्तःकरणपर्यन्तानि सर्वेन्द्रियग्रहणेन गृह्यन्ते । अन्तःकरणबहिःकरणोपाधिभूतैस्सर्वेन्द्रियगुणैस्संकल्पाध्यवसायश्रवणादिभिर्युक्तवदवभासत इति सर्वेन्द्रियगुणाभासं, सर्वेन्द्रियैर्व्यापृतमिव तज्ज्ञेयमित्यर्थः । कस्मात्कारणात् व्यापृतमिव गृह्यत इति, आह—

**सर्वेन्द्रियविवर्जितम्**—सर्वकरणरहितमित्यर्थः ।

**सर्वस्य प्रभुः**—सर्वस्य जगतः प्रभुः ।

**सर्वस्य शरणम्**—परायणम् ।

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**

**सर्वस्य प्रभुमीशानं सर्वस्य शरणं बृहत् ।** इति श्रुतिः ।

सर्वस्य लोकस्य वशी—समस्तस्य ब्रह्मलोकादेः ब्रह्मादिस्तंबपर्यन्तस्य च वशी। सर्वमस्य वशे वर्तत इत्यर्थः। **वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च** इति श्रुतिः।

सूक्ष्मातिसूक्ष्मः—सूक्ष्मादाकाशादेरप्यतिसूक्ष्मः। तदुक्तं **श्रीविष्णुपुराणे**—

**सूक्ष्मातिसूक्ष्मातिबृहत्प्रमाण गरीयसामप्यतिगौरवात्मन्।** इति।

**सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये** इति श्रुतिः।

सवितुर्वरेण्यम्—सवितुस्सूर्यस्योपास्यम्। सवितुरित्युपलक्षणम्। सर्वप्राणिनामुपास्यमित्यर्थः। **तदक्षरं तत्सवितुर्वरेण्य**मिति श्रुतिः।

संयोगनिमित्तहेतुः—सर्वस्य शरीरसंयोगनिमित्तानां अविद्यादीनां हेतुः कारणम्। **आदिःस संयोगनिमित्तहेतु**रिति श्रुतिः।

स्वचित्तस्थः—स्वबुद्धिसाक्षित्वेन अवस्थितः। अनेनात्मज्ञाने सौलभ्यमुक्तं भवति। यथाग्निरुद्धतशिखः कक्षं दहति सानिलः। तथा चित्तस्थितो विष्णुः योगिनां सर्वकिल्बिषम्। इति **श्रीविष्णुपुराणे**। **देवं स्वचित्तस्थमुपास्य पूर्व**मिति श्रुतिः।

सांख्ययोगाधिगम्यः—सम्यग्ज्ञानं सांख्यं, तदेव योगः प्राप्यस्वीकरणोपायं, तेन सांख्ययोगेनाधिगम्यः प्राप्यः। **आनुशासनिके** सप्तचत्वारिंशाध्याये तण्डिश्शिवं प्रति—

**यद्वै तत् परमं ब्रह्म भूतं भव्यश्च यत्पदम्।**
**यो गम्यःसांख्ययोगेन स भवान्नात्र संशयः।** इति।

**तत्कारणं सांख्ययोगाधिगम्य**मिति श्रुतिः।

संसारमोक्षस्थितिबन्धहेतुः—संसारमोक्षस्थितिबन्धानां हेतुः कारणम्। **संसारमोक्षस्थितिबन्धहेतुः** इति श्रुतिः।

**आरुणिकोपनिषदि—**

समाधिः—अहं ब्रह्मास्मीत्येतद्बुद्धिसमाधिरूपः भेदशून्यः प्रत्यगभिन्नः परमात्मेत्यर्थः। **सन्धिं समाधावात्मन्याचरे**दिति श्रुतिः।

अमृतबिन्दूपनिषदि—

**स्थानत्रयव्यतीतः**—तिष्ठत्येतेष्वात्मेति जागरणादीनि स्थानानि, तेषां त्रयं त्रित्वसंख्या वैशिष्ट्यं तस्माद्व्यतीतो गतः। तुरीय इत्यर्थः। **स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते** इति श्रुतिः।

**सर्वानुग्राहकः**—फलमुद्दिश्य कर्मानुष्ठानवतां भोगप्रदानेन ईश्वरार्पणबुद्ध्या कर्मानुष्ठानवतां श्रवणादिपराणाञ्च सत्वशुद्धिज्ञानोत्पत्तिद्वारा मोक्षप्रदानेन सर्वाननुगृह्णातीति सर्वानुग्राहकः। तदुक्त**मागमिकैः**—

**भुक्तिम्मुक्तिमणूनां स्वव्यापारे समर्थताधानम्।**
**जडवर्गस्य विधत्ते सर्वानुग्रहकश्शंभुः** । इति।

**आदित्यपुराणे** मानवसंहितायां षष्टितमाध्याये देवाः—

**वरेण्याय शरण्याय ब्रह्मण्यायांबिकापते।**
**सर्वानुग्रहकर्ता त्वं ज्ञानदाय नमो नमः** । इति।

**सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवस्तदस्म्यहं वासुदेवः** इति श्रुतिः।

**अथर्वशिरसि**—

**सोमः**—उमया ब्रह्मविद्यास्वरूपिण्या कात्यायन्या सह वर्तमानःसोमः। **अपामसोममममृता अभूम अगन्म ज्योतिरविदाम देवानि**ति श्रुतिः।

अस्यार्थः—अपाम पानं कृतवन्तः अधीतवन्तः श्रवणादिभिरात्मानं साक्षात्कृतवन्त इत्यर्थः। सोमं-उक्तार्थं। अमृताः—मरणहेतुभिरविद्यातत्कार्यसंस्कारैर्वर्जिता इत्यर्थः। अभूम—संपन्नाः। तद्भवने कारणमाहुः-अगन्म-प्राप्तवन्तः, ज्योतिः स्वयंप्रकाशमानमात्मस्वरूपं इदं वयं स्म इति निश्चिता इत्यर्थः। अत्रापि हेतुमाहुः—अविदाम-अविद्म देवान्-अधिष्ठातॄन्। इन्द्रियाश्वान् विषयासक्त्यनासक्तिभ्यां संसारमोक्षहेतून् जितवन्तः इति। **स्कान्दे** सनत्कुमारं प्रति **नन्दिकेश्वरः**—

**उमया सहितं देवं प्रसन्नं परमेश्वरम्।**
**अङ्काधिरोपितस्कन्दहेरंबं वृषवाहनम्।**

व्याघ्रचर्मपरीतांगं सोमं सोमविभूषणम् ।
ध्यायेच्चतुर्भुजं शंभुं चन्द्रमौक्तिकसप्रभम् ।
वरदाभयहस्तञ्च मृगीपरशुधारिणम् । इति ।

**सर्वजगद्धितम्**—सर्वस्य जगतो हितं परमप्रेमास्पदतया आनन्दरूपत्वात् । **सर्वजगद्धितं वा एतदक्षर**मिति श्रुतिः ।

**सूक्ष्मम्**—अणुरूपं, दुःखगम्यमित्यर्थः । तदुक्तं **महाभारते**—

चैतन्यं सर्वतो नित्यं सर्वप्राणिहृदि स्थितम् ।
सर्वातीततरं सूक्ष्मं तस्मै सूक्ष्मात्मने नमः । इति ।
यं हि सूक्ष्मं विचिन्वन्ति परं सूक्ष्मविदो जनाः ।
सूक्ष्मात्सूक्ष्मश्च यद्ब्रह्म तस्मै सूक्ष्मात्मने नमः । इति च ।

**उपदेशसाहस्रिकायाम्**—

सर्वमूर्तिवियुक्तं यत् यथा खं सूक्ष्ममद्वयम् ।
तेनाप्यस्मि विनाभूतं ब्रह्मैवाहं तथाऽद्वयम् । इति ।

यत् सर्वमूर्तिरहितं खं सूक्ष्मं यथा तथा, अद्वयं तेनाप्याकाशेन विनाभूतं ततोऽपि सूक्ष्ममद्वयं ब्रह्मैवाहमस्मीति संबन्धः ।

**सौम्यम्**—सोमो भवानीपतिः, तेनानन्यत्सौम्यम् । प्रियदर्शनं वा, सुखरूपत्वात् । **प्राजापत्यं सूक्ष्मं सौम्यं पुरुष**मिति । श्रुतिः ।

**सुवर्दृक्**—सुवः-निरतिशयसुखं तस्मिन् दृक्-दर्शनं यस्य स सुवर्दृक्; स्वयंप्रकाशमानानन्दात्मेत्यर्थः । **ईशानमस्य जगतः सुवर्दृश**मिति श्रुतिः ।

**संभक्षः**—सम्यक्भक्षो यस्यासौ संभक्षः । अविद्यातत्कार्यभूतस्य प्रपञ्चस्य अधिष्ठानभूते स्वरूपे अन्तर्हितत्वादित्यर्थः । **यः सर्वान् लोकान् संभक्षःसंभक्षयती**ति श्रुतिः ।

**अथर्वशिखायाम्**—

**सोमलोकः**—उमया ब्रह्मविद्यया सह वर्तत इति सोमः, लोकः—स्वयंप्रकाशः, सोमश्चासौ लोकश्चेति सोमलोकः । **स सोमलोक ओङ्कारः** इति श्रुतिः ।

**सर्वदेववेदयोनिः**—सर्वेषां देवान—ब्रह्मादीनां वसुरुद्रादित्यादीनाञ्च, वेदानामृग्यजुस्सामादीनां, योनिः—कारणम्। **सर्वदेववेदयोनि**रिति श्रुतिः।

**सर्वैश्वर्यसंपन्नः**—अणिमादिसमस्तैश्वर्यसंपन्नः। **कारणन्तु ध्येयस्सर्वैश्वर्यसंपन्नस्सर्वेश्वरः** इति श्रुतिः।

**मैत्रायण्याम्**—

**स्थिरः**—सदा एकरूपत्वात् स्थिरः। **स वा एष शुद्धः पूतश्शून्यश्शान्तोऽप्राणो-निरात्मानन्तोऽक्षय्यः स्थिरः** इति श्रुतिः

**स्वतन्त्रः**—सृष्टिस्थितिसंहारेषु अन्यानपेक्षः। **शाश्वतोऽनन्यः स्वतन्त्रः स्वे महिम्नि तिष्ठती**ति श्रुतिः।

**सङ्कल्पाध्यवसायाभिमानलिंगः**—संकल्पो मनोवृत्तिः, अध्यवसायो बुद्धिवृत्तिः अभिमानोऽहंकारवृत्तिः, एते लिंगभूता यस्येति संकल्पाध्यवसायाभिमानलिंगः। नत्वेतेषामेवात्मत्वम्। मतान्तरे तु एते एवात्मानः। तथा हि लोकायतिकभेदाः केचित् मन एव आत्मेति मन्यन्ते। बौद्धास्तु बुद्धिरात्मेति। नैयायिकास्तु अहंकार एवात्मेति। अहंकारस्यापि सुषुप्त्यादिकाले सूक्ष्मरूपेण सत्त्वमंगीकुर्वन्ति। श्रुतिस्तु तेषामात्मत्वनिरसनार्थमेवमुक्तवती संकल्पाध्यवसायाभिमान लिंग इति। तदुक्तं **सूतसंहितायाम्**—

**यत्स्वरूपमविज्ञाय मनस्संकल्पलक्षणम्।**
**आत्मेति मन्वते भक्त्या वन्दे तं मनसः परम्।**
**यत्स्वरूपमविज्ञाय बुद्धिमात्मेति मन्वते।**
**तं वन्दे बुद्धिबोद्धारं बोधरूपमविक्रियम्।**
**यत्स्वरूपमविज्ञाय सर्वप्रत्ययकारणम्।**
**अन्तःकरणमात्मेति मन्वते तं नुमश्शिवम्।** इति।

अन्यत्राप्युक्तम् —

**सङ्कल्पलक्षणस्यास्य मनसस्साक्षिरूपिणम्।**
**चिद्रूपमात्मना पश्यन् कथं बद्ध्येत कर्मणा।**

निश्चयात्मकविज्ञानसाक्षिणं ब्रह्मवित्तमाः ।
चिद्रूपमात्मना पश्यन् कथं बध्येत कर्मणा ।
अहंकारस्य दुःखादिविशिष्टस्य तु साक्षिणम् ।
चिद्रूपमात्मना पश्यन् कथं बध्येत कर्मणा । इति ।

प्रतिपुरु[षं]षः क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिंगः प्रजापतिरिति श्रुतिः ।

कौषीतकिब्राह्मणोपनिषदि—

समः—एकः ब्रह्मादिस्थावरान्तेषु । तदुक्तं भगवता—

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डितास्समदर्शिनः । इति ।
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः । इति च ।

योगयुक्तात्मा-समाहितान्तःकरणः । सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वेषु भूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं यस्य सः सर्वत्र समदर्शनः ।

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति । इति च ।

विष्णुपुराणे—

एको व्यापी समश्शुद्धो निर्गुणः प्रकृतेः परः ।
जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः । इति ।

सूतसंहितायाम्—

स्वशरीरेऽन्यदेहेषु समं निश्चित्य तं दृढम् ।
अथ धीरा न जायन्ते ह्यमृताश्च भवन्ति हि । इति ।

ये नाम प्राज्ञाः स्वकीयशरीरे देहान्तरेषु सोपाधिषु घटशरावादिषु चन्द्रस्वरूपवत् साम्येनावस्थितं सच्चिदानन्दाखण्डैकरसं ब्रह्मात्मतत्वं श्रवणमननादिभिस्साक्षात्कृत्य धीराः- धैर्यवन्तो

दृढनिश्चयाः—संसारभयरहिता वर्तन्ते, ते पुनरेतद्देहपतनानन्तरं न जायन्ते; विद्यया सकलसंसारनिदानभूताविद्यायाः समूलकाषं कषितत्वात्। अपि तु कदाचिदप्यनश्वरब्रह्मात्मका एव भवन्तीति। न केवलं सर्वशरीरेष्वेव समः, अपि तु सर्वतन्त्रेष्वपि सम एवात्मा प्रतिपाद्यते। तदुक्तं **सूतसंहितायां** षडक्षराध्याये षडक्षरस्य मन्त्रस्य प्रत्यगभिन्नं परमशिवस्वरूपं ब्रह्मैव प्रतिपाद्योऽर्थ इत्यर्थवर्णनपूर्वकं—

**अथ किं बहुनोक्तेन शिवादन्यन्न विद्यते।**
**शिवस्वरूपमेवाहुरिदं सर्वं विचक्षणाः।**
**सर्वस्वरूपमज्ञानान् दृश्यते न तु वस्तुतः।**
**एष एव हि मन्त्रार्थःसत्यं सत्यं न चान्यथा।**
**वेदाः सर्वे पुराणानि स्मृतयो भारतं तथा।**
**अन्यान्यपि च शास्त्राणि तथा तर्काश्च सर्वशः।**
**शैवागमाश्च विविधा अगमा वैष्णवा अपि।**
**अन्यागमाश्च विदुषामनुभूतिस्तथैव च।**
**अस्मिन्नर्थे स्वसंवेद्ये पर्यवस्यन्ति नान्यथा।**
**बाध्यबाधकतां यान्ति व्यवहारे परस्परम्।**
**समुद्र इव कल्लोला इति वेदार्थनिश्चयः।** इति।

विवृतश्च **श्रीमद्विद्यारण्यगुरुभिः**—किं बहुना शिवस्वरूपातिरेकेण किमपि वस्तु नास्तीत्याह-अथेति। श्रूयते हि—नेह नानास्ति किञ्चनेति। ननु प्रतीयमानं जगत् कथमपलपितुं शक्यत इत्यत आह—शिवस्वरूपमेवेति। इत्थमद्वितीयपरशिवस्वरूपे यस्य जगतः आरोपात् अन्यत्र अभाव उक्तः तस्य तत्रापि शिवादन्यन्न विद्यते इत्यपोदितत्वात् सर्वस्य जगतः मिथ्यात्वं उक्तं भवति। तदुक्तम्—**नान्यत् कारणात् कार्यं चेत्तत् कुतो भवेत्**। इति।

एवञ्चाविद्यावशादेव दृश्यप्रपञ्चस्यानुभवो न परमार्थत इति षडक्षरवाक्यार्थमुपसंहरति-सर्वेति। उक्तस्यार्थस्य अन्यथात्वशङ्कां वारयति-एष एवेति। श्रुतिस्मृतिपुराणादयोऽपि अस्मिन्नेवार्थे पर्यवस्यन्ति इतोऽप्यन्यथात्वं न शङ्कनीयमित्याह-वेदा इत्यादिना। अत्र हि प्रपञ्चस्य मिथ्यात्वं

जीवपरमात्मनोरेकत्वं तस्य चात्मनः सच्चिदानन्दरूपत्वमद्वितीयत्वञ्चेत्येतावत् मन्त्रार्थत्वेन प्रतिपादितम्। एतस्मिन्नर्थे तावद्वेदान्तानां तदनुसारिस्मृतीतिहासपुराणानाञ्च ऐदंपर्यमविवादम्। अन्येषामपि तीर्थकराणामीदृग्विधव्यवहारमकुर्वतां प्रायेण एतत् अभिमतमेव। तथाहि-तत्र सांख्यपातञ्जलशैवास्तावदात्मनःसंच्चिद्रूपत्वमंगीकुर्वते। यद्यपि व्यवहारदशायां प्रकृतिप्राकृतलक्षणप्रपञ्चस्य सत्यत्वमात्मनानात्वञ्च व्यवहरन्ति। तथापि कैवल्यदशायां स्वरूपप्रकाशव्यतिरेकेण तस्य सर्वस्यानवभासं वर्णयन्ति। आत्मयाथात्म्यज्ञानलक्षणायाः प्रकृतिपुरुषविवेकख्यातेर्हि कैवल्यम्। तथाविधज्ञानोत्तरकालं प्रकृतिप्राकृतात्मकं जगत् सर्वथा अनवभातश्चेत्तदस्तित्वं कथं निश्चीयेत, ज्ञेयसिद्धेर्ज्ञानाधीनत्वात्। आत्मयाथात्म्यज्ञाननिवर्तितमेव तत्। तस्मात् प्रपञ्चस्याज्ञातस्य ज्ञाननिवर्तितत्वेन मिथ्यात्वमवश्यमभ्युपगन्तव्यम्, ज्ञाननिवर्त्यानां शुक्तिरूप्यादीनां मिथ्यात्वदर्शनात्। किञ्च, **कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वा**दिति पातञ्जलं सूत्रम्। अनेन प्रकृतिप्राकृतात्मकं जगत् मुक्तापेक्षया नष्टं तदितरापेक्षया विद्यमानमेवेति पुरुषविशेषापेक्षया तस्य सदसद्भावौ प्रतिपाद्येते। तच्च मिथ्यात्वेऽवकल्पते। पुरुषविशेषमपेक्ष्य एकस्यैव सद्भावासद्भावयोः शुक्तिरूप्यादिषु दर्शनात्। तत्र हि काचकामलादिदोषदूषितनेत्रः पुरुषः शुक्तौ रूप्यसद्भावं प्रतिपद्यते, तदितरस्तु शुक्तिस्वरूपमेव जानन् तत्र रूप्याभावमवगच्छति। नहि पारमार्थिकं घटादि पुरुषविशेषं प्रति सद्भावासद्भावौ प्राप्नोति युगपत्। तस्मात् स्वरूपज्ञानपर्यन्तमनुवर्तमानस्य तत ऊर्ध्वमप्रतिभासमानस्य प्रपञ्चस्य वेदान्तिनामिव सांख्यादीनामप्यविशेषात् मिथ्यात्वं सिद्धम्। अथापि कस्मान्नव्यवहरन्तीति चेत्, श्रोतुबुद्धिसमाधानार्थमिति ब्रूमः। स खलु प्रथमत एव सर्वमिथ्येत्युक्ते कथमेतद्घटत इति व्याकुलितमनस्को भवेत्, तन्माभूदिति सत्यत्वव्यवहार एव केवलम्। आत्मनानात्वस्य जीवेश्वरभेदस्य च मुक्तावनवभातत्वेनैव प्रपञ्चवत् मिथ्यात्वम्। यदि व्यवहारदशायामेक एवात्मेत्यभिधीयते तदा तत्तदुपाधिपरिकल्पनेन जीवेश्वरव्यवस्था सुखदुःखादिव्यवस्था च प्रयाससमर्थनीया स्यादित्यभिप्रायेणैव तन्नानात्ववर्णनम्। मुक्तौ तु वेदान्तिनामिव सांख्यादीनामपि केवलात्मस्वरूपप्रतिभास एव सम्मत इति परमार्थतोऽद्वितीयत्वमात्मनस्सिद्धम्। व्यवहारमात्रे औपाधिकं स्वाभाविकमिति केवलं विवादः। आनन्दरूपत्वञ्च पातञ्जलसूत्रभाष्यकारोदाहृतात् **जैगिषव्योपाख्यानात्** अवगम्यते—जैगिषव्यो हि परमयोगी स्वयोगमहिम्ना अणिमाद्यष्टैश्वर्यं प्राप्य बहून् ब्रह्मसर्गान् संस्मृत्य तत्र सर्वत्रोपरतो दिव्यज्ञानेन साक्षात्कृते स्वात्मतत्त्वे कृतप्रणिधानः परमर्षिभिःयोगैश्वर्यप्राप्तासु अणिमादिषु विभूतिषु किं सुखमनुभूतंत्वयेति पृष्टः

न किञ्चिदिति प्रत्युक्तवान्। अणिमाद्या विभूतिः केवलसुखात्मिका किमेवं वदसि इति पृष्टस्सन्नवोचत्। सत्यं सांसारिकसुखापेक्षया अणिमाद्यष्टैश्वर्यमधिकसुखात्मकम्, कैवल्यपेक्षया तु दुःखात्मकमेवेति। एवञ्चात्यन्तानुकूलवेद्यत्वमात्मन उक्तं भवति। एतदेव आत्मन आनन्दरूपत्वन्नाम। तथापि आनन्दरूप इति न व्यवहरन्ति। विषयसुखेष्वेव आनन्दशब्दव्युत्पत्तेः। इत्थं नैयायिकवैशेषिकादीनामपि मते ज्ञानान्मोक्षः मुक्तस्य च स्वव्यतिरिक्तानात्मलक्षणजगतोऽप्रतिपत्तिस्समानैवेति तैरपि सांख्यादिवत् आत्माद्वितीयत्वं प्रपञ्चमिथ्यात्वञ्च अवश्यमंगीकार्यम्। ब्रह्मेन्द्रादिपदादपि श्रेयस्त्वेन मुक्तेः प्रार्थ्यमानत्वात् अत्यन्तानुकूलवेद्यत्वञ्च। ननु ते च गुणानामत्यन्तोच्छेदो मोक्ष इति मुक्तौ ज्ञानस्यापि अभावमिच्छन्ति। सत्यम्। आत्मस्वरूपचैतन्यस्य अत्यन्तनिर्विकल्पकत्वात् लौकिकज्ञानाभावविषयमेव मुक्तौ ज्ञानराहित्यवर्णनम्। शून्यवादेऽपि अयमेव अभिप्रायो योज्यः। विज्ञानवादिनस्तु क्षणिकज्ञानप्रवाह आत्मेति वर्णयन्ति। तेषां मतेऽपि सांवृतस्य विषयोपप्लवस्य विद्यया निवृत्तौ विशुद्धज्ञानसन्तानोदयो मुक्तिः। उक्तं हि-धीसन्ततिः स्फुरति निर्विषयोपरागा- इति। धीसन्तानो नाम नानाव्यक्तीनां नैरन्तर्येण वर्तनं, तच्च अनुभवदशायां सैव ज्वालेतिवत् एकत्वेनानुभूयमानत्वं, तथा चानुभवत आत्मन ऐक्ये सिद्धे युक्त्या यत् तस्य क्षणभंग समर्थनं तद्बाह्यार्थक्षणिकत्वसाधनाय यत्सत्तत्क्षणिकमितिव्याप्तेःअनैकान्तिकत्वपरिहारेण समर्थनार्थम्। न च प्रयोजनवशात् वस्तुनोऽन्यथात्वं शास्त्रकर्ता कथं प्रतिपादयेदिति शङ्कनीयम्। यतो भाट्टाः स्वप्रकाशविज्ञानाकार एव घटादिर्न तु बाह्य इति बाह्यार्थास्तित्वमपलपतो बौद्धान्निराकर्तुं स्वानुभवसिद्धं ज्ञानस्य स्वप्रकाशत्वं परित्यज्य नित्यानुमेयतामाहुः। तथा सति हि अयं घट इत्यादिज्ञानेषु ज्ञानव्यक्तेरप्रत्यक्षत्वात् प्रत्यक्षत्वेन प्रतीयमानो घटाद्याकारो बाह्यार्थः अस्त्येवेति तेषामभिप्रायः। एवं विज्ञानवादिनोऽपि योऽहमद्राक्षं स एवेदानीं स्पृशामीति पूर्वोत्तरक्षणयोरेकत्वप्रतिसन्धानेन आत्मनः स्थायित्वे स्वानुभवसिद्धे यत् क्षणभंगसमर्थनं तदुक्तप्रयोजनायैवेति अस्मदुक्तार्थतात्पर्यं नैव विहन्यते। मीमांसकानां शास्त्रन्तु भिन्नविषयत्वात् यथोदीरितं आत्मस्वरूपं न विरुणद्धि। तथाहि-वेदाप्रामाण्यवादिनो बौद्धान्निराकृत्य तत्प्रामाण्यं समर्थयमाना भाट्टाः प्राभाकराश्च वेदोक्तं यागहोमादिकं निर्वत्य स्वर्गादौ तत्फलमुपभोक्तुं देहातिरिक्तः कश्चिदात्मा कर्ता भोक्ता अस्तीति, तन्नास्तीति वादिनश्चार्वाकादीन्निराचक्रुः। कर्तृत्वभोक्तृत्वविशिष्टात्मस्वरूपप्रतिपादनस्यैवस्वशास्त्रप्रतिपाद्ययागदानाद्योपयिकत्वात् तावन्मात्रस्वरूपत्वमात्मनस्तैः प्रतिपादितम्। न त्वौपनिषद

कर्तृत्वभोक्तृत्वादिसर्वविक्रियारहितं रूपम्। तदवगमस्य स्वशास्त्रे प्रयोजनाभावात् प्रत्युत अकर्त्रात्मज्ञाने सति कर्मसु अधिकारभङ्गप्रसंगाच्च। तदुक्तं भगवद्भिर्भाष्यकारैः—अनुपयोगादधिकारविरोधाच्चेति। ननु कर्त्रात्मस्वरूपप्रतिपादनं तदरिक्ताकर्त्रात्मस्वरूपास्तित्वनिषेधपरं कस्मान्न भवति। तदस्तित्वाङ्गीकारादिति ब्रूमः। तत्र तावत् भट्टाचार्याः—

इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयश्च बोधः प्रयाति वेदान्तनिषेवणेन। इति।

गुरुमतानुसारिणा भवनाथेनाप्युक्तं अर्थवादाधिकरणे—अथवा न वेदान्तानां चोदनैकवाक्यता अथातो ब्रह्मजिज्ञासेति शास्त्रान्तरस्थितेः इति। तस्मात् मीमांसकानामपि उपनिषदेकसमधिगम्यमद्वितीयंब्रह्मात्मैकत्वमभिमतमेवेति तच्छास्त्रमप्यस्मदुक्तेऽर्थे पर्यवस्यति। एवं शास्त्रान्तरमागमान्तरञ्च अस्मिन्नेवार्थे योजनीयम्। किञ्च सर्वेषामपि वादिनामात्मानात्मविवेकबोधो मुक्तिसाधनत्वेनाभिमतः, स च बोधस्सत्येव चित्तैकाग्र्ये इति तत् सर्वथाभ्युपेयम्, तस्मिंश्च सति यथाभूतं प्रत्यगात्मस्वरूपं स्वप्रकाशत्वेन अवश्यमाविर्भवतीति न तत्र यतनीयमित्याह-अस्मिन्नर्थेस्वसंवेद्य इति। श्रुतेः प्रबलतरप्रमाणत्वात् तत्प्रतिपादितस्यार्थस्य न हेयत्वमित्याह-नान्यथेति। ननु प्रमाणप्रमेयादिषोडशपदार्था इति नैयायिकाः। द्रव्यगुणादयः षट् पदार्था इति वैशेषिकाः। अव्यक्तमहदहंकारप्रभृतीनि चतुर्विंशतितत्वानि इति सांख्याः। शिवशक्तिसदाशिवेश्वरविद्यातत्त्वप्रभृतीनि षट्त्रिंशत्तत्वानि इति शैवाः। एवं बहुधा विप्रतिपन्नानां कथं तेषामेकस्मिन्नर्थे पर्यवसानमित्याशंक्य आह-बाध्यबाधकतामिति। एकस्यैव दृश्यप्रपञ्चस्य प्रमाणप्रमेयादिबहुविधकल्पनया व्यवहारे एव वादिनां परस्परं विप्रतिपत्तिः, जगत्कारणभूते परमेश्वरस्वरूपे सा नास्ति इति इममर्थं प्रत्याययितुं समुद्र इव कल्लोला इति दृष्टान्तोपादानम्। यथा वा आत्मन आकाशस्संभूत इति तैत्तरीयके वियत्प्रमुखा सृष्टिरुक्ता, छान्दोग्ये तु तत्तेजोऽसृजत इति तेजआदिका, सप्राणमसृजत प्राणाच्छ्रद्धामिति क्वचित् सृष्टौ प्राणप्राथम्यम्, एवं स्रष्टव्यविषयायां विप्रतिपत्तौ सत्यामपि स्रष्टुः परमेश्वरस्य एकरूपत्वात् तस्मिन् विप्रतिपत्तिर्नास्ति। उक्तं हि "कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्ते" रित्यत्र सर्गक्रमविवादेऽपि नासौ स्रष्टरि विद्यते इति। एवमत्रापि दृश्यप्रपञ्चव्यवहारविषये यद्यपि

वैमत्यमस्ति, तथापि तत्कारणभूते यथोदीरितस्वरूपे परशिवस्वरूपे विवादो नास्तीति युक्तं तत्र सर्वेषां शास्त्राणां शैवाद्यागमानाञ्च पर्यवसानमित्यर्थः।

तथा वासिष्ठेऽपि—

**ततस्तत्सम्बभूवासौ यद्गिरामप्यगोचरम् ।**
**यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदाञ्च यत् ।**
**विज्ञानमात्रं विज्ञानविदां यदमलं पदम् ।**
**पुरुषः सांख्यदृष्टीनामीश्वरो योगवादिनाम् ।**
**शिवश्शैवागमस्थानां कालः कालैकवादिनाम् ।**
**मध्यं माध्यमिकानाञ्च सर्वं सुसमचेतसाम् ।**
**यत्सर्वशास्त्रसिद्धान्तो यत्सर्वहृदयानुगम् ।**
**यत्सर्वं सर्वगं वस्तु यत्तत्त्वं तदसौ स्थितः ।** इति ।

तत इत्यादि सार्धं श्लोकत्रयमेकं वाक्यं। ततः—तुर्यरूपप्राप्त्यनन्तरं असौ—मुनिर्वीतहव्यः यद्गिरामगोचरं—अभिधावृत्त्या प्रत्येतुं न शक्यते वस्तु अथ च स सर्वैरपि वादिभिः स्वस्वमतानुसारेण शून्यादिशब्दैः व्यपदिश्यते तत्परमात्मस्वरूपं बभूवेत्यन्वयः ।

**सम आत्मेति विद्यात्** इति श्रुतिः ।

**बृहज्जाबालोपनिषदि—**

**सदानन्दम्**—सर्वदा निर्मृष्टनिखिलदुःखानुषंगपरमानन्दस्वरूपं कालत्रयाबाध्यपरमानन्दस्वरूपं वा । **सदानन्दं परमानन्दं शान्तं शाश्वतमिति** श्रुतिः।

**तापनीयोपनिषदि—**

**सर्वस्य द्रष्टा**—चक्षुरादिज्ञानेन्द्रियव्यापारस्य वागादिकर्मेन्द्रियव्यापारस्य प्राणमनोवृत्तीनाञ्च अज्ञानवृत्तेश्च प्रकाशकः । **तमसो द्रष्टा सर्वस्य द्रष्टा** इति श्रुतिः ।

**सर्वस्मादन्यः**—सर्वस्य द्रष्टृत्वादेव सर्वस्मात् दृश्यात् अन्यः - भिन्नः ।

**सर्वस्माद्विलक्षणः**—अनृतजडदुःखरूपात् सर्वस्मात् दृश्याद्विलक्षणः, सच्चिदानन्दरूपत्वात्। **ततस्सर्वस्मादस्मादन्यो विलक्षणः** इति श्रुतिः।

**सर्वस्य साक्षी**—तथा च यस्त्वेतादृशं साक्षिणमात्मत्वेन जानाति स कर्मबन्धरहितो भवति। तदुक्तं **सूतसंहितायाम्**—

**कर्तारं कर्म बध्नाति खलु वेदविदां वराः।**
**ज्ञानिनो नैव कर्तृत्वं कर्तृत्वस्य तु साक्षिणः।**
**कायिकं वाचिकं कर्म मानसं कर्म नान्यथा।**
**तथा सति कथं कर्म भवेत्तत्साक्षिरूपिणः।**
**घटवद्दृश्यभूतस्य शरीरस्य तु साक्षिणम्।**
**चिद्रूपमात्मना पश्यन् कथं बध्येत कर्मणा।**
**इन्द्रियाणां समस्तानां सदा साक्षिस्वरूपिणम्।**
**चिद्रूपमात्मना पश्यन् कथं बध्येत कर्मणा**
**प्राणापानादिभेदेन विभक्तस्य तु साक्षिणम्।**
**चिद्रूपमात्मना पश्यन् कथं बध्येत कर्मणा।** इत्यादि।

**तमसः साक्षी सर्वस्य साक्षी**ति श्रुतिः।

**सर्वस्मात्प्रियतमः**—सर्वस्मात् पुत्रमित्रादेश्चक्षुःश्रोत्रादेश्च प्रियतमः। तच्छेषत्वेन हि तेषां प्रियत्वं न स्वतः। आत्मनस्तु स्वत एव प्रियत्वम्। अतः प्रेमास्पदत्वात् परमानन्दरूपोऽयमात्मेत्यर्थः। **अस्मात् सर्वस्मात्प्रियतम आनन्दं ह्येव**मिति श्रुतिः।

**सर्वस्मात् पुरतस्सुविभातं**—यथा प्रपञ्चवैलक्षण्यमात्मनस्सच्चिदानन्दरूपत्वात् एवं सच्चिदादिशब्दवाच्यत्वात् सच्चिदानन्दस्वरूपेण आत्मनोऽनेकरूपता स्यात्, तन्निवृत्त्यर्थं अस्मात्सर्वस्मात्पुरतस्सुविभातमेकरसमेवेति। अस्मात्सच्चिदादिवाच्यभेदप्रत्ययात् पूर्वमेव सुविस्पष्टं एतद्भेदसाक्षित्वेन भातीति अनृतजडदुःखविरुद्ध आत्मा तथोक्तः। तस्मात् एकरसमेव आत्मस्वरूपमित्यर्थः। **अस्मात् सर्वस्मात् पुरतस्सुविभातमेकरसमेवेति** श्रुतिः।

**स्वयमीश्वरः**—स्वयमेव-ईशितव्यमनपेक्ष्यैव ईश्वरः, स्वतन्त्र इत्यर्थः। नह्यस्य सच्चिदानन्दरूपस्य तुरीयस्य सत्तायां स्फूर्तौ पुरुषार्थत्वे वा किञ्चिदपेक्ष्यमस्तीति स्वातन्त्र्यमस्य सिद्धम्।

**स्वप्रकाशः**—प्रमाणान्तरनैरपेक्ष्येण स्वयमेव प्रकाशत इत्यर्थः। तदुक्तं **ब्रह्मवैवर्ते** पञ्चमाध्याये शिवं प्रति ब्रह्मस्तुतौ—

**नमः स्वयंप्रकाशाय नमो मायाविभेदिने।**
**नमो वेदान्तवेद्याय नमोऽनन्तसुखाय ते।**
**नमः श्रुतिशिरःपद्मषण्डमार्ताण्डमूर्तये।**
**नमः कल्याणनिधये नमो भक्तार्तिनाशिने।** इति।

**अथ तुर्यं ईश्वरग्रासः स्वराट् स्वयमीश्वरः स्वप्रकाशः** इति श्रुतिः।

**सर्वसंहारसमर्थः। सदोज्वलः। स्वात्मबन्धहरः। सर्वदा द्वैतरहितः। सर्वाधिष्ठान सन्मात्रः**—अनुग्रादिनाम्नामर्थकथनावसरे एतानि नामानि व्याख्यातानि। **सर्वसंहारसमर्थः परिभवासहः प्रभुर्व्याप्तस्सदोज्वलः अविद्याकार्यहीनः स्वात्मबन्धहरः सर्वदाद्वैतरहित आनन्दरूपस्सर्वाधिष्ठानसन्मात्रः** इति श्रुतिः।

**सप्तात्मा**—अर्धमात्रासंबन्धित्वेनोक्तैः सोमलोकाद्यैः सप्तात्मेत्यर्थः। तथाहि तृतीयखण्डे-**याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओङ्कारः साऽऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकर्षिर्भास्वती स्मृता सा चतुर्थः पादो भवति** इति।

अस्यार्थः—या-प्रसिद्धा उपनिषत्सु तच्छीलानाञ्च अवसाने-बीजात्मकाक्षरत्रयान्ते अस्य-प्रणवस्य चतुर्थी अर्धमात्रा बिन्द्वादिरूपा सा सोमलोकः—उमया ब्रह्मविद्यया सह वर्तत इति सोमः लोकः स्वयं प्रकाशः, सोमश्चासौ लोकश्चेति सोमलोकः। का सा मात्रेत्याह-ओङ्कार इति। बिन्द्वादीनां स्वयमनुच्चार्यत्वात् तेषां स्थाने पठितोऽयमोङ्कारः। सा सोमलोक ओङ्काररूपः आथर्वणैः-अथर्वणा दृष्टा मन्त्रा आथर्वणाः तैर्मन्त्रैः सह अथर्ववेदः प्रसिद्धः। बिन्द्वादिरूपा ओङ्कार इति सर्वत्र अन्वयः। संवर्तकः, सम्यग्वर्तनं विनाशं जगतः करोतीति संवर्तकः अग्निः-प्रलयकालाग्निः। मरुतः-एकोनपञ्चाशद् वायुगणाः। विराट्-दशाक्षरच्छन्दोरूपा। एकर्षिः-आथर्वणि-

क.ानां प्रसिद्धोऽग्निः, सा च मात्रा भास्वती स्मृता बिन्द्वादिरूपत्वेन तुरीयबोधिका चेति। **सप्तात्मानश्चतुरात्मानश्चतुस्सप्तात्मान**मिति श्रुतिः।

**सच्चिदानन्दपूर्णात्मा**—सत् कालत्रयाबाध्यं, चित् प्रमाणान्तरनैरपेक्ष्येण सर्वदृश्यप्रकाशकतया प्रकाशमानं, आनन्दः निर्मृष्टनिखिलदुःखानुषंगसुखरूपः, पूर्णः-सर्वव्यापी आत्मा देहेन्द्रियमनोबुध्यादिरूपादनात्मवर्गात् विलक्षणः प्रत्यग्रूपः। अनेन अनृतजडदुःखपरिच्छिन्नानात्मभ्यो विलक्षणः अखण्डैकरसः आत्मेत्युक्तं भवति। अत्र यद्यपि सदेवसोम्येदमित्यत्र सद्रूपेण अत्रायं पुरुषः स्वयञ्ज्योतिरित्यत्र चिद्रूपेण विज्ञानमानन्दं ब्रह्मेत्यत्र आनन्दरूपेण पूर्णमदः पूर्णमिदमित्यत्र पूर्णरूपेण आत्मा वा इदमेक एवाग्र आसीत् इत्यत्र आत्मरूपेण पृथक् पृथक् प्रतिपादितः, न तु सच्चिदानन्दादिरूपेण; तथापि सच्चिदानन्दपरिपूर्ण एवात्मेति प्रतिपादयितुं श्रुत्या लाघवात् सदादिरूपेण प्रतिपादितम्। अत एवोपसंहारः कृतः **सूत्रकारैः** आनन्दादयः प्रधानस्येति। तदुक्तं **पराशरोपपुराणे**—

**सर्वेषामेव जन्तूनां महादेवो महेश्वरः।**
**स्रष्टा भर्ता च संहर्ता जगतो ह्यखिलस्य च।**
**तत्समो नाधिकश्चास्ति चेतनः स परात्परः।**
**स एव रुद्रविष्ण्वादिरूपेण बहुधा स्थितः।**
**स एव सत्यविज्ञानपूर्णानन्दैकलक्षणः।** इति।
**असत्यालंबनत्वेन सत्यस्सर्वजडस्य तु।**
**साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः।**
**आनन्दरूपः सर्वार्थसाधकत्वेन हेतुना।**
**सर्वसंबन्धकत्वेन संपूर्णः शिवसंज्ञितः।** इति च।

**सूतसंहितायाम्**—

**नाभिकन्दे प्रविष्टाय नमो हृद्देशवर्तिने।**
**सच्चिदानन्दपूर्णाय नमःसाक्षाच्चिदात्मने।** इति।

**सच्चिदानन्दपूर्णात्मानं परमं ब्रह्म संभाव्य** इति श्रुतिः।

**सिंहः**—षीङ्बन्धन इति धातो रूपं सिं इति। कार्यकारणसंबन्धः स्वस्य सर्वदृश्य संबन्धो वा तदर्थः। तं संबन्धं तत्त्वमस्यादिवाक्यजन्यवृत्त्यारूढस्सन्नसौ परमेश्वरः हन्ति-नाशयति इति सिंह इत्युच्यते। ह इति हनहिंसागत्योरित्येतस्य रूपम। अत्र सिंहः पृषोदरादित्वात् साधुः। **सिंहोऽसौ परमेश्वरः** इति श्रुतिः।

**सत्यस्वरूपः**—अध्यस्तसकलदृश्याधिष्ठानतया स्वयं पारमार्थिकसद्रूपः। **तस्मादेष सत्यस्वरूपो नह्यन्यदस्त्यमेय**मिति श्रुतिः।

**सर्वद्रष्टा। सर्वसाक्षी। सर्वग्रासः। सर्वप्रेमास्पदः। सच्चिदानन्दमात्रः।** द्रष्टृदृश्यान्वयव्यतिरेकेण चिद्रूपत्वं साधयति श्रुतिः—सर्वद्रष्टारमिति। द्रष्टृत्वं नाम दर्शनकर्तृत्वं, अतः कथं चिन्मात्रत्वमित्याशङ्क्य साक्षिसाक्ष्यान्वयव्यतिरेकेण सर्वविक्रियानिरासेन चिन्मात्ररूपत्वमाह-सर्वसाक्षिणमिति। साक्षात्क्रियाव्यवधानमन्तरेण स्वात्मनैव सर्वमीक्षत इति साक्षी, ततः चिन्मात्ररूपत्वम्। अथ साक्षिणस्साक्ष्यसद्भावेन प्राप्तं सद्वितीयत्वं परिहरन् सद्रूपत्वमानन्त्यञ्च आगमापायितदवध्यन्वयव्यतिरेकेणाह-सर्वग्रासमिति। आगमापायवतां कल्पितानां जाग्रदादीनां साक्ष्यरूपाणां सर्वकल्पनाधिष्ठानादिरूपसच्चिन्मात्रव्यतिरेकेणासत्वात् सर्वसंहर्तारमित्यर्थः। अथास्य पुरुषार्थरूपत्वाय दुःखिप्रेमास्पदान्वयव्यतिरेकमाश्रित्य परमानन्दरूपत्वमाह-सर्वप्रेमास्पदं इति। परमप्रेमास्पदत्वात् परमानन्दरूपमित्यर्थः। अथ अन्वयव्यतिरेकचतुष्टयसिद्धं फलमाह-सच्चिदानन्दमात्रमेकरसमिति। मात्रपदं प्रत्येकं संबन्धनीयं सन्मात्रं चिन्मात्रं आनन्दमात्रमिति। सदादिषु स्वगभेदनिरासाय सदादीनम्परस्परभेदाभावादेकरसमित्युक्तं श्रुतौ। अत्र परमेश्वरस्य सर्वसाक्षित्वमुक्तं श्रीविष्णुपुराणे—

> **योऽन्तस्तिष्ठन्नशेषस्य पश्यतीह शुभाशुभम्।**
> **तं सर्वसाक्षिणं विष्णुं नमस्ये परमेश्वरम्।** इति।

**सूतसंहितायाम्**—

> **प्रत्यक्षादिप्रमाणानामगम्यायापरोक्षतः।**
> **प्रतीताय स्वयं सर्वसाक्षिणे महसे नमः।** इति।

विहाय साक्षाद्देहादिमायातन्तुं विवेकतः ।
सर्वसाक्षिणमात्मानं यः पश्यति स पश्यति । इति ।
अतोऽपि मतिमान्नित्यं त्यक्त्वा देहादिगां धियम् ।
सर्वसाक्षिणि चिद्रूपे साक्षात् कुर्यादहम्मतिम् । इति ।

सर्वस्यात्मा सर्वसाक्षी परात्मा
सत्यानन्दोऽयं पुराणः सुपूर्णः । इति च ।

पराशरोपपुराणे—

सर्वसाक्षिणमात्मानं सर्वसंबन्धवर्जितम् ।
साक्षाद्ब्रह्मतया पश्यन् कथं बध्येत कर्मणा । इति ।

आत्मनस्सच्चिदानन्दमात्रत्वमपि तत्रैव निरूपितम्—

अथ साक्षात् परं तत्त्वं समस्तजगदाश्रयम् ।
समासेन प्रवक्ष्यामि शृणुत श्रद्धया सह ।
दृश्यं जगदिदं सर्वं शुक्तिकारजतादिवत् ।
अज्ञानेनैव कस्मिंश्चित् कल्पितं नैव वस्तुतः ।
कल्पितस्य समस्तस्य यदधिष्ठानमास्तिकाः ।
तत् कल्पितपदार्थेन भिन्नलक्षणमेव हि ।
अधिष्ठानमसत्यस्य सत्यमेव न संशयः ।
शुक्तिका व्यवहारे तु सती न रजतोपमा ।
केवलं सत्यता शुक्तौ दृष्टान्तत्वेन गृह्यते ।
न व्यावहारिकत्वञ्च सत्यत्वं तस्य हेतुजम् ।
सर्वसाक्षिस्वरूपस्य प्रागभावाद्यसंभवात् ।
जन्मनाशाद्यभावेन सदा सत्यं परं पदम् ।
कल्पितस्य समस्तस्य भासकत्वात् स्वयम्प्रभम् ।
स्वयंप्रकाशचैतन्यं तद्धि सर्वावभासकम् ।

यस्य शेषतया सर्वमिदं प्रेमास्पदं भवेत् ।
शेषिरूपन्तु तत् साक्षात् सुखं तत् सुखमेव हि ।
ब्रह्मणश्शेषभूतं हि जगत् सर्वं चराचरम् ।
अतश्शेषि परं तत्वं परमानन्दलक्षणम् ।
सत्तया च प्रकाशेन प्रियेण च परं पदम् ।
सत्यं ज्ञानं सुखश्चापि स्वरूपं परवस्तुनः ।
न धर्मो भेदशून्यत्वाद्वस्तुनो भेदधर्मिणः ।
धर्मिणो धर्मिभेदत्वं खलु लोके प्रतीयते ।
नैव भेदस्तयोरस्ति भेदस्यैवानिरूपणात् ।
ययोर्भेदस्तयोर्भेदप्रकाशात् पूर्वमेव तु ।
अभेदेन प्रकाशः स्यात् भेदे भाते भिदा तयोः ।
द्वयोर्भेदो न चेत्तद्धि भेद एकस्य वस्तुनः ।
भेद एकस्य यः प्राप्तः स मिथ्या चन्द्रभेदवत् ।
तस्मात्सत्यचिदानन्दा गुणा न परवस्तुनः ।
स्वरूपमेव, भेदस्तु तस्य मायाविजृंभितः ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ।
इत्याह हि परा शुद्धा श्रुतिस्सत्यार्थवादिनी । इति ।

**सर्वस्रष्टारं सर्वसाक्षिणं सर्वग्रासं सर्वप्रेमास्पदं सच्चिदानन्दमात्रमेकरस**मिति श्रुतिः।

**सच्चिदानन्दघनम्**—सत्पदेन कालत्रयाबाध्यं स्वरूपमुच्यते, चित्पदेन प्रकाशान्तरनिरपेक्षतया प्रकाशमानत्वं, आनन्दपदेन निरतिशयप्रेमास्पदतया सुखस्वरूपत्वं, घनशब्दस्तेषामेव सदादीनां विशेषं बोधयति । तथाहि-सतस्सर्वकार्याधिष्ठानतां, प्रतिबिंबचैतन्यभूतानां सर्वेषां जीवात्मनां बिंबभूतचैतन्यात्मकत्वञ्चैतन्यस्य, ब्रह्मादिस्थावरान्तानामानन्दानामभिन्नतयाऽवस्थितत्व मानन्दस्य, बोधयति। अनेन कारणात्मकं ब्रह्म प्रतिपादितं भवति। **सूतसंहिताया**मेतादृशमात्मतत्त्वं ज्ञातवतः फलमुक्तम्—

तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ।
विदित्वा स्वात्मरूपेण न बिभेति कुतश्चन । इति ।
स शिवस्सच्चिदानन्दः सोऽन्वेष्टव्यो मुमुक्षुभिः ।
स वै जिज्ञासितव्यश्च विना संकोचमास्तिकाः । इति च ।

सच्चिदानन्दघनं ज्योतिरभवत् इति श्रुतिः ।

सर्वस्य पुरतः सुविभातम्—सर्वस्य-कार्यकारणात्मकप्रपञ्चस्य पूर्वमेव सुविभातं स्वयम्प्रकाशत्वात् । सर्वस्य पुरतः सुविभातमद्वैतमिति श्रुतिः ।

सर्वात्मकः—चेतनाचेतनात्मकः । सर्वात्मकत्वं विष्णुपुराणेऽप्युक्तम्—

एकः समस्तं यदिहास्ति किञ्चित्
तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतत्
आत्मस्वरूपं त्यज भेदमोहम् । इति ।

सर्वात्मकमात्मानमन्विच्छेदिति श्रुतिः ।

सच्चिदानन्दरूपः—स्पष्टम् ।

तदुक्तं सूतसंहितायाम्—

आदिमध्यान्तनिर्मुक्तमेकं साक्षाद्विभुं तथा ।
अरूपं सच्चिदानन्दमनन्तं परमेश्वरम् ।
उमासहायमोमर्थं प्रभुं साक्षात् त्रिलोचनम् ।
नीलकण्ठप्रभान्तस्थं ध्यायेन्नित्यमतन्द्रितः ।
एवं ध्यानपरः साक्षान्मुनिर्ब्रह्मात्मविद्यया ।
भूतयोनिं समस्तस्य साक्षिणं तमसः परम् ।
गच्छत्येव न सन्देहः सत्यमुक्तं मया सुराः । इति ।
यतस्तु जातं सकलं विचित्रं सत्यवत् सुराः ।

स सत्योऽसत्यसाक्षित्वात् साक्षित्वाच्चित् सुखं तथा ।
प्रेमास्पदत्वादद्वैतं भेदाभावात् सुरर्षभाः । इति ।
अतिवर्णाश्रमं रूपं सच्चिदानन्दमद्वयम् ।
यो न जानाति सोऽविद्वान् कदा मुक्तो भविष्यति । इति ।
एतत् साक्षात् सच्चिदानन्दरूपं भावाभावाशेषलोकस्य हेतुम् ।
श्रुत्या युक्त्या ब्रह्म जानन्ति मर्त्याः विद्यायोगादेव मुक्ता भवन्ति ।
विद्यावेद्यं ब्रह्म यद्वेदगम्यं तस्याचिन्त्या काचिदस्त्येव शक्तिः ।
शक्त्याऽभिन्नं तद्भवत्यद्वयं सत् सत्यानन्दानन्तबोधैकरूपम् । इति ।

**ब्रह्मैवेदं सर्वं सच्चिदानन्दरूप**मिति श्रुतिः ।

**सद्घनः** । आकाशादिप्रपञ्चस्य स्वतस्सत्तानिराकरणपुरस्सरं अध्यस्तसर्वाधिष्ठानतया पारमार्थिकं कालत्रयाबाधितं सद्रूपं ब्रह्मेति पूर्वमेव वर्णितम् । **सद्घनोऽयं चिद्घन आनन्दघनः** इति श्रुतिः ।

**सन्मात्रः**—कालत्रयेऽपि स्वव्यतिरिक्तवस्त्वन्तरेणापरामृष्टः । **सन्मात्रो नित्यश्शुद्धः** इति श्रुतिः ।

**सिद्धम्**-कार्यकारणात्मकप्रपञ्चस्य सर्वस्याध्यस्तस्याधिष्ठानतया प्रमाणान्तरनिरपेक्षतया अनादित्वात् कारणान्तरनिरपेक्षतया च स्वयंप्रकाशमानत्वात् पूर्वमेव सिद्धम् । **सिद्धं हि ब्रह्मे**ति श्रुतिः ।

**स्वात्मस्थम्**—स्वे महिम्नि प्रत्यगात्मन्येवावस्थितं, न तु तदतिरिक्तमाधारमाधेयं वा किञ्चिदस्तीत्यर्थः । **स्वात्मस्थमानन्दचिद्घन**मिति श्रुतिः । तदुक्तं **वासिष्ठे**—

**गतघनमिव पूर्णमिन्दुबिंबं गतकलनावरणं स्वमेव रूपम् ।**
**स्ववपुषि मुदिते स्वयं स्वसंस्थं स्वयमुदितं स्ववशं स्वयं नयामि ।** इति ।

**सुखरूपः**—परमप्रेमास्पदत्वात् सुखरूपः । **बुद्धस्सुखरूपः** इति श्रुतिः ।

**स्वमहिमस्थः**—स्पष्टम् । **स्वमहिम्नो निरपेक्षः** इति श्रुतिः ।

**सुविस्पष्टः**—स्वप्रकाशत्वात् । **सुविस्पष्टस्तमसः परस्तात्** इति श्रुतिः ।

सदानन्दचिन्मात्रः—स्पष्टम्। **सदानन्दचिन्मात्रमात्मैवाव्यवहार्यम्** इति श्रुतिः।

सुविभातम्—स्पष्टम्। **सुविभातं सकृद्विभातमि**ति श्रुतिः।

**काठकोपनिषदि—**

**हंसः**—हन्ति गच्छतीति हंसः, अविद्यातत्कार्यं विनाशयतीति वा हंसः। **हंसः शुचिषदि**ति श्रुतिः।

**हृदये सन्निविष्टः**—हृदयपुण्डरीके बुद्धौ च सन्निविष्टः सम्यङ्निविष्टः-प्रत्यगात्मत्वेन स्थितः, तत्र अभिव्यक्त इत्यर्थः। **सदा जनानां हृदये सन्निविष्टः** इति श्रुतिः।

**तैत्तरीयके—**

**हरिः**—समूलं संसारं हरतीति हरिः। तदुक्तं **भाष्यकारैः**—तं संसारध्वान्तविनाशं हरिमीडे इति। उक्तञ्च **श्रीविष्णुपुराणे**—

**परं ब्रह्म परं धाम योऽसौ ब्रह्म तथाऽपरम्**
**तमाराध्य हरिं याति मुक्तिमप्यतिदुर्लभाम्।** इति।
**यत्रोतमेतत् प्रोतञ्च विश्वमक्षरसंज्ञके।**
**आधारभूतः सर्वस्य स प्रसीदतु मे हरिः।** इति।
**अहं हरिस्सर्वमिदं जनार्दनः नान्यत्ततः कारणकार्यजातम्।**
**ईदृङ्मनो यस्य न तस्य भूयः भवोद्भवा द्वन्द्वगदा भवन्ति।** इति।
**स्मृते सकलकल्याणभाजनं यत्र जायते।**
**पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम्।** इति।
**हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।**
**अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः।** इति च।

महाभारते— **सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्।**
**येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः।** इति।

वासिष्ठे—**त्रिभुवननलिनीसितारविन्दं तिमिरसमानविमोहदीपमग्र्यम्।**
**स्फुटतरमजरं चिदात्मतत्त्वं जगदखिलार्तिहरं हरिं प्रपद्ये।** इति।

विश्वं नारायणं हरिमिति श्रुतिः।

हिरण्यबाहुः—हिरण्याभरणाद्यलंकृतबाहुः। हिरण्यसदृशसर्वाङ्गो वा, बाहुग्रहणस्योपलक्षणत्वात्। ज्योतिर्मयांगो वा।

हिरण्यपतिः—हरणीयानामर्थानां स्वामी। हिरण्यस्यैव वा पतिः, आत्मीयत्वात्तस्य।

नमो हिरण्यबाहवे हिरण्यपतये इति श्रुतिः।

छान्दोग्ये—

हिरण्मयः—ज्योतिर्मयः।

हिरण्यश्मश्रुः—हिरण्यसदृशानि श्मश्रूणि यस्य स तथा। ज्योतिर्मयश्मश्रुर्वा।

हिरण्यकेशः—

हिरण्मयाः केशा यस्य स तथा। ज्योतिर्मयकेशो वा। तदुक्तं सूतसंहितायां—

सर्वलोकविधातारमीश्वरं हेमरूपिणम्।
हिरण्यश्मश्रुकेशश्च हिरण्मयनखं तथा।
कप्यास्यासनवद्वक्त्रं नीलग्रीवं विलोहितम्।
अगोपालप्रसिद्धं तमम्बिकार्धशरीरिणम्।
सोऽहमित्यनिशं ध्यायेत् सन्ध्याकालेषु वा नरः। इति।

य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः इति श्रुतिः।

हृदयम्—हृदयमात्मेति हृदयमित्यात्मनो नाम। स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयमिति श्रुतिः।

श्वेताश्वतरोपनिषदि—

हरः—अविद्यादेर्हरणात् हरः। शैवे वायवीयसंहितायां पूर्वभागे सप्तदशाध्याये दक्षं प्रति दधीचिवचनम्—

प्रसङ्गात् कौतुकाल्लोभाद्भयादज्ञानतोऽपि वा।
हर इत्युच्चरन् मर्त्यः सर्वपापैः प्रमुच्यते। इति।

आदित्यपुराणे तृतीयाध्याये व्याजेनापि हरनामकीर्तनस्य माहात्म्यमुक्तम्। यमं प्रति चित्रः—

अनेन यत्कृतं पुण्यं मया वक्तुं न शक्यते ।
जानाति भगवानेव विश्वव्यापी महेश्वरः ।
इदं पुण्यमिति ज्ञात्वा.................... ।
आहरप्रहरेत्यादिनामसंकीर्तनं सदा ।
करोति तेन पुण्येन दुष्कृतं भस्मसात्कृतम् ।
पापलेशोऽपि नास्यास्ति इति मे निश्चिता मतिः । इति ।

कूर्मपुराणे षड्विंशाध्याये मार्कण्डेयं प्रति श्रीकृष्णवचनम्—

महादेवाय रुद्राय देवदेवाय लिंगिने ।
नमो वेदरहस्याय नीलकण्ठाय वै नमः ।
विभीषणाय शान्ताय स्थाणवे शिवयोगिने ।
ब्रह्मणे वेदवेद्याय त्रिणेत्राय महीयसे ।
शङ्कराय महेशाय गिरिशाय शिवाय च ।
नमस्कुरुष्व सततं ध्यायस्व मनसा हरम् ।
संसारसागरादस्मादचिरादुत्तरिष्यसि । इति ।

अमृताक्षरं हरः इति श्रुतिः ।

हृदिस्थः—हृदि तिष्ठतीति हृदिस्थः । हृत्पुण्डरीकान्तरसन्निविष्ट इत्यर्थः । हृदा-हृदिस्थमिति श्रुतिः ।

अमृतबिन्दूपनिषदि—

हेतुदृष्टान्तवर्जितम्—हेतुः—तृतीयान्तं पञ्चम्यन्तं वा वचनं कस्यचिदर्थस्य साधकम् । दृष्टान्तः—यस्य कथनेन लौकिकपरीक्षकबुद्धिप्रसादः । ताभ्यां अनुमानं लक्षितम् । तद्वर्जितं अनुमानागम्यमित्यर्थः । निर्विकल्पमनन्तञ्च हेतुदृष्टान्तवर्जितमिति श्रुतिः ।

कौषीतकिब्राह्मणोपनिषदि—

**हिततमः**—परमात्मा, परमानन्दरूपत्वात्। **यं त्वं मनुष्याय हिततमं मन्यसे** इति श्रुतिः।

**मैत्रायण्युपनिषदि—**

**क्षेत्रज्ञः**—क्षेत्रं-शरीरं यथावज्जानातीति क्षेत्रज्ञः। किमिदं यथावत्त्वम्। शरीरस्य विण्मूत्रस्वेदश्लेष्मादिभस्त्रिकारूपत्वं त्वक्चर्ममांसरुधिरमेदोऽस्थिमज्जाद्यशुद्धात्मकत्वं पटलान्ततोयजलबुद्बुदादिवत् प्रतिक्षणं विनाशभयचकितत्वं आध्यात्मिकाधिदैविकाधिभौतिकतापत्रयपरीतत्वाद्-दुःखात्मकत्वं सुषुप्तमूर्च्छादिषु चेतनाराहित्यात् घटकुड्यकाष्ठलोष्टादिसमत्वञ्च। अत एव नित्यशुद्धबुद्धमुक्तात्मस्वरूपभिन्नं एवंरूपं शरीरं करणं भोक्तृभोग्यरूपञ्च अनात्मत्वेन यो जानाति स क्षेत्रज्ञः। तथा च शरीरादिचतुष्टयमनात्मत्वेन त्यक्त्वा तत्साक्षिणि सच्चिदानन्दरूपे परमात्मनि आत्मत्वेन बुद्धिः कार्या श्रेयोऽर्थिभिरिति। अत्र शरीरादिचतुष्टयस्य दुष्टत्वं वैराग्यार्थमस्यामेवोपनिषदि प्रथमप्रपाठके बृहद्रथनामकराजरूपया श्रुत्या "भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिकाविण्मूत्रवातपित्तकफसंघाते दुर्गन्धे निस्सारे अस्मिञ्छरीरे किं कामभोगैः, कामक्रोधलोभमोहभयविषादेत्यादिना" अन्धोदपानस्थो मेक इव अहमस्मिन् संसारे भगवंस्त्वंनो गतिः" इत्यन्तेन ग्रन्थेन वर्णितम्। अयं ग्रन्थः **अनुभूतिप्रकाशिकायां** व्याख्यातः। तथाहि—

> **आधारे करणे दोषानवोचद्भोक्तृभोगयोः।**
> **भोगाधिकरणं देहस्तस्य दोषा इमे स्फुटाः।**
> **अस्थिचर्मस्नायुमज्जामांसशुक्रादयोऽखिलाः।**
> **बीभत्साकारणेष्वेषु मज्जता भुज्यते कथम्।**
> **विण्मूत्रखाते मग्नस्सन् भुङ्क्ते कोऽपि न बुद्धिमान्**
> **पुरा त्वविद्ययाच्छन्नदोषोऽहं भुक्तवांस्ततः।**
> **बालो विमूढो यत्किञ्चिद्द्याद्विष्ठादिकं यथा।**
> **भोगाधिकरणे दोषा आसतां भोगसाधने।**
> **चित्तेऽपि बहवो दोषा वर्तन्ते हि निरन्तरम्।**
> **कामक्रोधौ लोभमोहौ विषादेर्ष्याभयादयः।**

ये सन्त्येतैर्ग्रस्तचित्ते भोगिनः किं सुखं भवेत् ।
श्रूयन्तां भोक्तृदोषाश्च भोक्तारो बहुधा मताः ।
देहाभिमानिनो जीवा उत्तमाधममध्यमाः ।
दरिद्रा अधमा ज्ञेया मध्यमाश्चक्रवर्तिनः ।
गन्धर्वाद्या उत्तमाःस्युस्ते सर्वेऽपि क्षयिष्णवः ।
उत्पन्नध्वंसिनो यद्वत् स्युर्दंशमशकादयः ।
तथैव सर्वभोक्तारो म्रियन्ते स्वायुषः क्षये ।
भोक्ता न म्रियते किन्तु देह एवेति चेच्छृणु ।
देहस्थस्यैव भोक्तृत्वं तन्नश्येद्वपुषा सह ।
दरिद्राणां भोगहेतुर्श्रीभृत्याश्च न सन्त्यथ ।
सुद्युम्नप्रमुखानां ते विद्यन्ते चक्रवर्तिनाम् ।
इति चेत्सन्तु, सर्वेषां मिषतामपि मध्यगः ।
म्रियते चक्रवर्ती तां सन्त्यज्य महतीं श्रियम् ।
अन्तर्धानादिशक्तिश्चेद्गन्धर्वादिषु विद्यते ।
विद्यतान्नाम मृत्युस्तु तेषां शास्त्रेषु कथ्यते ।
भोक्तॄणान्नश्वराणां को भोगः स्यान्मृत्युचिन्तया ।
शयानो भुवि नो कश्चिन्मुमूर्षुर्धनमिच्छति ।
तिष्ठत्वसौ भोक्तृदोषो भोग्येऽपि श्रूयतामयम् ।
अब्धिगिर्यादिकं सर्वं नश्वरं किमुतेतरत् ।
दोषान् सोढ्वा सकृद्भोक्तुः संसारो नश्यतीति चेत् ।
न-भोगैराश्रितस्यास्य संसारावृत्तिदर्शनात् ।
भोगकाले कृतं कर्म भूयो जन्म ददाति हि ।
अन्धकूपे स्थितो भेक इवाहं संसृतौ स्थितः ।
संसारकूपपतितमस्मादुद्धर्तुमर्हसि ।
त्वमेव गतिरस्माकमन्या कापि न विद्यते । इति ।

तत्रैव क्षेत्रज्ञशब्दः प्रत्यगात्मपरतया व्याख्यातः—

**प्रतिदेहन्तु चिन्मात्रो घटाकाश इव स्थितः ।**
**देहं साक्षितया जानन् क्षेत्रज्ञ इति कथ्यते ।** इति ।

ननु "अथ योऽयं शारीर उपद्रष्टे"ति श्रुत्या क्षेत्रज्ञशब्देन शरीराभिमानी शारीर एवोच्यते— श्रुत्यर्थानवबोधविजृंभितमिदम् । तथाहि-न ह्यत्र श्रुत्या जैवं रूपं प्रदर्शनीयमिति प्रवृत्तम् । किन्तर्हि । जीवस्य यत्पारमार्थिकं स्वरूपं सच्चिदानन्दरूपं तत् प्रदर्शनीयमिति । अयमर्थो भाष्य-कारेणैव प्रोक्तः द्वासुपर्णासयुजासखायेत्यस्यामृचि गुहांप्रविष्टाधिकरणन्यायातिदेशनिराकरण-परेण । इत्थमत्र भाष्यं-अपर आह-द्वासुपर्णेति नेयमृगस्याधिकरणस्य सिद्धान्तभावं भजते । पैंगिरहस्यब्राह्मणेन अन्यथा व्याख्यातत्वात् 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वम्, अनश्नन्नन्यो अभिचाकशीत्यनश्नन्नन्योऽभिपश्यति ज्ञः, तावेतौ सत्वक्षेत्रज्ञौ' इति । सत्वशब्दो जीवः क्षेत्रज्ञ शब्दः परमात्मेति यद्युच्यते, तन्न, सत्वक्षेत्रज्ञशब्दयोः अन्तःकरणशारीरयोः प्रसिद्धत्वात्, तत्रैव च व्याख्यातत्वात्—'तदेतत् सत्वं येन स्वप्नं पश्यत्यथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्वक्षेत्रज्ञा' विति । नाप्यस्याधिकरणस्य पूर्वपक्षतां भजते । न ह्यत्र शारीरः क्षेत्रज्ञः कर्तृत्वभोक्तृत्वा-दिना संसारधर्मेणोपेतो विवक्ष्यते । कथन्तर्हि, सर्वसंसाराधर्मातीतो ब्रह्मस्वभावश्चैतन्यमात्रः । **अनश्नन्नन्योऽभिपश्यति ज्ञः** इति वचनात् । "**तत्वमसि**" "**क्षेत्रज्ञश्चापि मां विद्धि**", इत्यादिश्रुतिस्मृतिभ्यश्च । तावता च विद्योपसंहारदर्शनमेवमेवाकल्पते 'तावेतौ सत्वक्षेत्रज्ञौ न ह वा एवंविदि किञ्चन रज आध्वंसते' इत्यादि ॥

मोक्षधर्मे—

**क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे ।**
**तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ।**
**प्रकृतेश्च विकाराणां द्रष्टारं पुरुषं परम् ।**
**क्षेत्रज्ञमाहुर्जीवन्तु कर्तारं शृणु संभृतम् ।** इति ।

उक्तञ्च भगवता—

**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकञ्च पञ्चचेन्द्रियगोचराः ।**

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् । इति ।

प्रकृतश्रुतिस्तु—क्षेत्रज्ञस्संकल्पाध्यवसायाभिमानलिङ्गः इति ।

सखे हा किं कुर्मः [किमिति] कथयाम [श्च] कथ-
मुत्तरामःसंसारं क्व नु च विभवामो वयमिति ।
इतीदृक्चिन्ताब्धौ हृदय विनिमज्ज्यालमनिशं
गुरुं शोकध्वान्ते तरणिमवलंबस्व तरणिम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्याभिनवनारायणेन्द्रसरस्वतीपूज्यपादशिष्य
श्रीमत्परमशिवेन्द्रसरस्वतीविरचिते

वेदान्तनामरत्नसहस्रव्याख्याने स्वरूपानुसन्धानाख्ये

तृतीयः पटलः

ग्रन्थश्च समाप्तः

ओम्

॥ श्रीगुरुमूर्तये नमः ॥ श्री साम्बसदाशिवाय नमः ॥

श्रीः

---

तृतीयखण्डारम्भे मुद्रितस्य पद्यस्य शुद्धं स्वरूपं अन्विष्यापि न लब्धम्-परन्तु एतावदुपलब्धम्-
न भाषन्ते तत्त्वं परमुपदिशन्तोऽपि च पितृस्वसुः पुत्रं दारान् नृपतिमपि शिष्यान् विदधते ।
तदस्मै सर्वस्मै स्फुटमुपदिशन्नेष वदनद्वयानामेतेषां नमयति हि नारायणयतिः ॥

